*Licence No. 644, Dated 9-3-1949.*

VOL. VIII. NO. 1.

# JOURNAL OF
# THE TRAVANCORE UNIVERSITY
# ORIENTAL MANUSCRIPTS LIBRARY




[ ANNUAL SUBSCRIPTION RS. 4 ]

ALLIANCE PRINTING WORKS
Thycaud, Trivandrum.

1954 / 1130

# CONTENTS


1. अरुणस्तम्बाद्रिनाथास्तोत्रम् 1— 4

2. अभिज्ञानशकुन्तलचर्चा 5—28

3. त्रिपुरदहनं यमककाव्यम् by Vāsudeva with a Commentary by Paṅkajākṣa 29—52

4. शिवविलासकाव्यम् by Dāmodara 53—68

5. सीताराघवम् by Rāmapāṇivāda 69—84

6. Preface to Bhīmaparākrama. 85—86

7. A. Note on the new edition of Daṇḍin's Avantisundarī 87—92

8. A Report on the working of the University Manuscripts Library (from 1st April 1953 to the 1st April 1954.) 93—101

॥ श्रीः ॥

# अरुणस्तम्बाद्रिनाथास्तोत्रम्

[NOTE. We have in our collection a large number of stotrās, devotional pieces on deities of well-known temples in several parts of Kerala. One such piece in praise of the Goddess Pārvatī installed in Aruṇastambādri is now selected for publication. This is a stotra of considerable literary merit. We have not been able to identify Aruṇastambādri. The well-known temple of Chengannūr is generally referred to in Sanskrit as S'oṇādri or Aruṇādri. (ചെങ്കുന്നു് Ceṅ-kunnu means red hill, and hence the Sanskrit names S'oṇādri or Aruṇādri). But the name given in the present stōtra is Aruṇastambādri. It is, therefore, doubtful whether this relates to Chengannūr, as stamba cannot be explained in relation to this identification. It is however note-worthy that the Goddess praised is Pārvatī, and that Pārvatī is one of the two chief deities of Chengannūr.

No information is available regarding the authorship of the stotra. We have only one manuscript of this stotra in our collection (No 1218). It is written in Malayalam characters. The manuscript is fairly old.

SURANAD KUNJAN PILLAI]

हस्ताब्जैः सृणिपाशकार्मुकशरानाबिभ्रतीं त्वां नमन्
भक्त्या नूतनबन्धुजीवकलिकाशोभां समभ्यर्थये ।
दद्या हृद्यवतंसचन्द्रसुषमास्वादीयसीं वाङ्मय-
प्रस्तावप्रतिभाझरीं त्वमरुणस्तम्बाद्रिनाथे! शिवे! ॥ १ ॥

सर्वस्मादुपरि स्थितां भगवति! त्वां देवि! याचामहे
शर्वस्वान्तसरोजसौधवलभीझङ्कारिभृङ्गाङ्गनाम् ।
निर्व्यग्रप्रथमानवाङ्मयसुधालीलायितं दीयतां
संवल्गद्करुणाधुरीणमरुणस्तम्बाद्रिनाथे! शिवे! ॥ २ ॥

कल्पक्ष्मारुहमञ्जरि! प्रणमतां पाहि प्रसीद स्फुटं
कस्तेऽन्यः करुणैकपात्रमवनौ मत्तः प्रमुग्धादृते ।
कल्याणीं कवितां प्रयच्छ कबरीमालामहासौरभी-
कल्लोलैकसखीमतन्द्रमरुणस्तम्बाद्रिनाथे! शिवे! ॥ ३ ॥

लक्ष्मीं कामपि बिभ्रतां तव कृपापाङ्गच्छटावर्त्मनां
लक्षीकृत्य पुनीहि पाहि पदयोरानम्रमेनं जनम् ।
लब्धव्यं त्वदुपास्तितः सुरपथादापात्य दिव्यापगा-
लज्जादायि वचः प्रसन्नमरुणस्तम्बाद्रिनाथे! शिवे! ॥ ४ ॥

ह्रीङ्काराम्बुजसौरभीलहरिके! पादाब्जभाजां नृणां
काङ्क्षापूरणकल्पवल्लि! परचित्प्रज्ञासुधादीपिके! ।
प्रेङ्खन्तीं कवितां प्रयच्छ जननि! त्वत्किङ्करास्ते त्रयः
शार्ङ्गी शम्भुरजोऽपि नूनमरुणस्तम्बाद्रिनाथे! शिवे! ॥ ५ ॥

हर्तव्यानि मदन्तरन्धतमसान्यम्ब! त्वया सम्प्रति
व्यक्तव्यक्तमुदित्वरं च भवतु स्वेनैव वाक्प्रातिभम् ।
इत्थङ्कारमुदीर्य दीर्यदपरव्यापारभारं परे!
नित्यं पालय मां प्रपन्नमरुणस्तम्बाद्रिनाथे! शिवे! ॥ ६ ॥

सप्ताश्वोदयहर्षुलाम्बुजवनीसच्छायचिद्वासना-
बद्धात्मा भवदीयमङ्घ्रिकमलं भूयो नमस्याम्यहम् ।
तत्ताटङ्ककुटाङ्गदादिविभवक्षेमङ्करीणां श्रिया-
मुद्यानीकुरु नः सहेलमरुणस्तंम्बाद्रिनाथे! शिवे! ॥ ७ ॥

कल्पक्षोणिरुहायमाणमहिमस्मेरैः कटाक्षाञ्चलै-
रल्पस्वान्तचमत्क्रियाविळसितान् पा(हिंसि)त्वमस्मान् यदि ।
हृष्यद्दिक्करिपुष्कराग्रकलशीरत्नाभिषेकोज्ज्वलन्-
मूर्धानोऽपि भवाम नित्यमरुणस्तम्बाद्रिनाथे! शिवे! ॥ ८ ॥

हत्वा मत्तमनस्तमःकुवलयापीडं द्विषोऽप्यान्तरान्
भित्त्वा संसृतिकंसहिंसनकलासांसारिकोपक्रमः
हृद्यां निर्धुतनिर्धनत्वमयि!* ते कृष्णाः कटाक्षाञ्चलो
बध्नातु श्रियमुत्पतिष्णुमरुणस्तम्बाद्रिनाथे! शिवे! ॥ ९ ॥

लक्ष्मीं स्पर्शय मह्यमाशु नमते मुह्यन्मृडोड्डामरै-
रक्षादानभृशायमानकरुणागर्भैर्दृशोर्विभ्रमैः ।
दुष्कर्मप्रकरच्छिदासु सहकृत्वार्येव येषाम्महा-
मुख्या मञ्जुलहासरीतिमरुणस्तम्बाद्रिशैलात्मजे! (?) ॥ १० ॥

ह्रीङ्काराख्यविशिष्टविष्टरनिविष्टायै नमस्ते वलद्-
गाङ्गाम्भोलहरीनिभैः स्नपय मां मुग्धस्मिताङ्कुरितैः ।
कान् कामान् न लभेय तर्हि कमलाप्यस्मद्वशा संस्तुते
साङ्गीभिः श्रुतिभिः शुभाभिररुणस्तम्बाद्रिनाथे! शिवे! ॥ ११ ॥

---

* क्षुद्रां दुर्विधितां विधूय मयि

सत्तामात्रमुपास्महे तव परन्तत्त्वं परस्मात्परे!
हृद्व्योमन्यमलात्मनां प्रतिफलज्ज्योतिर्विवर्तात्मिके! ।
निर्धून्वन् कृपया तवैव निखिलं मायीयमेतज्जगत्
स्वस्थाद्वैतमयो भवेयमरुणस्तम्बाद्रिनाथे! शिवे! ॥ १२ ॥

कस्मैचिद् घनवैदुषीसुरभिणे सौख्याय मायाभ्रम-
क्षुभ्यन्मानसपारतन्त्र्यगहनग्रन्थिप्रतिद्वन्द्विने ।
अस्माभिः स्पृहयालुभिर्विरचितः सेवाञ्जलिर्गृह्यतां
चित्पाथोजमधूलि तूर्णमरुणस्तम्बाद्रिनाथे! शिवे! ॥ १३ ॥

ळक्षेत्यक्षरयुग्मलोज्ज्वलतरभ्रूमध्यबद्धस्थिति-
न्यक्कुर्वन्निखिलं प्रपञ्चमुदधित्वङ्गत्तरङ्गोपमम् ।
अक्षैरात्मवशंवदैरुपचितः पश्यन् परां प्रक्रियां
त्वत्कां ज्ञप्तिमयो भवेयमरुणस्तम्बाद्रिनाथे! शिवे! ॥ १४ ॥

ह्रीमित्येव जपामि हन्त भवतीमेव स्मरामि प्रभा-
सामग्रीपरिपाटलीकृतजगच्चक्राम्महासुन्दरीम् ।
कैमर्थक्यनिरस्तविश्वविभवः कैवल्यमेवार्थये
नौमि त्वत्पदमेव नित्यमरुणस्तम्बाद्रिनाथे! शिवे! ॥ १५ ॥

यः स्तोत्रं प्रतिवासरं प्रजपति प्रत्यग्रभक्तिग्रहः
शोणस्तम्बगिरौ स्थितां गिरिसुतां नत्वेदमत्यादरात् ।
वाणी तस्य विलालसीति वदने लक्ष्मीः समालिङ्गति
स्वेनैवैनममुष्य मुक्तिरथवा किं किं न बोभूयते ॥ १६ ॥

---

त्वमेवोत्पाद्य स्वयमेवास्य कारणं पृच्छसीत्यर्थः । न खल्ववगच्छामि । अनया वक्रोक्त्या ज्ञातुं न शक्नोमि इति भावः । पुनरपि तमेवार्थं विशदीकर्तुमाह - भो वअस्स इति । वयस्येत्यनेन चिरपरिचितत्वं द्योतयता मत्सम्बन्धिनः सुखस्य दुःखस्य वा त्वत्साक्षिकत्वनिमित्तत्वं सूच्यते । वेतसो वञ्जुलः। कुब्जो जिह्मशरीरः । त्वत्सहितस्य ममेदं व्यसनं त्वन्निमित्तमेव भवितुमर्हति नान्यथेति भावः । कथमिवेति । अहं कारणमित्यर्थात् । इदानीमपि तवाङ्गवैकल्यस्य मत्कारणत्वं न पश्यामि, अतो विस्पष्टमभिधीयताम् इत्यत्राह–एव्वं तुए इत्यादि । एवमिति । ईदृशमृगयातिसेवनेन स्वप्नेऽपि यथा राजकार्यस्मृतिर्न भवेदित्यर्थः । राजकार्याणीत्यनेन कदाचिदप्यनुपेक्षणीयत्वं प्रतिक्षणं प्रत्यवेक्षणीयत्वमनन्यदुर्वहत्वं च द्योत्यते । बहुवचनेन बाहुविध्यं च व्यज्यते । तथाविधराजकार्यपरित्यागेनास्य कर्तव्यमूढत्वं व्यज्यते । तदेव विशदयति – तारिसेसु इति । तादृशेषु दुष्प्रवेशेषु, आकुलप्रदेशेषु विपिनस्थलेषु । आईडप्पदे (से) सु इति टिप्पणकारपाठः । आक्रीडप्रदेशेषु क्रीडास्थानेष्वित्यर्थः । वनचरवृत्तिना व्याधवृत्तिना । भवितव्यं अभूयत । कृत्यप्रत्ययानां कालत्रय-वर्तनाद् भूतकालत्वं, शीलादिप्रत्ययानां वैवक्षिकत्वादर्हार्थत्वाभावश्च । एतद् अनुवादरूपं वाक्यम् । अत आह – यत्सत्यमिति । सत्यमित्यर्थः । प्रत्यह-मित्यनेन मृगयायाश्चिरदिवसप्रवृत्तत्वमुक्तम् । श्वापदा हिंस्रा मृगाः तेषां समुत्सारणैः अपसारणैः संक्षोभिताः पूर्वं व्यायामराहित्याद् व्यथिताः सन्धिबन्धाः ऊरुमूलादिस्थानानि येषां गात्राणां करचरणादीनाम् । अनीशः अशक्तः । मृगया-विक्लवं मृगयानिरुत्सुकम् ।

न नमयितुमिति । न शक्तोऽस्मि नोत्सहे । अत्र हेतुमाह – सहवसतिमुपेत्य, विद्यादानार्थं तत्सन्निधौ चिरकालमुषित्वेत्यर्थः । अनेन मुग्धविलोकनविद्याया

गौरवाच्चिरशिक्षणीयत्वं ध्वन्यते। यैरिति बहुवचनं 'बहुभ्यः श्रोतव्यं बहुशः श्रोतव्यम्' इति न्यायात्। किञ्च तत्तद्विशेषसर्वस्वशिक्षा व्यज्यते च। अनेन तद्विलोकनस्य लोकोत्तरत्वं ध्वन्यते। मुग्धमिति।

'स्वभावालोकितं मुग्धं भावगर्भमपि छलात्।'

इति भावप्रकाशः। कृत इति। बुद्धिमत्यां तस्यामुपदेशः फलित इत्यर्थः। उत्प्रेक्षायां ताद्रूप्यातिशयप्रतीतिर्निमित्तं, लोकोत्तरमनोहरत्वप्रतीतिः फलम्। मृगाणां तथाविधविलोकनेषु प्रियतमाविलोकनमहोत्सवानुभवलाभाद् विदूषक-प्रार्थनया च मृगयां परित्यजामीति भावः। उत्प्रेक्षया स्मरणालङ्कारो द्योत्यते।

राज्ञो मुखं विलोक्येति। प्रतिवचनाभावाद्। अत्तभवं इत्यादि। अनेन हृदयगतस्य वस्तुनो हृद्यत्वं गोप्यत्वं च सूच्यते। अरण्ये रुदितमिति। अन्यचित्ततया मद्वचनं न शृणोतीत्यर्थः। सस्मितमिति सुहृत्समीहितसम्मान-पूर्वरङ्गः। अथ स्वसङ्कल्पितवस्त्वनुगुणं सुहृद्वाक्यमनुमोदमान आह — किमन्य-दिति। मन्त्रयामीति विभक्तिविपरिणामेनानुषज्यते। इति स्थितोऽस्मि इति। इतिर्हेतौ। त्वद्विश्रमार्थं मृगयां परित्यज्य तिष्ठामीत्यर्थः। विश्रान्तेन अपनीतमृगयापरिश्रमेण। अनायासे तथाविधपरिश्रमशून्ये। अत्राम्रसेकपितृ-तर्पणन्यायेनास्मत्साहाय्यानुष्ठानरूपेणैकेनैव प्रयत्नेन तव विश्रमलाभः अस्माक-मभिलषितसिद्धिश्च इत्युभयं कार्यं सिद्धं भवतीति भावः।

अथ साहाय्यप्रार्थनानन्तरं नर्मसचिवः पूर्वमेव राज्ञो हृदयं तत्त्वतो जानन्न-प्यजानन्निव भूत्वा हास्यप्रौढ्युपन्यासेनास्य मदभिप्रायविरोधिनां प्रासङ्गिकवृत्त-संसक्तसल्लापानाम् अवकाशं न ददामीत्याह — किं मोदअखंडिआइम् इत्यादि।

खण्डिका खण्डनम् । सहायेन भवितव्यमित्यनुषज्यते। यत्र वक्ष्यामीति । तत्रेति शेषः । विवक्षितार्थस्य रहस्यत्वाद्विजने कर्तव्यमिति लट्प्रयोगाभिप्रायः। गृहीतः क्षण इति । प्रतिपालितः काल इत्यर्थः । वक्तृविशेषात् क्षणशब्देनामन्त्रणमपि गम्यते ।

अथ नायकस्तामेव विविक्ततां संवादयितुमारभते – कोऽत्र भो इति । वर्तत इति शेषः । दौवारिकः । 'तत्र नियुक्तः' (पा० सू० ४-४-६९) इति ठक्, 'द्वारादीनां च' (पा० सू० ७-३-४) इत्यैजागमः। तावच्छब्दः सम्भ्रमे । इत एव दत्तदृष्टिरित्यनेन कार्यगौरवं प्रकाश्यते । अदृष्टदोषा स्वामिनीति। अन्यत्र प्रायेण दृष्टदोषेति सूच्यते । दोषोऽपि विषयभेदाद् गुणो भवतीति भावः। गुण एवेति । वक्ष्यमाणशकुन्तलालाभहेतुत्वादिति शब्दशक्त्या प्रकाश्यते, महाकविभणितेः कामधेनुत्वात् ।

अनवरतेति । धनुर्ज्येत्यत्र धनुश्शब्दोपादानमारूढत्वावगतये, अन्यत्र केवलो ज्याशब्दः प्रयुज्यते। यथा– 'ज्याबन्धनिष्पन्दभुजेन' इति। आस्फालनमाहननं तेन क्रूरः घनः पूर्वः पूर्वकायो यस्य । अनेनाखेटादविश्रान्तिं द्योतयता गात्रस्य जितश्रमत्वं द्योत्यते ।

'लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः ।'

इत्यादिकथनात् । आस्फालनमाकर्षणं तेन क्रूरपूर्वं कठिनपूर्वकायमित्यन्यः कश्चित् । आस्फालनं ताडनं तेन क्रूरा कठिना पूर्वा प्रकोष्ठं यस्य इति कृष्णाचार्यः । अत एव रविकिरणसहिष्णु, ततश्च स्वेदलेशैरभिन्नं असम्भिन्नं, व्यायतत्वादपचितमपि अलक्ष्यम् अपचितत्वेन कृशत्वेन न लक्ष्यम् । तथा रघुवंशे–

'अपि लङ्घितमध्वानं बुबुधे न बुधोपमः।'

इति। वक्ष्यति च –

'संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते'

इति। मृगयाव्यायामापचयो दुर्ज्ञेय इति यावत्। अन्यत्र धनुर्ज्या-स्थानीयस्यार्थसिद्धस्य दन्तद्वयस्यास्फालनेन गिरितटाघातेन क्रूरो भयङ्करः पूर्वः पूर्वभागो यस्य। व्यायतत्वं यस्येच्छया वनविध्वंसनादिकम्। अन्यत् समानम्। गिरिचर इव नागो मदेन यूथाद् भ्रष्टः परिणतो गजः। प्राणो बलं तेन सारं स्थिरम्।

"प्राणस्तु प्रणवे जीवे जीविते परमात्मनि।
इन्द्रिये वायुभेदेऽपि बलान्तर्यामिणोरपि॥"

इति यादवः। 'सारो बले स्थिरांशे च' इति सिंहः। अत्र प्रतिपादितानां वपुर्गुणानाम् उत्थानोपयोगित्वान्मृगयाया गुणत्वमवसेयम्। उपमानेन जितश्रमत्वादस्य सततमनलसत्वमधृष्यत्वं च व्यज्यते।

गृहीतश्वापदप्रचारमरण्यमित्यनेन वनपरिग्रहो निवेदितः। अत एव वक्ष्यति – 'तेन हि निवर्त्तय पूर्वगतान् वनग्राहिणः' इति। किमद्याप्यवस्थीयते। त्वर्यतामिति भावः। गृहीतप्रचारश्वापदं निरुद्धप्रचारश्वापदमिति केचित्। अवस्थानहेतुमाह – भग्नोत्साह इति। वयस्यसमीहितार्थमेवोत्साहभङ्गः मम तु मृगयासङ्गो भवत्येव इति भावः। अत्र शकुन्तलारागगोपनादवहित्थो भावः। सखे इत्यादरद्योतकेन आमन्त्रणेन त्वया मध्ये न विरन्तव्यमिति प्रार्थना सूच्यते। स्थिरप्रतिबन्धो भवेति। क्षणान्तरे चापल्यात् तद्बुद्धिं नानुसरेः। अहं तु त्वमिव मृगयानिःस्पृहोऽस्मीति भावः। स्वामिनश्चित्तवृत्ति-

मनुवर्तिष्ये इति । स्वामिभृत्यत्वादिति भावः । प्रकाशमाह—प्रलपत्विति । वैधेयो मूर्खः । मृगयाकर्मण्यनभिज्ञोऽयं वराको न प्रमाणमिति भावः । अत आह-ननु प्रभुरेवेति। ननुः संवादे । अन्यद् दृष्टान्तत्वेन नान्वेष्यमित्येवकाराशयः।

मेदश्छेदेति । मेदो धातुविशेषः तस्य छेदः क्षयः तेन कृशोदरं कृशमध्यम्, अत एव लघु लाघवयुक्तं, तत एवोत्थानयोग्यम् उत्थानं पराभियोगः । अत्र वाहटः—

"लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः ।
विभक्तघनगात्रत्वं व्यायामादुपजायते ॥"

इति । सत्त्वानां मृगवराहादीनाम् । अपिः समुच्चये । लक्ष्यते । इङ्गिताकाराभ्यामिति भावः । मृगाणां तथाविधचित्तपरिज्ञानस्यान्यत्रोपयोगः । धन्विनाम् । धनुशब्द उकारान्तोऽप्यस्ति । तस्माद् व्रीह्यादिभ्यश्च (पा० सू० ५-२-११६) इति इनिः। चले चलति लक्ष्ये द्विपदचतुष्पदादौ। सिद्ध्यन्ति। चललक्ष्यवेधने धन्विनः परिचिता भवन्तीत्यर्थः । रघुवंशे च—

'परिचयं चललक्ष्यनिपातने' इत्यादि । अतो मृगयां मिथ्यैव व्यसनत्वेन वदन्ति । 'स्त्रियोऽक्षा मृगया पानम्' इत्याचार्या इति शेषः। ईदृक् हितो हृद्यश्च, विनोदः कालक्षेपोपायः। कुतः कुत्रापि नास्तीत्यर्थः। अत्राह दण्डी — 'व्यायामोत्कर्षादापत्सूपकर्त्ता, दीर्घाध्वलङ्घनक्षमो जङ्घाजवः, कफापचयादारोग्यैकमूल आश्रयाशदीप्तिः मेदोपकर्षादङ्गानां स्थैर्यकार्कश्यलाघवानि शीतोष्णवर्षवातक्षुत्पिपासादिसहत्वं, सत्त्वानामवस्थान्तरेषु चित्तचेष्टितज्ञानं, हरिणगवयादिवधेन सस्यलोपप्रतिक्रिया, वृकव्याघ्रादिघातैः स्थलपथशल्यशोधनं, शैलाटवीप्रदेशानां विविधकर्मक्षमाणामालोकनम्, आटविकवर्गविश्रम्भणम्, उत्साहशक्तिसन्धुक्षणेन प्रत्यनीकवित्रासनम्' इति । अयं तु श्लोकार्थः पूर्वं व्याख्यातप्राय एव ।

अथ सेनापतिप्रोत्साहितमपि नायकमिङ्गिताकाराभ्यामात्मानुकूलमालक्ष्य प्रहृष्टो नर्मसचिवस्तदानुकूल्यमनुवदन् सेनापतिमुपालभते - अत्तभवं इति। प्रकृतिमापन्नः, मृगयाया अत्यन्तं निवृत्तः। आहिण्ड्य गत्वा, तीक्ष्णर्क्षस्य क्रूरभल्लूकस्य। पतितो भवेति शपनम्।

अथ मृगयोद्यतं सेनापतिमाखेटात् सैनिकान् निवर्तयितुं शकुन्तलावलोकनोत्कलिकावशंवदहृदयतया तस्माद्विरन्तुं च नायकः सोपपत्तिकमाह — भद्रसेनेत्यादि। भद्रसेनेति गौणं नाम।

गाहन्तामिति। सर्वत्रामन्त्रणे, कामचारकरणे लोट्। अत्र जातिवाचिना बहुवचनेन कुलततिशब्दाभ्यां च स्वे स्वे पुत्रमित्रकलत्रादयः सर्वे वर्ग्याः संगृहीताः। कूपाज्जलमुदञ्च्य यत्रापवर्ज्यते तन्निपानमुच्यते। तच्च वनपालैः मृगाणां पानार्थं विधीयते। मृगयाश्रान्तानां चतुरङ्गमनुष्याणामप्युपयोगि भवति।

"आहावस्तु निपानं स्यादुपकूपजलाशये।"

इत्यमरः। 'निपानमाहावः' (पा० सू० ३-३-७४) इति निपातनम्। शृङ्गैर्मुहुस्ताडितमिति। महिषा हि जलमवगाह्य दंशानपवारयितुं शृङ्गैस्तज्जलानि पुनःपुनस्ताडयन्ति। छायास्वनातपेषु बद्धानि कदम्बकानि समूहा येनेति विग्रहः। 'निकुरुम्बं कदम्बकं' इत्यमरः। कदम्बकानां बहुत्वविवक्षया मृगकुलस्यान्यपदार्थत्वमुपपद्यते। अतो न पौनरुक्त्यमाशङ्कनीयम्। उद्गीर्णस्यैव मन्थो रोमन्थः। चर्वितचर्वणमित्यर्थः। 'विस्रब्धं कुरुतां वराहवितितिर्मुस्ताक्षतिं पल्वले' इति तु सम्यक् पाठः इति सम्प्रदायविदः। पाठान्तरे तु प्रक्रमभङ्गशङ्काकलङ्कमङ्कुरयेत्। तच्छङ्कां निराकर्तुं 'विस्रब्धं रचयन्तु सूकरवरा मुस्ताक्षतिं पल्वले' इति महिमपाठे तु न खलु विवक्षितार्थसिद्धिः। पल्वल इति। आतपभयाद्वराहाः पल्वलेषु

दिवसमतिवाहयन्तीति प्रसिद्धेः । अत्र विस्रब्धं शृङ्गैर्मुहुस्ताडनेन रोमन्थाभ्यासेन मुस्ताक्षत्या च्चाद्यप्रभृत्यत्यन्तमृगयाविरामाद् महिषादीनाम् अन्तः शङ्कालवोऽपि मा भूदिति सूच्यते । उक्तार्थे हेतुमाह — विश्रान्तिमिति । न 'विश्राम' इति पाठः । 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (पा० सू० ७-३-३४) इति वृद्धिप्रतिषेधात् । शिथिलज्याबन्धमिति विश्रमपूर्वरङ्गः । अस्मदिति पृथक् पदं पञ्चमीबहुवचनम्, विश्रमस्य व्यापारविरामार्थत्वात् । 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' (पा० सू० वा० २-३-२८) । इति पञ्चमी । षष्ठीसमासो वा ।

अथ सेनापतिः स्वामिमतमभ्युपगच्छति — यदिति । प्रभविष्णव इत्यनेन नियोगस्यानतिलङ्घ्यत्वं सूच्यते । तत्तथा करोमि इति शेषः । वनग्राहिणो लुब्धकादयः ।

सैनिकनिषेधहेतुमाह — शमेति । शमप्रधानत्वं स्पर्शानुकूलत्वं च तेजसो गूढत्वे हेतुः । तपोधनेष्विति । 'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ' इति वामनोक्तदिशा सूर्यकान्तेष्विवेत्यर्थात् । अनेन झटिति निग्रहानुग्रहशक्तत्वं द्योत्यते । दाहः प्रकृते लक्षणया निग्रहः, अन्यत्र मुख्य एव । एवं तेजः सामर्थ्यविशेषोऽग्निश्च । अस्तीति प्रतिज्ञा । अत्र हेतुमाह — स्पर्शेति । तदिति दाहात्मकं तेजः । अन्यतेजोभिभवाद् अन्यजनबलात्कारमनःकालुष्यादित्येकत्र, अन्यत्र सूर्यकिरणसम्पातसंक्षोभात् । अनेनात्राभिभवतामेवापराधः न तु तपस्विनामिति द्योत्यते । वमन्ति । तपोधना इति प्रथमान्ततयानुषज्यते । वमनमेकत्र मनःकालुष्यकृतं, अन्यत्र वस्तुस्वभावजन्यम् । अत्र महाभारतवचनम्—

"मन्युप्रहरणा विप्रा न विप्राः शस्त्रपाणयः ।
मन्युना घ्नन्ति ते शत्रून् वज्रेणेन्द्रो यथासुरान् ।"

इति । भवत्यः यवनिकाः । नियोगं प्रतीहाररक्षणम् ।
निर्मक्षिकं मक्षिकाणामभावः । अर्थाभावेऽव्ययीभावः । सर्वेषामप्यनगमादत्यन्तं विजनता सम्पादितेत्यर्थः । यत्र वक्ष्यामीति यत् पूर्वं प्रकृतं तस्यायमवसरः प्राप्तः । तत्रभवता सुखासीनेन भवितव्यं तदा ममापि सुखासीनता सेत्स्यतीत्याह – एदस्सिं इत्यादि ।

अथ सुखासीनो नायकः प्रस्तुतं तदेवावतारयितुमारभते – अनवाप्तेति । अत्र दर्शनीयदर्शनादवाप्तचक्षुःफलोऽहमिति भावः । कथमित्याह – येनेति । येन यस्मात् ।

अथ निर्विण्णो नर्मसचिवो हास्यप्रौढ्या तदुक्तिमन्यथाकारमनुवदति – णं भवं इत्यादि । ननुरनुवादे । यतो भवान् दर्शनीयस्य ममाग्रतो वर्तते अतो मद्दर्शनाद् भवतो दर्शनीयं दृष्टं स्यात्, न तु मया । स्वयं स्वसौन्दर्यदर्शनासम्भवाद् इत्यभिप्रायः । लोकस्वभावोऽयमित्याह – सर्व इत्यादि । सर्वः । जन इति शेषः । कान्तं सुभगम् । अयमनया वचनभङ्ग्या विवक्षितं न जानाति । अतो विस्पष्टमभिधास्ये इत्याह – तामिति । तामित्यनुभवपरामर्शः । आश्रमललामभूताम् । ललामशब्दस्तिलकार्थः । आश्रमालङ्कारभूतामित्यर्थः ।

"ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे ।
श्रेष्ठे भूपापुण्ड्रशृङ्गपुच्छचिह्नाश्वलिङ्गिषु ।"

इति केशवः । त्रैलोक्यसुन्दरीमिति यावत् । त्रैलोक्याधिपतिः सन्नपि देवो दाशरथिरयोध्याधिपतिरित्युच्यते । शकुन्तलामधिकृत्य न तु त्वत्सौन्दर्यमुद्दिश्येति भावः ।

होदु इति । अस्य प्रस्तुतस्य रागानुप्रवेशस्य अवसरं न दास्य इति । अङ्कुरावस्थायामेवोच्छेद्य इति भावः । तत्प्रकारमाह – भो इत्यादि । अद्य वनमध्ये ते प्राज्ञस्य सार्वभौमस्य राजर्षेः । तापसकन्यकेति । अहो खल्वविमृश्यकारितायाः

परा काष्ठेति भावः ।तवैवं न शक्यमित्याह — सखे इत्यादि । अनेन चिर-परिचितत्वं द्योतयता कदाचिदपीदृगनुचितारम्भः त्वया मयि न सम्भाव्य इति प्रकाश्यते । पौरवाणामिति । किं पुनर्ममेति भावः ।

तर्हि किमस्यामभिनिवेशः स्यादित्यत आह—सुरयुवतीति । या मुनेः कण्वस्यापत्यत्वेन प्रसिद्धा सा किल मेनकायाः सम्भूता इत्यर्थः । कथमेतदन्योन्यं घटितमित्यत आह — तदुज्झिताधिगतमिति । तया सुरयुवत्या राजर्षिजत्वात् प्रथममुज्झितं त्यक्तं पश्चात् कारुणिकेन मुनिनाधिगतं परिगृहीतम्। 'पूर्वकाल' (पा० सू० २-१-४९) इत्यादिना समासः । अनेन स्वप्रार्थनोपपत्तिर्दर्शिता । एतद् दृष्टान्तेन हृदयङ्गमीकरोति— अर्कस्येति । अर्कस्य अर्कतरोः प्रथमं वृन्तांद्विश्लिष्टं पश्चादर्कस्योपरि च्युतं पतितम् । अर्कोपरि स्थितं नवमालिका-कुसुमं वर्णाकृतिभ्यां प्रायेणार्ककुसुमं लोको मन्यते तथेमामपीति भावः । अर्ककुसुमस्य परमेश्वरप्रसाधनैकयोग्यत्वाद् महत्त्वं नवमालिकाप्रसूनस्य सकलजन-भोग्यत्वं स्पृहणीयत्वं च प्रसिद्धम् ।

तदानीं प्रस्तुतेनोपायेन रागान्नायकं निवर्तयितुमसमर्थो नर्मसचिवः पुनरन्येनोपायेन सोपहासमारभते— जह कस्स वि इत्यादि । पिण्डखर्जूरैः घनी-भूतखर्जूरफलैः । पिण्डालक्तकवद् । अत्र बहुत्वं तिन्त्रिण्यामेकत्वं च विवक्षितम् । खर्जूराणां माधुर्यतरत्वं तिन्तृणीफलस्याम्लत्वं च लोकप्रसिद्धम् । स्त्रीरत्नपरि-भाविन इति । अनेनान्तःपुरस्त्रीणामेतच्छ्रवणे परिभवो भवतीति सूच्यते । इयमनुपभोग्यत्वाद् अप्रार्थनीयेति भावः ।

न खलु त्वयैवं वक्तव्यमित्याह — न तावदिति । तत् खलु रमणीयमेव यद् भवतो विस्मयमुत्पादयति । अस्य नायकवचसि दृढप्रत्ययो नासीदित्य-निच्छयानुमोदः कृत इति ज्ञेयम् ।

" श्लाघते श्लाघनीयेषु श्लाघमानं च नन्दति।"

इति न्यायेन त्वं मदभिप्रायं नानुसरेः। किन्तु तस्याः लोकोत्तरं सौन्दर्यमस्त्येवेत्याह – वयस्येति। आदरद्योतिकया सम्बुद्ध्या सावधानं श्रवणं प्रार्थ्यते। किं बहुनेति। बहूक्तेन कण्ठशोष एव स्यात्। न त्वशेषगुणगणवर्णनासमाप्तिरिति भावः।

संक्षेपोक्तौ तु यथाभिमतसिद्धिर्भवत्येवेत्याह – चित्र इति। निवेश्य न तु लिखित्वा। प्रथमं बुद्ध्या परिकल्प्य पुनस्तत्प्रकारेण चित्रे परिसमर्प्येत्यर्थः। रूपोच्चयेन विधिना सौन्दर्यमेकत्र संग्रहेण निवेश्य लिखित्वा इति केचिदिच्छन्ति। परिकल्पितसत्त्वयोगा परिकल्पितप्राणसम्बन्धा। नु इत्यनुषज्यते। ननु चित्रनिवेशने ह्यङ्गप्रत्यङ्गसौष्ठवः पञ्चवर्णरचनाचमत्कारश्चैव भवेद् न लावण्यसौकुमार्याद्यतिशयसिद्धिरित्यत आह – रूपोच्चयेनेति। सौन्दर्यसम्पदा। हेतौ तृतीया। सौन्दर्यातिशयसिद्ध्यर्थमित्यर्थः। विधिना प्रथमप्रजापतिना तस्य स्त्रीरत्ननिर्माणे किं दुष्करमिति भावः मनसा तत्र सर्वमुपपद्यत इति भावः। नुशब्दो विकल्पे। स्वर्गस्त्रीप्रतिस्वतया भूलोकालङ्कारभूतत्वेन निर्मिता वा इति भावः। विमर्शदशायां न केवलमस्याः स्वर्गस्त्रीसाम्यमेव भवितुमर्हति, अपि तु तदतिशायित्वमपीत्याह – स्त्रीरत्नेति। अपरा प्राचीनस्त्रीरत्नसृष्टिभ्यो दूरा। अधिकेत्यर्थः। सा या पूर्वं मम नयनचकोरचन्द्रिकायमाना हृदयमुल्लासयति। मे, प्रागप्सरःप्रभृतीनि स्त्रीरत्नान्तराणि दृष्टवत इत्यर्थः। कुत इत्याह – धातुरिति। चतुर्दशभुवननिर्मातुरित्यर्थः। विभुत्वं निर्माणकौशलप्राभवं, वपुश्च। लोकोत्तरमित्यर्थात्। अयमर्थः – तस्यास्तादृशवपुर्निर्माणे वेधसः सामर्थ्यौचित्यं पुनः पुनरालोच्य तस्यैवापरा सृष्टिरियमिति सम्भावयामि। अतः स्रष्ट्रन्तरचिन्ता न कार्या इति। अत्रानुचिन्त्येत्यनन्तरं स्थितस्येत्यर्थसिद्धम्। अतो भिन्नकर्तृकत्वं न शङ्कनीयम्। अत्राह – महिमा –

"कर्तुरुपाधितयोक्ता कृद्वाच्यतया गतान्यगुणतां वा ।
क्त्वो भिन्नकर्तृकत्वभ्रमाय भवति क्रियावचश्च तयोः ॥
पौर्वापर्यं क्रियाणां यद्वास्तवं तदपेक्षिणि ।
क्त्वः पौर्वकाल्ये किं तासां प्राधान्येतरचिन्तया ॥ "

इति । सन्देहोऽत्रालङ्कारः ।

यदीति । यद्येवम् । उक्तानुवादोऽयम् । प्रत्यादेशो निराकृतिः । अत्र क्रियया क्रियावान् लक्ष्यते ।

न केवलमस्यास्तथाविधा रूपसम्पत्तिरेव अपि तु सम्भोगयोग्यः सकलजनमनोहरो यौवनारम्भश्च संप्राप्त इत्याह – अनाघ्रातमिति । पुष्पादीनामाघ्राणादिनिषेधेनाघ्राणादेः प्राप्तकालत्वं सूचितं, निषेधस्य प्राप्तिपूर्वकत्वात् । अतः पुष्पमित्युक्तं न कलिकेति । अनेन मधुसौरभनिर्भरत्वं ध्वन्यते । कररुहैः करतलस्पर्शासहिष्णुत्वात् नखाग्रमात्रैरित्यर्थः । रत्नं संस्कारोल्लिखितं विशिष्टमौक्तिकादिविरचितं हारादि । मधु नवमिति । यद्यपि नवेतरस्यापि मधुनः संस्कारवशान्नवत्वमुत्पद्यते , तथा रघुवंशे – 'पुराणशीधुं नवपाटलं च' इति । तथापि मदकरत्वं पुनर्न तथा भवतीति नवशब्द उपात्तः । अनास्वादितरसम् अपीतशेषमित्यर्थः । अथवा नवमिति प्रत्येकमभिसम्बध्यते , नवं पुष्पमित्यादि । नवं यथास्वमृतुप्रारम्भसम्भूतं, यदि वा इदम्प्रथमतया सम्भूतं, अथवा अदृष्टपूर्वं सन्तानादिसुरतरुप्रभवम् । एवं किसलयरत्नमधूनां सुरतरुप्रभवत्वं द्रष्टव्यम् । पुष्पाद्यारोपणात्तद्रूपस्य क्रमेण सौरभविभूतिः, लावण्यसौकुमार्यप्राचुर्यं, प्रभापटलदुर्निरीक्ष्यत्वं, झटिति मनस्संक्षोभकारिषु प्रथमगण्यत्वं च प्राधान्येन द्योत्यते । पुण्यानां श्रुतिस्मृतिप्रतिपादितानां अग्निष्टोमादीनां दुष्कराणां तपसां वा पुण्यकर्मणाम् अखण्डमननुभूतशेषत्वादविकलम् । क्वचिदनुभूतशेषत्वादिदमुक्तम् । तथा मेघसन्देशे —

"शेषैः पुण्यैः कृतमिव दिवः कान्तिमत् खण्डमेकम्।"

इति। अनेन तद्रूपस्य लोकोत्तरचमत्कारत्वं ध्वन्यते। अपि चेति समुच्चयद्योतको निपातसमुदायः। केचित्तु फलमिव चेति पाठमादृत्य चकार उत्प्रेक्षान्तरद्योतक इति व्याचक्षते। कुत इत्याह — अनघं सकलगुणपूर्णम्। पर्युदासेन नञ्।

"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्॥"

इति पर्युदासलक्षणम्। अत आह — न जान इति। कमिति विमर्शदशायां तद्योग्यः कोऽपि प्रतीतिपथं नावतरतीति भावः। इह लोके, समुपस्थास्यति सम्यगनुसरिष्यति। अपरिपूर्णभाग्यत्वान्न मामिति भावः। टिप्पणकारस्तु ब्रूते — "कं भोक्तारं समुपस्थास्यति, कं पुरुषं भोक्तारं परिकल्प्य समुपस्थापयिष्यति। अन्तर्भावितण्यर्थः इति कं भोक्तारं समुपस्थास्यतीति ओदनं पचतीतिवत् व्यवहारः। विधिः स्वेच्छापरिकल्पितलोकतन्त्र इत्यर्थः। रूपकभेदश्चायम्। उल्लेख इत्यन्ये। औत्सुक्यचिन्तादयो व्यभिचारिणः।

अथापूर्वयोषिद्दर्शनकुतूहलिनो लोकोत्तरतद्रूपवर्णनरसिकस्य चास्य कियानस्यामभिनिवेश इति परिच्छेत्तुकामो नर्मसचिवः सोपहासमाह — तेण हीति। तेन तस्माद्धेतोः यस्मादियं हृद्या प्राप्तयौवना च। लघु शीघ्रम्। इदानीमेवेत्यर्थः। परित्रायतां स्वीकुरुताम्। कुत इत्याह — मा कस्सवीति। कस्यापि तपस्विनः एतदननुरूपस्येत्यर्थः। अननुरूपत्वं दर्शयति — इङ्गुदीतैलमिश्रचिक्कणशीर्षस्य। चिक्कणं जटिलं। मा निपततु बलाद् न घटताम्। लघ्विति यदुक्तं तदशक्यमित्याह — परवतीति। परवती पितृपरतन्त्रा। एवं तर्हि पितृनियोगानुसारेण कर्तव्यमिति चेत्तदपि न शक्यमित्याह — न च सन्निहित इति।

ननु तस्यास्त्वय्यप्यनुरागश्चेत् तदा पितुर्नियोगप्रतिपालनप्रयत्नोऽपि निरुपयोगः। ततः सोऽपि कीदृगिति पृच्छति — अथेति। अथशब्दः प्रश्ने। अन्तरेण उद्दिश्य। 'अन्तरान्तरेण युक्ते' (पा० सू० २-३-४) इति द्वितीया। कीदृशः भवत इत्तान्यथा वेत्यर्थः। दृष्टिरागः दृष्ट्यनुरागः। सर्वे भावाश्चक्षुषि व्यज्यन्त इति न्यायात्।

स दृष्टिरागः प्रणयवत्यामपि तस्यां दुर्लक्ष इत्याह — निसर्गादेवेत्यादि। असमर्थः दम्पतीव्यवहारज्ञानासमर्थ इत्यर्थः। तपस्विकन्याजन इति। अनेन रागानभिज्ञत्वं व्यज्यते। वयोविशेषेण तु —

"उपदिशति कामिनीनां यौवनमद एव ललितानि।"

इति न्यायात् स्वयमेव सदपि तस्मिन्निषिद्धाचरणबुद्ध्या तन्न प्रकाशयेदिति भावः।

मया यानि कानिचित् तच्चेष्टितानि अनुभूतानि ते कथयामीत्याह—अभिमुख इति। ईक्षणं कटाक्षविक्षेपः। अभिमुखे संहृतमित्यनेन अनभिमुखे न संहृतमिति प्रतीयते। अन्यनिमित्तकृतोदयं स्वरसतः प्रवृत्तत्वेनान्तर्नियन्तुमशक्यत्वाद् व्याजेनान्यनिमित्तमुद्भाव्य कृत उदयो यस्य। विनयेति। विनय इन्द्रियाणां नियमनं तेन वारिता वृत्तिः प्रवृत्तिः कटाक्षहासादिरन्या वा। अनेन मदनव्यापाराण निरर्गलप्रसृतत्वात् कथञ्चिदेवोपशम इति प्रतीयते। मदनो रागवृद्धिः। अतः अस्मात्कारणाद्। ईक्षणस्य मय्यभिमुखे संहरणादनभिमुखे विक्षेपणाच्च हसितस्य स्वरसतया प्रवृत्तत्वाद् अन्यनिमित्तत्वेन गूहनाच्च मदनो न विवृतः स्फुटं न प्रकाशितः तथैव न च संवृतश्चासीदित्यर्थः। अत्रौत्सुक्यहर्षलज्जानां शबलता। सात्त्विका भावाः दण्डापूपिकया सिद्धाः।

अथ न विवृतो मदनो न च संवृत इत्युक्तौ परितुष्टस्यापि नायकस्योक्तिभेदेनापरितोषमाशङ्क्य नर्मसचिवस्तमपहसति — किं णु खु इत्यादि। किन्नु खलु सा दृष्टमात्रस्य तवाङ्कमारोहति। शालीनया तयाप्यतः परं किं मदनस्य विवृतत्वं शक्यमिति भावः।

मयाप्येतदेवोक्तम्, अपि च अन्यदप्यनुभूतचरं हृदयसंवादि तस्याश्चेष्टितं ते कथयामीत्याह — मिथ इत्यादि। मिथः प्रस्थाने सह सखीभ्यामाश्रमादुटजगमने शालीनतया। 'शालीनकौपीने अधृष्टाकार्ययोः' (पा० सू०५-२-२०) इति निपातनम्। अत्र लज्जायाः अपि औत्सुक्यतत्कार्यभूतभावगोपनाधःकरणेन भावाविष्करणरूपस्वकार्यप्रकाशनेन प्रबलतरत्वं विरोधद्योतकेनापिशब्देन प्रकाश्यते। कामं पर्याप्तम्। प्रभूतमित्यर्थः। भावः प्रणयः। तत्रभवत्यानया। अनेन प्रशंसा गम्यते। मिथः काममाविष्कृत इति वा समन्वयः। मिथः सखीभ्यामप्यविदित इत्यर्थः।

तत्कथमित्याह— दर्भाङ्कुरेणेति। अकाण्डे क्षत्यनवकाशे। दर्भाङ्कुररहिते मार्ग इत्यर्थः। कतिचिदेव द्वित्राण्येव, न तु पञ्चषाणि। अनेनौत्सुक्यत्वरा सूचिता। स्थिता विवृत्तवदना च आसीदित्यन्वयः। एतदुभयं तद्रागामृतसारास्वादनवशात्। शाखास्वसक्तमपि वल्कलं विमोचयन्तीति। लताभ्यो वल्कलविमोचनापदेशद्वारा दर्शनानुभव इति भावः। द्रुमाणां शाखास्विति बहुवचनद्वयेन दृष्टिपथातिक्रमावधि तद्दर्शनस्य सुलभोपायत्वमुक्तम्। अहो खलु स्त्रीणामशिक्षितपटुत्वं बुद्धेरिति भावः। अनेन तदानीं नायिकादर्शनोत्सुकतया नायकस्य मन्दगतित्वं प्रकाश्यते। अनेन श्लोकेन पूर्वं शकुन्तला सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्तेत्येतद्रसाङ्गत्वेनानुसंहितमिति द्रष्टव्यम्।

अथ शकुन्तलायां गाढाभिलाषं नायकमवेक्ष्य पुरीं प्रति निवर्त्तयितुमशक्यत्वाद् नर्मसचिवस्तमेवानुसरति— जइ इत्यादि। यद्येवम्। तत्रभवत्या पर्याप्ताविष्कृतः खलु भावश्चेदित्यर्थः। तर्हि गृहीतपाथेयो भवसीति। तामेव चिन्तयन् सर्वदा तद्वृत्तान्तैः गृहीतकालक्षेपोपाय इत्यर्थः। किञ्च तपोवने सततवास्तव्यत्वात् तपस्विनामुपद्रवोऽपि न सम्भवतीत्याह— किन्तु इति। अनुपसर्गं निरुपद्रवम्। अतः कारणादस्मदभिलषितमप्यस्तमितं स्याद् इति भावः।

अथ तथाविधो नायकस्तावत् तदनुरागं गोपयित्वा आश्रमस्थित्युपायं चिन्तयति – सखे इति । अस्यामवस्थायां मद्विषया योगक्षेमचिन्ता त्वदायत्तेति भावः । कश्चित् परिज्ञात इति । मृगयाप्रसङ्गादागतो दुष्यन्तस्तपोवने प्रतिवसतीति । तावच्छब्दः सम्भ्रमे । अपदेशेन व्याजेन ।

'अपदेशस्तु लक्षे स्यान्निमित्तव्याजयोरपि ।'

इति यादवः । सकृद् एकवारम् । षष्ठं भागं षड्भागम् । उपहरन्तु । तपस्विन इति शेषः । अन्यद् धान्यषड्भागादन्यत् । भागधेयं षड्भागलक्षणो भागः । निपतति नान्तरीयकतया सिद्ध्यतीति ।

तद् भागधेयं किमित्यत आह – तत् फलं धान्यषड्भागो हिरण्यदशभागश्च । क्षयि, इहैवोपयोगात् । अक्षय्यं, स्वर्गापवर्गप्रदत्वात् ।

अथ नायकाभिप्रायानुगुणं प्रकरणान्तरमारंभते – नैपथ्ये इति । अये इति स्मरणे ।

'अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च ।'

इति हलायुधः । धीरप्रशान्तो धीरो गम्भीरः शान्तः शमप्रधानः । कश्चित्तापस इत्यर्थः । प्रतिद्वारभूमिं द्वारप्रदेशम् ।

अहो इत्यादि । अहो इत्याश्चर्ये । दीप्तिरनभिभवनीयताप्रतीतिहेतुतेजोविशेषः तद्वतोऽपि । अधृष्यस्यापीत्यर्थः । विश्वसनीयता अभिगम्यता । एवं राजान्तरेष्वदृष्टपूर्वत्वाद् अद्भुतत्वप्रतीतिः । नैतदद्भुतमित्याह – उपपन्नमिति । नातिभिन्ने किञ्चिद्भिन्न इत्यर्थः ।

एतद् दर्शयति – अध्याक्रान्तेति । अध्याक्रान्ता अधिगता, वसतिर्वासः वासस्थानं वा । अमुनापि । न केवलं मुनिनापीत्यपिशब्दार्थः । एवमय-

मपीत्यत्रापि द्रष्टव्यम् । आश्रमे । मुनिभिस्तपोऽर्थं स्वीकृतं स्थानमाश्रम इत्युच्यते । सर्वभोग्ये सर्वैश्चतुर्भिराश्रमिभिर्वर्णैश्च भोग्ये उपभुज्यमाने । राज्याश्रम इत्यर्थः । अत्र प्रमाणम् –

'पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ।'

इति । रक्षायोगादिति । राज्ञां वर्णाश्रमरक्षणं तप इति श्रवणात् । अथ तपःसञ्चयेन वसिष्ठविश्वामित्रवदस्य लोकोत्तरं यशः प्रथितमित्याह – अद्यापीति । अद्यापि भूमिगतस्यापि न केवलमिन्द्रसाहाय्यार्थं स्वर्गतस्यैव । अथवा अपिः भिन्नक्रमः अद्य द्यामपि स्पृशतीति । द्यां स्वर्गम् । कथं तस्य द्योस्पर्शनमित्यत आह – चारणद्वन्द्वगीत इति । चारणमिथुनैः प्रबन्धादिरूपेण निबन्धतया गीतः । गीयमान इत्यर्थः । अनेन सुखनिवेशेन स्वरसतः प्रवृत्तत्वं गानस्य ध्वन्यते । वशिनः जितेन्द्रियस्य । एतत् तथाविधमुनित्वसंपादननिमित्तम् । 'अर्थाद्विभक्तिविपरिणाम' इति न्यायेनास्येत्यनुषञ्जनीयम् । पुण्यः पुनातीति पुण्यः । मन्त्रतुल्य इत्यथः । वशिनोऽस्य केवलं राजपूर्वो मुनिरिति शब्दोऽद्यापि मुहुर्द्यां स्पृशतीत्यन्वयः । केवलं राजपूर्वः राजशब्दपूर्वः । राजमुनिरित्यर्थः । एतावानेव मुनिभ्यो भेदः, अन्यत्सर्वं समानमिति भावः । तस्माद्वयमपि मुनिरेवेति भावः । यावद् अनेन मुनिजनेष्विवास्मिन्नपि विस्रम्भागमनदर्शनव्यवहारौचित्यमित्यासूत्रितम् । अत्र हर्षो भावः ।

अथ द्वितीयेनापि प्रथमोक्तिशेषतया स्वार्थसिद्ध्यनुगुणं राजा वर्ण्यते– अयमिति । वलभित्सख इति निरतिशयपराक्रमशालित्वं, पार्थिव इत्यशेषपृथिवीपतित्वं, दुष्यन्त इति नामग्रहणेन तत्तदीप्सिताचरणाद् मुनिजनानामपि निरतिशयवात्सल्यं च ख्याप्यते । तेन सोऽयमिति प्रत्यभिज्ञा समुत्थाप्यते ।

एतदेव विवृणोति — नैतच्चित्रमिति । उदधिश्यामसीमां निश्शेषाम् । अनेनास्य मण्डलना(भि?थ)त्वमुक्तम् । अत एवाह – एक इति । अनन्यभूपालः असहायश्च । अत्र हेतुर्नगरपरिघेति । कृत्स्नामित्यनेन स्वमण्डलमिव परमण्डलान्यप्यभेदेन साधु रक्षितवानिति द्योत्यते । भुनक्ति रक्षति । 'भुजोऽनवने' (पा० सू० १-३-६६) इत्यात्मनेपदनियमादस्य धर्मप्रधानत्वात् पालन एव कृत्यबुद्धिर्भवति, अभ्यवहारस्त्वानुषङ्गिक इति ध्वन्यते । किं तच्चित्रमित्याह – आशंसन्त इति । आशंसन्ते इच्छन्ति । प्रार्थयन्त इति टिप्पणकारः ।

"आशंसते स्यादिच्छायां शंसतीति स्तुतौ भवेत् ।
हिंसायां शासतीच्छायामाशास्ते शास्ति शासने" ॥

इति । किमर्थमाशंसेत्यत आह – सक्तवैरा हीति । बद्धद्वेषा इत्यर्थः । हिशब्दः प्रसिद्धौ । दैत्यैः निसर्गवैरिभिः प्रथममेतद्धनुषि विजयाशंसनमव्यभिचारेण कार्यसम्पादनात् । पुरुहूतवज्रस्य पश्चान्निर्देशः क्वचित् स्खलितत्वदर्शनात् । अत्र सुरयुवतिप्रार्थनं स्वभर्तृविरोधादपि स्वदूषणसम्पादनस्यासह्यत्वात् ।

विदित इति वर्तमाने क्तः । 'मतिबुद्धिपूजार्थेभ्यश्च' (पा० सू० ३-२-१८८) इति । तद्योगे 'क्तस्य च वर्तमाने' (पा० सू० २-३-६७) इति षष्ठी । आश्रमवासिभिर्ज्ञायमान इत्यर्थः ।

कतिपयरात्रमिति 'अत्यन्तसंयोगे द्वितीया;' 'कतिपयदिवसस्थायिनी यौवनश्रीः' 'इति भर्तृहरिप्रयोगात् । 'पोटायुवति' (पा सू० २-१-६५) इत्यादिना कतिपयशब्दस्य परनिपाताभावः । मेघसन्देशेऽपि 'कतिपयदिनस्थायिहंसा दशार्णाः' इति । कतिपयदिवसमिति वक्तव्ये कतिपयरात्रमिति वचनं रात्रिषु भूयसा विघ्नभयसंभवात् । इष्टिदिवसानां रात्रिप्रधानतया व्यवहाराद्वा, दशरात्रं पञ्चरात्र-

मितिवत् । अनुगृहीतोऽस्मीति । महतां नियोग एव अनुग्रहो भवतीति भावः । स्वाभिप्रायानुकूल्यादिति द्योत्यते च । अत आह – इअं दाणीं इति । अनुकूलतरः अपदेशं विना वस्तुमुचितत्वात् ।

अनुकारिणीति । पूर्वेषां पूरुप्रभृतीनाम् । युक्तरूपम् । प्रशंसायां रूपप् । एतत्समर्थयति । आपदेवास्याभयप्रदानोपाधिः न तु विषयभेद इति विशेष्याप्रयोगः । यथा —

'दत्तो दत्तमनोरथाधिकफलः कल्पद्रुमोऽप्यर्थिने'

इति । अत्र दानस्यार्थित्वमात्रं निमित्तं विवक्षितम् । अत्राभयस्य सत्रारोपणेनावश्यकर्तव्यत्वं लोकोत्तरफलप्रसाधकत्वमन्यदुष्करत्वं च ध्वन्यते । दीक्षिता नित्योद्युक्ताः । खलुशब्दः प्रसिद्धौ । अत्र हर्षो भावः । अनुपदमिति । अनुपदं पृष्ठत एव । आगत इति भूतकालनिर्देशेनागमनस्याविलम्ब उक्तः ।

अथ नायकः स्वावसरे प्रकृतमभीप्सितं किञ्चिदनुसन्दधाति – अप्यस्तीति । अपिशब्दः प्रश्ने ।

उत्तरमाह – पुढमं इति । प्रथमं सपरिवाहमासीत् । राक्षसवृत्तान्तेन पुनरस्य बिन्दुरपि नावशिष्टः । प्रथमम् । 'चित्रे निवेश्य परिकल्पितसत्त्वयोगा' इति श्रवणादारभ्य 'केनापदेशेन सकृदप्याश्रमे वसामः' इतीयत्पर्यन्तमित्यर्थः । सपरिवाहम् । अभिष्यन्दवमनं परिवाहः । भूयसा प्रवृद्धमित्यर्थः । कुतूहलमिति शेषः । अस्य कुतूहलस्य । भयमेवासीदिति भावः । एष इत्यादि । सज्जः शरशरासनादिसाहित्येन कृतोद्योगः । विजयप्रस्थानमवेक्षते इत्यनेन सज्जीकरणसौष्ठवाद् गमनानुकूल्यम् । यथा–

'यात्रायै चोदयामास तं शक्तेः प्रथमं शरद् ।' ,

इति । विजयसूचकं शुभनिमित्तत्वं च सूच्यते । अथ नर्मसचिवस्य गमनोपायमारभते – एसो इत्यादि । देवीनां जननीनाम् । भृत्याचारात् पूज्यत्वाच्च बहुवचनम् । जनन्या इत्यर्थः । 'देई आणवेदि' इति वक्ष्यमाणत्वात् । आज्ञसिहरो दूतः । करभकः एतन्नामा । अज्जूभिः अम्बाभिः । पूर्ववद् बहुवचनम् । आचारपरमेतत् । अथ किमित्यनुवादे । किमाज्ञापितमित्यत्राह – आआमिणीति । आगामिनि चतुर्थे दिवसे निर्वृत्तपारणो मे उपवासो भविष्यति । तस्मिन् दीर्घायुषाऽवश्यं सम्भावयितव्यमिति । तस्मिन् पारणादिवसे । दीर्घायुषेति वात्सल्यातिशयात् । सम्भावयितव्यम् आदरणीयम् । आगन्तव्यमिति यावत् । प्रतिविधेयं कर्तव्यम् । त्रिशङ्कुरिवान्तरा तिष्ठ । त्रिशङ्कुकथा प्रसिद्धा । स्वस्थानच्युतिराकुलीभावः ।

आकुलीभावं विवृणोति – कृत्ययोरिति । स्रोतो वहो नद्याः ।' अन्येभ्योऽपि दृश्यन्ते' (पा० सू० ३ - २ - ७५) इति कर्तरि विच् । क्विप् न भवति; सम्प्रसारणप्रसङ्गात् । सखे इति । मत्सखित्वमेव तव पुत्रत्वपरिग्रहे हेतुरिति भावः । पुत्रकृत्यम् अस्मत्कृत्यम् । गणयसि अवगच्छसि । भवदर्थमेव गच्छामि न रक्षोभीरुत्वेनेति भावः । राजानुजेन युवराजेन । आनुयात्रिकं सैन्यम् । सर्वमानुयात्रिकमिति । यथाहं गच्छामि तथा त्वया गन्तव्यं । न तु युवराजवदिति भावः । युवराज एव संवृत्त इत्यर्थः ।

कथयेदिति । अस्मद्वृत्तान्तकथनप्रसङ्गाच्चापल्येन शकुन्तलावृत्तान्तमपि कथयिष्यतीति भावः ।

क इति । क्कृत्यधिकरणाक्षेपे । स चोभयत्रोपादीयमानश्चशब्दसहाय ऐकाधिकरण्यमाक्षिपति । वयमिति । सुराङ्गनास्वपि न चपलाः क्षितीश्वराः इति भावः । मृगशावैः सममेधितो जन इत्यनेन अस्मदननुरूपत्वमुक्तम् । अस्माकं हि सुराङ्गनाप्रतिस्पर्धिन्यो राजकन्यकाः समुचिताः न तु दुर्भगाः तपस्विकन्या इति भावः । यद्येवमितः पूर्वं कथं भवतान्यथा भणितमित्यत आह - परिहासेति । परिहासार्थं क्रीडार्थं विजल्पितं भणनमित्यर्थः । सखे इति । सखित्वमेवात्र हेतुरिति भावः ।

शृङ्गाररससर्वस्वे कालिदासस्य नाटके ।
प्रायेण सुगमं पूर्णं द्वितीयाङ्कार्थचर्चनम् ॥

इति द्वितीयोऽङ्कः ।

अथ कथासंघटनार्थं पूर्वोक्तन्यायेन विष्कम्भकमारभते। अतीतानां भाविनां च कथावयवानां ज्ञापको मध्येन मध्यमाभ्यां वा पात्राभ्यां प्रयोजितो विष्कम्भकः। स च द्विविधः शुद्धः संकीर्णश्चेति। एकेन द्वाभ्यां वा मध्यपात्राभ्यां प्रयोजितः शुद्धो भवति। मध्यमाधमपात्रैर्युगपत् संकीर्णः। उक्तं च –

"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः॥
एकानेककृतः शुद्धः संकीर्णो नीचमध्यमैः।"

इति। ततः प्रविशतीति। अहो इत्याश्चर्ये। अनुभाव इति। अनुभावोऽनभिभवनीयताप्रतीतिहेतुः प्रभावः। पार्थिव इत्यनेन प्रभुशक्तिसम्पत्सामग्र्यं द्योतितम्। अनुभावमहत्तां कार्यमुखेन दर्शयति – प्रविष्टमात्र एवेति। तदानीमेव विघ्नकारिणां तद्भयेन दूरापसरणादिति भावः। निरुपप्लवानि निरुपद्रवानि। प्रवृत्तानि। न तु प्रवर्त्तितानि। अनेन सन्निधापितयागोपकरणानां मुनीनां यागोपक्रमस्य तदागमनप्रतिपालनं ध्वन्यते।

का कथेति। किमुच्यत इत्यर्थः। ज्याशब्देनैवेत्येकवचनं विवक्षितम्। दूरत इत्यनेन तेषां प्रत्यापत्तिनिराशत्वं व्यज्यते। दूरे खलु युद्धसंरम्भ इति भावः। धनुषो हुङ्कारेणैवेत्यन्वयः। अत्र धनुर्हुङ्कारोत्प्रेक्षायां ज्याशब्दस्यातिपरुषत्वं हेतुः। भयातिशयप्रतीतिश्च फलम्। विघ्नान् मखविघ्नकारिणः। हिशब्दो यस्मादर्थे। 'हिर्हेताववधारणे' इति सिंहः। इमान् कुशान्।

उच्छ्वसितं जीवितम्। अत्यन्तमिष्टत्यर्थः। अतः खल्वेतदुपपन्नमिति भावः। वैतानिकम्। यजनसमये तस्याः शरीरसन्तापशमनार्थं मुनिभिः सम्भृतमित्यर्थः।

शान्त्यर्थमुदकं शान्त्युदकम् । गौतमीहस्तविसर्जनं तच्छरीरोक्षणाद्युपपत्त्यर्थम् ।

अथ मुनिशिष्यप्रार्थनया लब्धानुग्रहः स्थितो नायकः पुनरपि तामेव प्रेयसीमनुचिन्तयन् विप्रलम्भस्य परां कोटिं क्रमेणाधिरोढुम् आरभते । ततः प्रविशतीति ।

इदानीं विरहानलज्वालावलीढहृदयतया तद्विरहं क्षणमात्रमपि सोढुं नोत्सहे । अतस्तां बलादपहरामीति चेत् तदपि न शक्यमित्याह – जान इति । तपसो वीर्यं झटिति निग्रहानुग्रहसम्पादनलक्षणः प्रभावः । रागान्धतया बलाद्ग्रहणपक्षे दाण्डिक्यादिवत् सद्यः समूलं निधनमुपेयामित्यर्थः । यद्येवं सा स्वयमेव मामभिसरिष्यतीति चेत् न रागाभावादिति तत्राह– सेति । सा मय्येव प्रतिबद्धप्रणयत्वात् क्षणमात्रमपि मद्विरहदुःखमसहमाना । न तु विरक्ता । कथं तर्हि मां नाभिसरेदित्यत आह – बालेति । बाला मुग्धा । कर्तव्यं स्वयमेवाजानतीत्यर्थः । यदि सख्यादिभिः प्रतिबोधिता तदापि तदनुष्ठातुमप्रगल्भा इत्याह – परवती पितृपरतन्त्रा । अतो नास्ति तस्यामपराध इति भावः । इति मे विदितं ज्ञायमानम् । वर्त्तमाने क्तः । न त्वन्यमुखेन श्रुतम् । अनेन विश्वासोऽयः प्रतीयते । एवं तर्हि जितेन्द्रियतया मनो वशीकृत्य सङ्गमकालं प्रतिपाल्यतामिति चेत् तदपि न शक्यमित्याह – अलमिति । ततः तस्याः सकाशात् । तथापि । झटित्यलभ्येऽपि समागमे इत्यर्थः । इदम् । प्रथमदर्शनादारभ्य तदभिमुखमेव प्रवर्त्तमानमित्यर्थः । नालमस्मि न शक्तोऽस्मि । अनेन तन्निवर्त्तनाय बहुशो यत्नः कृत इति ध्वन्यते । अत्र मतिरौत्सुक्यं च भावः ।

अथ प्रकृतं विप्रलम्भं सोपस्कारमाह – भगवन्निति । मदनबाधानुसन्धानद्वारेणास्य पुरस्तात् प्रतिभासमानत्वादाभिमुख्यकरणम् । अनेनास्य मदनं प्रति बहुमानगौरवमात्मनो लाघवं च प्रतीयते । कुसुमायुधेत्यनेनास्य

तदानीं तथा दृश्यत्वं युद्धोद्यमश्च ध्वन्यते । किञ्च लोकोत्तरं लोकविलक्षण-मतिहृद्यं च अस्य पराक्रमशालित्वमिति च प्रकाश्यते । त्वया कुसुमायुधेन सता चन्द्रमसा ह्लादकेन सता चेति समुच्चयेन त्वदारम्भश्चन्द्रम-स्साहाय्यात् पवनाग्निसमागम इति व्यज्यते । तेनातिसन्धानस्य बलवत्तरत्वं व्यज्यते । विश्वसनीयाभ्यामभिगम्याभ्याम् । अतिसन्धीयते वञ्च्यते । गूढतया विप्रियाचरणं वञ्चनम् ।

'वञ्चनं त्वतिसन्धानं व्यलीकं च प्रतारणम् ।'

इति सिंहः । सारस्योत्पादनपुरस्कारेण दुस्सहसन्तापकरणमिति यावत् । कामिनोऽर्थाद्विरहिणः । तेषां प्रभूतत्वं द्योतयितुं जनशब्द उपात्तः । अतिसन्धानस्य व्याप्तत्वं यौगपद्यं च दर्शयितुं सार्थ इत्युक्तम् ।

अतिसन्धानप्रकारमाह – तवेति । अयथार्थमिति । यथार्थमनुगतार्थं तदन्यदयथार्थम् । दृश्यते । अनुभूयत इति यावत् । मद्विधेषु विरहिषु मादृशेषु । अयथार्थत्वं विविच्य दर्शयति – विसृजतीति बहुवचनद्वयेन शरीरस्यान्तर्बहिरपि प्रतिक्षणं दुस्सहसन्तापविजृम्भितत्वं ध्वन्यते । लट्प्रत्यय-द्वयेन तस्यानवसानत्वं च । अत्रोद्देशक्रमोद्दिष्टयोः कुसुमायुधचन्द्रयोः प्रति-निर्देशे व्युत्क्रमेण निर्देशः कुसुमायुधस्य प्राकरणिकत्वानुसन्धानाय कृतः । अतो न प्रक्रमभङ्गदोषप्रसङ्गः । यथा —

'एको ययौ चैत्ररथप्रदेशान् सौराज्यरम्यानपरो विदर्भान् ।'

इति । तत्रानुसन्धानौचित्यान्नायकवृत्तान्तस्य पश्चान्निर्देशः । ननूद्देशेऽप्येवमेव निर्देशः किं न स्यात् । मैवं, तत्रापि मदनसन्तापवशात् साक्षात्कृतस्य मदनस्य प्रथमतो निर्देशो न्याय्यः । प्राकरणिकत्वात् चन्द्रस्य निर्देशः

प्रासङ्गिकः। उन्मादो मतिश्च प्राधान्येन। तत् तस्मात्। यस्माद् दुस्सहसन्तापनिः-सहता। संस्थिते अवसिते। क्लान्तमिति। मदस्यदृष्ट्या यागरक्षणात् क्लान्तिः। परमार्थस्तु विरहसन्तापासहनादिति बोध्यम्। विनोदनं क्लेशापनोदनम्। किं किलेति। किलशब्दः संभावनायाम्। शरणमात्मनिर्वापणम्। अतो विश्रमस्थानमन्यन्नान्वेष्यामीति भावः। अत्र आह – यावदिति। वेलां कालम्। प्रायेण। सम्भावयामीत्यर्थः। 'मन्ये शङ्के ध्रुवं प्रायः' इत्युक्तत्वात्। मालिनी-तीरेष्विति बहुवचनं विवक्षितम्। विश्रमस्थानस्य व्यत्यासे दुःखमपि किञ्चिद्विनोदयतीति भावः। यथा –

'स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु।'

इति। ससखीजनेत्यनेनास्याः शिशिरोपचारसापेक्षत्वं सूच्यते। अहो इति हर्षे। प्रकृष्टो वातः प्रवातः प्रवातत्वात् सुभगः। अनेनात्र तदागमनं सम्भवतीति नायकाभिप्रायः प्रतीयते।

शक्यमिति। अत्र वामनः–शक्यमिति* रूपं विलिङ्गवचनस्यापि कर्माभिधायां कर्माभिधाने सामान्यस्योपक्रमाद्विशेषानपेक्षायामिति। यथा –

"शक्यमोषधिपतेर्नवोदयात् कर्णपूररचनाकृते तव।
अप्रगल्भयवसूचिकोमलाश्छेत्तुमग्रनखसम्पुटैः कराः॥"

अत्र भाष्यकृद्वचनं लिङ्गम्। यथा - शक्यं च श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम् इति। न चैकान्तिकः सामान्योपक्रमः। तेन –

'शक्या भङ्क्तुं नभसि बिसिनीकन्दवच्चन्द्रपादाः।'

इति। अविरलमविच्छिन्नं सर्वाङ्गीणं च। अत्र सौरभाधारभूतैररविन्द-त्रसरेणुभिस्तरङ्गसूक्ष्मकैश्च सान्द्रत्वं मन्दघनत्वाच्च पवनस्य मूर्त्तत्वप्रतीतेश्च

* काव्यालङ्कारसूत्राणि० अधि० ५ अ० २ सू० २३।

"वीणा वेणुर्दर्शनीया च नारी शय्या यानं चन्दनं चन्द्रबिम्बम् ।
न भ्राजन्ते क्षुत्पिपासार्दितानां सर्वारम्भास्तण्डुलप्रस्थमूलाः ॥ "

इति न्यायाद् देहसंस्कारावस्थारहित इत्यर्थः । देवान् पराजित्यासुराः त्रैलोक्येश्वरा बभूवुरित्याह – दधुरिति । ते दैत्याः, **शक्रत्वम्** इन्द्रत्वं, दधुः धृतवन्तः ॥ ५९ ॥

पराजिता देवाः किमकुर्वन्नित्याह—

**सा जनता परतापि स्वान्तं विभ्रत्यपि प्रतापरतापि ।**
**प्रभुमापावननाम प्रतिष्ठितं तज्जजाप पावननाम ॥ ६० ॥**

**से**ति । **सा** दैत्यैः परिभूता, **जनता** जनसमूहः,देववर्गः, **परतापि** (**स्वान्तं विभ्रत्यपि प्रतापरतापि**) दूरादेवारीणां भयजनकत्वं प्रतापः तत्र रतापि । नयशौर्यसम्पन्नापीत्यर्थः । **प्रतिष्ठितं** काशीदक्षिणकैलासादिस्थानेषु प्रतिमासु कृतसन्निधानं, **प्रभुं** परमेश्वरमाप शरणं प्राप्तवती, **अवननाम** प्रणाममकरोच्च । **तत्** लोकवेदप्रसिद्धं, **पावननाम** पावनं सकृदुच्चारणमात्रेणापि शुद्धिकरं यत् नाम नमश्शिवायेति तत्, **जजाप** सदैव तदुच्चरितवती च । एतदुक्तं भवति – देवास्तावन्नयशौर्ययुक्तत्वेऽपि असुराक्रमणस्य दुर्निवारत्वात् पुरुषकारस्याकिञ्चित्करतामवगम्य दैवमेव शरणमिति मन्यमानाः प्रतिमासु कृतसन्निधानं परमेश्वरं प्राप्य जपनमस्कारादिलक्षणं तपश्चक्रुरिति । उक्तं च –

"दिव्यं वर्षसहस्रं वै तपस्तप्त्वा सुरर्षभाः । "

इत्यादि ॥ ६० ॥

अथ द्वाभ्यां श्लोकाभ्यामसुरा लब्धस्यैश्वर्यस्य स्थिरीकरणाय परमेश्वरभक्तिमेवाश्रितवन्त इत्याह –

**असुरैरुद्धतरागस्थितैर्वितन्वद्भिरपि विरुद्धतरागः ।**
**धृतपरशौ चेतःस्थे जगत्प्रभौ सततमेव शौचे तस्थे ॥ ६१ ॥**

असुरैरिति । उद्धतरागस्थितैः उद्धते उच्छृङ्खले । अनियन्तव्य इति यावत् । रागे विषयाभिलाषे, स्थितैरवस्थितैः, अपि तदा विरुद्धतरागः विरुद्धतरं शौचं प्रत्यत्यन्तविरुद्धं यद्रागो यज्ञभङ्गादिलक्षणं पापं तद्, वितन्वद्भिः कुर्वाणैः, अप्यसुरैः सततमेव सदैव, शौचे उत्कर्षहेतौ शुद्धतायां, तस्थे अवस्थितम् । तत्र हेतुमाह — धृतपरशाविति । धृतपरशौ धृतः परशुः कुठारो येन स तथा । परशुर्मृगादेरुपलक्षणम् । "बिभ्रद्दोर्भिः कुठारम्" इत्याद्युक्तलक्षणमित्यर्थः । जगत्प्रभौ परमेश्वरे, चेतःस्थे सततचिन्तनेन हृदयस्थिते सति । तेषामत्यन्ताशुचिताहेतौ पापकर्मपरत्वे विषयैकपरत्वे चापि भगवद्ध्यानं शुद्धिहेतुरासीदित्यर्थः ॥ ६१ ॥

**जित्वा देवप्रभृतिद्विषतो मेरौ दुरासदे वप्रभृति ।**
**यद्वापुरहरहस्ते धनं तदखिलं न्यधुश्च पुरहरहस्ते ॥ ६२ ॥**

**जित्वेति** । **ते** दैत्याः, **वप्रभृति** सानुयुक्ते, अत एव **दुरासदे** दुष्प्रापे, **मेरौ** । तन्मूर्धस्थे स्वर्गे इति यावत् । **देवप्रभृतिद्विषतः** प्रभृतिशब्देनोपदेवाः सिद्धविद्याधरा गृह्यन्ते, तान् **जित्वा** । **अहरहः** । 'कालाध्वनोः (पा० सू० २-३-५) इत्यादिना द्वितीया । 'नित्यवीप्सयोः' (पा० सू० ८-१-४) इति द्विर्वचनम् । प्रतिदिनम् । **यद्धनमवापुः** प्राप्तवन्तः, **तदखिलं, पुरहरहस्ते** शिवस्य हस्ते, **न्यधुः** निहितवन्तः । हस्ते इति लोकोक्त्यनुसारेणोक्तिः ।

"मासानन्यान् गमय चतुरो लोचने मीलयित्वा" ।

इतिवत् । परमेश्वरो नः प्रीयतामिति सर्वस्वं भगवते समर्पयामासुरित्यर्थः ।

"वप्रवाक् पुनः ।
अस्त्री क्षेत्रे वास्तुभूमौ प्राकारे सानुरोधसोः ॥"

इति **केशवः** ॥ ६२ ॥

अथ ऋतुवर्णनादेः काव्यलक्षणत्वात् तस्येदानीमवसर इति तद्वर्णनमारभते । तत्रादौ पञ्चभिः श्लोकैः ऋतून् वर्णयति । तत्राद्येन ऋतूनां सामान्येनाविर्भावः कथ्यते ।

पुनर्द्वाभ्यां पूर्वोत्तरार्धैर्वसन्ताद्याः चत्वारः । ततो द्वाभ्यामेकैकेन हेमन्तः शिशिरश्च वर्ण्यते —

**स्वगुणमपारं पर्याकर्षन्ती दत्तगुच्छपारम्पर्या ।**
**तं जनमाय शुभर्तुश्रेणी किङ्करमनुत्तमा पशुभर्तुः ॥ ६३ ॥**

**स्वगुण** इति । **तं** त्रिजगज्जेतारं, **जनम्** असुरसमूहं, **ऋतुश्रेणी** ऋतूनां वसन्तादीनां कालावयवविशेषाणां श्रेणी पङ्क्तिः, **आय** प्राप्तवती । सेवितुमिति शेषः । जनं विशिनष्टि — **पशुभर्तुः ।** पशुवत् कर्मपाशबद्धा जीवात्मानः पशवः तेषां भर्ता नियामकः परात्मापरपर्यायः परमशिवः पशुभर्ता तस्य । **किङ्करं** दासम् । शिवभक्तासिर्हि सर्वैरप्यभिलषणीया । तस्मादृतूनां तत्प्राप्तिरुचितैवेति भावः । ऋतुश्रेणीं विशिनष्टि — **अपारम्** अनवधिकम् । **स्वगुणम्** जातावेकवचनम् । स्वगुणानित्यर्थः । दोषप्रतियोग्युत्कर्षावहः पदार्थो गुणः । स्वम् आत्मीयं गुणं कुसुमकिसलयादिशालित्वादिकं, **पर्याकर्षन्ती** परितः प्रसारयन्तीत्यर्थः । गुणान् विवृणोति — **दत्तेति** परम्परैव पारम्पर्यम् । "चातुर्वर्ण्यादीनां स्वार्थे उपसङ्ख्यानम्" (पा० सू० वा० ५-१-१२४) इति ष्यञ् । दत्तं वितीर्णम् । आविष्कृतमिति यावत् । गुच्छानां स्तबकानां पारम्पर्यं समूहो यया सा तथा । उपलक्षणमेतत् फलकिसलयादेः । अत एव **शुभा** मनोहारिणीत्यर्थः । अत एव **अनुत्तमा** न विद्यते उत्तमा यस्याः सा तथा ॥ ६३ ॥

**लक्ष्मीर्वासं तेने सरसिरुहां मण्डले च वासन्तेने ।**
**रविकरविधुरं शुचितः स्वकरैर्जनमरमयच्च विधुरंशुचितः ॥ ६४ ॥**

**लक्ष्मीरि**ति । **लक्ष्मीः** शोभा । "लक्ष्मीः श्रीभूतिशोभासु" इति **केशवः** । **सरसिरुहां** पद्मानां, **मण्डले** समूहे, **वासन्तेने** वसन्तकालोदिते इने सूर्ये च, **वासं** स्थितिक्रियां **तेने** । चकारात् प्राप्ते वसन्ते हि प्रतिघाताभावात् पद्मानि सजातानि सूर्यः प्रकृष्टप्रकाशश्चासीदित्यर्थः । **विधुश्चन्द्रः,** ***जनं** लोकं, **स्वकरैः** निजरश्मिभिः, **अरमयच्च** सुखयामास च ।

"विधुः पुंसि विष्णौ चन्द्रे हुताशने ।
वायौ काले राक्षसे तु द्वे त्रि तु स्यादुपद्रुते ॥"

---

* जगदिति व्याख्यानुसारी पाठः स्यात्.

इति **केशवः** । कीदृशः ? अंशुचितः रश्मिभिर्व्याप्तः । सम्पूर्णमण्डल इत्यर्थः । पूर्णस्यैवेन्दोर्हि सकलांशुव्याप्तिः संभवति । जगद्विशिनष्टि – **रविकरेति** । **शुचित** इति सप्तम्यन्तात्क्तिः । शुचिः ग्रीष्मावयवो मासः तस्मिन् । **रविकरविधुरं** रविकरैरादित्यरश्मिभिर्हेतुभिर्विधुरं क्लिष्टम् । घर्मार्तमित्यर्थः ।

" विज्ञेयं विधुरं सद्भिः क्लिष्टविश्लिष्टयोरपि ।
विकले प्रत्यवेते च " ।

इति **केशवः** ॥ ६४ ॥

**विरहिभिराशा बभ्रे न जीवने नदति साम्बुराशावभ्रे ।**
**शशिनाकाशे नवभे सकैरवे भूतले च काशेन बभे ॥ ६५ ॥**

**विरहिभिरिति** । **साम्बुराशौ** अम्बुराशिर्जलसमूहः तत्सहिते । वृष्ट्यर्थमुपात्तजले इत्यर्थः । **अभ्रे** मेघे, **नदति** शब्दायमाने सति , **विरहिभिः** । विरहिणश्च विरहिण्यश्च विरहिणः । ' पुमान् स्त्रिया ' (पा०सू० १-२-६७) इत्येकशेषः । तैः । **जीवने** प्राणधारणे, **आशा** इच्छा, **न बभ्रे** न भृता । मेघध्वनेः कामोद्दीपनतया सोढुमशक्यत्वादिति भावः । विरहिणां प्रावृषि जीविताशा नासीदित्यर्थः । **आकाशे** नभसि, **शशिना** चन्द्रेण, **भूतले काशेन** च इक्षुगन्धाख्यतृणविशेषेण च, **बभे** दीप्तम् । शरदि (प्रेमःमेघा) वरणाभावात् शशिनश्च, कुसुमाविर्भावात् काशस्य च दीप्तिरासीदित्यर्थः ।

" काशस्त्विक्षुगन्धाख्यवीरुधि ।
अस्त्री स्त्रीपुंसयोः काशा दीप्तौ काशीति सा स्त्रियाम् । "
वाराणस्याम् "

इति **केशवः** । आकाशं विशिनष्टि - **नवभ** इति । नवानि नूतनानि (भानि) नक्षत्राणि यस्मिंस्तत्तथा । नक्षत्रैश्च बभे इत्यर्थः । क्षेत्राणां नवकं हि प्रावृषि तं विशिनष्टि-**सकैरव** इति । कैरवाणि कुमुदानि तैस्सहिते । कैरवैश्च बभे इत्यर्थः ।

स्त्री चतुरा गवि कासौ समवृत या सहसि मदनरागविकासौ ।
विकसितफलिनीजाता वीक्ष्य दिशो दृग् जनस्य फलिनी जाता ॥ ६६ ॥

स्त्रीति। सहसि हेमन्तावयवे मासि। हेमन्तर्ताविति यावत्। गवि भूमौ, या स्त्री योषित्, चतुरा इङ्गिताकारगोपने निपुणा सती, मदनरागविकासौ रागो विषयाभिलाषः तदधिष्ठात्री देवता मदनः विकासो विकारः मदनस्य विकारः पुष्पेष्वभिनिवेशः तौ समवृत निगूढवती, असौ का, न कापि। सर्वापि मदनरागविकासगोपनेऽचतुरासीदित्यर्थः। जनस्य दृग् दृष्टिः, विकसितफलिनीजाता विकसितानि विकचानि फलिनीजातानि श्यामाकुसुमवृन्दानि यासु ताः, दिशो हरितो, वीक्ष्य फलिनी दर्शनीयवस्तुदर्शनात् फलवती, जाता जज्ञे। "प्रियङ्गुः फलिनी श्यामा" इत्यमरः ॥ ६६ ॥

के न्वेतेऽवश्याये भर्तुर्दारा विजृम्भितेऽवश्या ये ।
नाकृत का कुन्दलता कुसुमेनेन्दोः कलासु काकुं दलता ॥ ६७ ॥

केन्विति। अवश्याये हिमे, विजृम्भिते प्रवृद्धे सति ये दाराः जायाः, भर्तुः कमितुः अर्थादपराधिनः,। वश्या वशङ्गता न भवन्ति एते के नु, न केचित्। शिशिरकालवैशिष्ट्यात् सर्वेऽपि दारा वश्या इत्यर्थः। शिशिरेऽपि हेमन्तवद् हिमप्राचुर्यं भवत्येव। तथा च वर्णयन्ति—

"अवनितले शीतरुजः कर्तापि भृशं तुषारलेशी तरुजः ।
पवमानस्तापस्यः स्वापयितामूद्वियोगिनस्तापस्य ॥"

इति। का कतमा, कुन्दलता कुन्दाख्यो लताविशेषः, दलता विकसता कुसुमेन हेतुना, धावल्यादिन्दोः कलासु काकुं ध्वनिविकारम्। न्यक्कृतिमिति यावत्। नाकृत न कृतवती। सर्वापि कुन्दलता कुसुमधावल्याद् इन्दुसादृश्यं धृतवतीत्यर्थः ॥ ६७ ॥

अथ ऋतुवर्णनमुपसंहरन् वनक्रीडामाह—

इति कृतपूर्व्यापारं जनमृतुरखिलस्तमानुपूर्व्यापारम् ।
वनमधिकालोलालि प्राप्य विहृत्यामुना स कालोऽलालि ॥ ६८ ॥

इतीति । **अखिल ऋतुः** वसन्तादिः, **आनुपूर्व्या** वसन्तादिक्रमेण, **तं जनम्** असुरजनम् , **इति** उक्तप्रकारेण, अरम् अत्यर्थं , **आप** प्राप्तवान् । जनं विशिनष्टि – **कृनेति** । कृनः पूर्व्यापारः पुरां पुरीणां व्यापारः सकललोक (गमन) लक्षणा प्रवृत्तिर्येन स तथा तम् । अनेन कृतकृत्यतया दैत्यानां कामाधिकारित्वमुक्तम् । **अमुना** जनेन, **स** ऋतुलक्षणः **कालः, वनं प्राप्य विहृत्य,** क्रीडित्वा **अलालि** सम्मानितः। कीदृशं वनम् – **अधिकालोलालि** अधिकमत्यर्थं आलोलाः कुसुमात् कुसुमान्तरजिगमिषया चञ्चलाः अलयो भृङ्गा यस्मिन् । अनेन वनस्य रामणीयकत्वमुक्तम् ॥ ६८ ॥

अथ जलक्रीडामाह –

**स्त्रीघटयामा सरसीरेत्य जनोऽयं विलोलयामास रसी ।**
**सलिलं सारवहंसश्रेणीसहिताम्बुजप्रसारवहम् ॥ ६९ ॥**

**स्त्रीघटयेति** । सः प्रकृतः **अयं** कृतवनविहारो, **जनः स्त्रीघटया अमा** स्त्रीणां समूहेन सह, **सरसीः** वापीः, **एत्य** अवगाह्य, **सलिलं** जलं, **विलोलयामास** विहरणात् कम्पयामास । जनं विशिनष्टि – **रसीति** । **रसी** रागवान् । क्रीडायामिति **शेषः**। सलिलं विशिनष्टि – **सारवेति**। वहतीति वहः पचाद्यच् । बिसास्वादसञ्जातमदतया आरवेन शब्देन सह वर्तमानया हंसानां श्रेण्या समूहेन सहितानामम्बुजानां प्रसारः प्रसरणं समृद्धिरिति यावत् । तस्य वहमाधारत्वेन स्थितमित्यर्थः ॥ ६९ ॥

अथासुराः कामार्त्तास्सन्तः संभोगे प्रावर्तन्तेत्याह –

**यो भुवने सौमनसः ख्यातः सफलोऽपि भेदनेऽसौ मनसः ।**
**झषकेतोरजनीषुः स्त्रीभिरमी रेमिरे ततो रजनीषु ॥ ७० ॥**

**य** इति । सुमनस एव **सौमनसः** । प्रज्ञादित्वादण् स्वार्थिकः। **झषकेतोः**, कामस्य, **य इषुः** शरः, **भुवने सौमनसः ख्यातः** पुष्पमयत्वेन प्रसिद्धः, **असौ** इषुः, **मनसः** चित्तस्य, **भेदने** शकलीकरणे, **सफलः** सप्रयोजनोऽ**जनि** जातवान्। शराणां हि लक्षभेदः प्रयोजनम्। कामशराणां मनोलक्षत्वात् तद्भेदेन फलवत्त्वमासीदित्यर्थः । असुराणां मनः कामशरविद्ध-मभूदित्युक्तं भवति । यतो मनसः कामशरविद्धत्वं **ततस्तस्माद्धेतोः, अमी** दैत्याः, **रजनीषु** निशासु, **स्त्रीभिः** दयिताभिः, सह **रेमिरे** सम्भोगसुखमनुबभूवुः ॥ ७० ॥

अथ

"इष्टं हि विदुषां लोके समासव्याससधारणम्।"

इत्युक्तनीत्या संक्षेपतः संभोगं वर्णयितुमुपक्रमते। असुरा रेमिरे इत्युक्तम्। तत्रैषां रतेरुद्दीपनं किमासीदित्याशङ्कायामाह—

**उडुघटयामा सद्यो रजनिकृदुदरं विराजयामास द्योः।**
**सुनृषु सुरामास्वाद्यः स्फुरितः स जनस्तदा सुरामास्वाद्य ॥ ७१ ॥**

उडुघटयेति। **रजनिकृत्** चन्द्रः, **सद्यः** तत्क्षणं, **उडुघटया** नक्षत्रसमूहेन, **अमा** सह, **द्योः** आकाशस्य, **उदरम**न्तर्भागं, **विराजयामास** निजकरनिकरैः प्रकाशयामास। **सुनृषु** शोभनेषु नृषु पुरुषेषु, **सुरामासु** शोभनासु स्त्रीषु, च मध्ये **आद्यः** प्रधानभूतः, **स जनः** असुरजनः स्त्रीजनश्च, यस्मिन् काले चन्द्र उदितवान् **तदा** तस्मिन् काले, **सुरां** मद्यम्, **आस्वाद्य** पीत्वा, **स्फुरितः** चलितः। विकृतिं प्राप्त इति यावत् ॥ ७१ ॥

असुराः स्त्रीभिस्सह रेमिरे इत्युक्तम्। ते कीदृशाः स्त्रियोऽपि कीदृश्यः इत्याशङ्कायामाह—

**ते शय्यासु समाल्या मदमदननिरस्तलज्जयासुसमाल्या।**
**विहृतिमुदारामापू रराज तैः सुखिभिरियमुदारामा पूः ॥ ७२ ॥**

**त** इति। ते चन्द्रोदयमधुपानाभ्याम् उद्दीपितरतयोऽसुराः, **शय्यासु** तल्पेषु, **समाल्याः सन्तः** माल्यैः स्रग्भिः तदुपलक्षितैः कस्तूरीकर्पूरादिपरिमलद्रव्यैश्च सहिताः। सम्पादितसम्भोगसामग्रीका इत्यर्थः। **मदमदननिरस्तलज्जया** मदः मद्यपानजनितो विकारः मदमदनाभ्यां निरस्ता निर्वासिता लज्जा यस्यास्तया, **असुसमाल्या** असुसमानां दयितानामाल्या समूहेन सह, **उदारां** महतीं सम्भोगलक्षणां, **विहृतिं** क्रीडां **आपुः** प्राप्तवन्तः। अत्र समाल्यतया संभोगस्याविकलता निरस्तलज्जतया निर्यन्त्रणप्रवृत्तिश्च प्रत्याय्यते। ननु पूर्वं 'स्त्रीभिरमी रेमिरे' इत्यनेन यदुक्तं तदेवेदानीमपि 'उदारां विहृतिमापुः'- इत्यनेनाप्युक्तम्, अतोऽत्र पौनरुक्त्यम्। उच्यते - अत्र समाल्यत्वं निरस्तलज्जत्वं च विधेयम्। असुसमाल्या उदारां विहृतिमापुरित्युद्देश्यमेव। अतो न पौनरुक्त्यम्। **इयम्** असुरसम्बन्धिनी, **पूः** पुरी, **सुखिभिः** सुरतसुखयुतैः, **तैरसुरैर्हेतुभिः**, **रराज** शोभते स्म। कीदृशी।

उदारामा उद्धृत आरामः उपवनं यस्याः सा तथा । उपलक्षणमेतत् सोधनदीतीरादेः । अनेन यथाभिलाषं विहरणानुकूल्यं पुर्या उक्तम् ॥ ७२ ॥

अथोत्तराश्वासस्य बीजमुपक्षिपन् असुराणां चरितमुपसंहरति –

**द्युसदामुदयानवतानवता नवता न यताऽश्नुत तन्महसा ।**
**स जनो विजहार सदारसदा रसदार मदा जयतूर्यमपि ॥ ७३ ॥**

**द्युसदामिति** । **तन्महसा** तेषामसुराणां महसा तेजसा हेतुना **नवता**, नूतनता **द्युसदां** देवानाम्, **उदयान्** समृद्धीः, **नाश्नुत** न प्राप्तवती । उदयानां नवत्वं नाम नष्टानां पुनरुत्पत्तिः सा चासुरप्रभावाद्देवानां नाभूदित्यर्थः । **बतेति** विस्मये । न्यायवृत्तानामन्याय-वृत्तेभ्यो विपदुत्पत्तिराश्चर्यमित्यर्थः । तन्महो विशिनष्टि – **अवतानवतेति** । अवतानो विस्तारः तद्युक्तेन । सर्वातिशायिनेत्यर्थः । **स जनोऽ**सुरजनः, **सदारसदाः** दाराणां दयितानां स(दाः? दसा)समूहेन सहितः, **मदा विजहार** चिक्रीड । **रसत्** शब्दायमानं **जयतूर्यम्**, अन्तरान्तरा देवादीनां जयातद्द्योतकतूर्यम्, **आर अपि** प्राप्तश्च ॥ ७३ ॥

अथ ते दुःखासंस्पृष्टमेव सुखमनुबभूवुरित्याह –

**पुरत्रये मुदं दधुर्निवासमापुरत्र ये ।**
**पराभवेन वर्जिताः प्रणामतत्परा भवे ॥ ७४ ॥**

**पुरत्रयेति** । (ये) दैत्याः अत्रास्मिन् ब्रह्मणोऽनुग्रहलब्धे, **पुरत्रये निवासं** स्थितिम्, **आपुः** प्राप्तवन्तः । ते **पराभवेन** पराजयेन, **वर्जिताः** त्यक्ताः सन्तो, **मुदं दधुः** धृतवन्तः । अत्र पराभववर्जितत्वमेव विधेयम् अन्यत् सर्वमुद्देश्यमेव । कथमधर्मरतानामेषामेवं जातमित्याशङ्कायां शिवभक्तिरेव तत्र हेतुरिति वक्तुं तान् विशिनष्टि – **प्रणामतत्परा भव** इति । **भवे** शिवे **प्रणामतत्पराः** प्रणामे नमस्कारे तत्पराः। शिवभक्ता इत्यर्थः । अत्यन्तं पापिष्ठानामपि तेषामभ्युदये शिवभक्तिरेव हेतुरित्यर्थः ॥ ७४ ॥

इति **श्रीवैष्णवकुलालङ्कृतेः** कविहृदयसार्वभौमस्य **करुणाकरनाम्नो** विद्वत्प्रवरस्य भागिनेयेन **पङ्कजाक्षनाम्ना** विरचितायां **त्रिपुरदहनव्याख्यायां हृदयग्राहिण्यां**

प्रथम आश्वासः ॥

## अथ द्वितीय आश्वासः ।

अथ उपक्षिप्तां विपदं प्रतिचिकीर्षूणां देवानां प्रवृत्तिमाह –

**अथ हरिमापन्नत्वाद्द्युसदः क्षीरोद्वसतिमापन् नत्वा ।**
**हृतसर्वस्वा दित्याः कुलजैस्तैरश्विरुद्रवस्वादित्याः ॥ १ ॥**

अथेति । **अथ** पराजयप्राप्त्यनन्तरं, **द्युसदो** देवाः, **आपन्नत्वात्** कृच्छ्रप्राप्ता आपन्नाः तेषां भावस्तत्त्वं तद्धेतोः, **नत्वा** प्रस्थानारम्भ एवेष्टफलसिद्धये नमस्कर्तव्यान् विघ्नेश्वरादीन् प्रणम्य, **हरिं** विष्णुम्, **आपन्** । शरणान्तरमलभमानाः तं शरणं जग्मुरित्यर्थः । यद्वा 'पूर्वकालिक' इत्यस्य प्रायिकत्वाद् मुखं व्यादाय स्वपितीतिवद् नत्वा हरिमापन्निति प्रयोगः । ततो हरिं प्राप्य नेमुरित्यर्थो लभ्यते । कुत्रस्थं हरिमित्याह – **क्षीरोद्वसतिमिति** । क्षीरोदः क्षीरसमुद्रः वसतिर्वासस्थानं यस्य स तथा ।

"वसतिस्तु गृहे रात्राववस्थाने जिनाश्रये[1] ।"

इति **केशवः** । के ते द्युसद इत्यत्राह – **अश्विरुद्रवस्वादित्याः** द्वावश्विनौ च एकादशरुद्राश्च अष्टौ वसवश्च द्वादशादित्याश्च तथोक्ताः । द्युसदो विशिनष्टि – **हृतेति** । (**दित्याः**) दितिः असुरमाता तस्याः, **कुलजैः तैः** प्रकृतैः तारकाक्षादिभिस्त्रिभिरसुरैः, **हृतसर्वस्वाः** हृतमपहृतं सर्वं सकलं स्वमात्मीयं वस्तु स्वर्गादिकं येषां ते तथा । दैतेयाना-मादितेयानां च मातृसोदरतानिबन्धनं निसर्गवैरित्वं द्योतयितुं दित्याः कुलजैरित्युक्तम् ॥१॥

अथ पञ्चभिः श्लोकैः देवानां स्तुतिनमस्कारपूर्वकं असुरनिराकरणं प्रति स्वासामर्थ्यं कथयित्वा प्रार्थनां, प्रार्थितस्य तत्प्रार्थनानङ्गीकारं चाह –

**विकसितनालीकान्तर्दलरुचिलोचन ! हरे ! घनालीकान्त ! ।**
**श्रितजनतापावन! ते नमो दयां कुरु जनेऽत्र तापावनते ॥ २ ॥**

---

१. मे इति मुद्रितपाठः ।

**विकसितेति ।** **विकसितनालीकान्तर्दलरुचिलोचन** विकसितस्य विकचस्य नालीकस्य यदन्तर्दलं गर्भस्थं पत्रं तस्य रुचिरिव रुचिश्शोभा ययोस्तथाविधे लोचने यस्य तस्य सम्बोधनं तथा। **हरे** हरिरिति श्रीनामशालिन्! **घनालीकान्त** घनानां मेघानामाली समूहः तद्वत् कान्त, सान्द्रमेघश्यामल! **श्रितजनतापावन** श्रितायाः भक्तिपुरस्सरं (प्राप्तायाः) जनतायाः जनसमूहस्य पावन शुद्धिकर!, **ते** तुभ्यं, **नमः** नमस्क्रिया। अस्त्विति शेषः। **तापावनते** तापेन मनोदाहेन हेतुना **अवनते** प्रणते, **अत्र** एतस्मिन्नाकारदर्शनेनैवानुमेय-दुरवस्थे अस्मिन्, **जने**। अस्मास्विति यावत्। **दयां** करुणां, **कुरु**। प्रार्थनायां लोट् ॥ २ ॥

**अहिता वरदैते ये पुरत्रयेऽस्मिन् वसन्ति वरदैतेये ।**
**शक्ष्यामो हन्तुं न स्वयमिन्द्रस्तैः प्रयाति मोहं तुन्नः ॥ ३ ॥**

**अहिता** इति । हे वरद भक्ताभीष्टप्रद! **ये एते** सर्वेषामपि भयजनकतया सर्वदैव मानसप्रत्यक्षवद् बुद्धिस्थाः, **अहिताः** शत्रवः तारकाक्षादयः, **अस्मिन्** सर्वदा सर्वत्र सञ्चरणाद् अखिलैरप्यवलोक्यमाने, **पुरत्रये** वसन्ति निवासं कुर्वन्ति, तान् **हन्तुं** निगृहीतुं, वयं **न शक्ष्यामः** समर्था न भविष्यामः । भूतवर्तमानयोरिव भविष्य-त्कालेऽपि शक्त्यभावोऽनुमेय एव इत्यभिप्रायेण लृट्प्रयोगः । पुरत्रयं विशिषन्ति — **वरदैतेय** इति । वरा बलवत्त्वेन उत्कृष्टा दैतेया यस्मिन् तत्तथा । एतद् हनने शक्त्यभावे हेतुत्वेनोक्तम्। दण्डापूपिकया स्वशक्त्यभावस्योपपन्नतामाहुः — **स्वयमिति**। **इन्द्रः** त्रयाणामपि लोकानां परमेश्वरात्मा स्वामी, **स्वयं तैः** असुरैः **तुन्नः** व्यथितस्सन्, **मोहं** इतिकर्तव्यतामौढ्यम्, **प्रयाति** प्राप्नोति। इन्द्रस्यासामर्थ्ये तद्रक्ष्याणां नः कथं सामर्थ्यमिति यावत् ॥ ३ ॥

**तल्लोकेश! शिवद! नः स्फीतेऽत्र त्रिपुरयात्रके शशिवदन! ।**
**न यथानघ! नश्यामः स्मरेस्तथा त्वं जनार्दन! घनश्याम! ॥४॥**

**तदिति ।** **लोकेश** लोकानां भुवनानामीश स्वामिन्! **शिवद** भक्तानां मङ्गलप्रद! **शशिवदन** शशीव मनोहरत्वाच्चन्द्र इव वदनं यस्य तस्य सम्बोधनं तथा ।

**अनघ** निर्दोष ! **जनार्दन** इति श्रीनामशालिन् ! **घनश्याम** घनो मेघ इव श्यामलवर्ण ! यस्माद् नः शक्त्यभावः तस्मात् **स्फीते** वर्धिते, **अत्र त्रिपुरपावके** त्रिपुर एव पावके अग्नौ, **यथा** येन प्रकारेण, **न नश्यामः** (न) नाशं गच्छामः, **तथा** तेन प्रकारेण, **त्वं नः** अस्मान् , **स्मरेः** निरूपय । सात्त्विक्यमिति शेषः(?) ॥ ४ ॥

**यद्वयमतसीदामश्यामल ! लोकत्रयाभिमत ! सीदामः ।**
**स तव महानवमानः तद्रक्षा दीयतामिहानवमा नः ॥ ५ ॥**

**यदिति । अतसीदामश्यामल** अतसी उमाख्यो धान्यविशेषः तस्या दाम पुष्पं तद्वत् श्यामल ! **लोकत्रयाभिमत** सर्वान्तरात्मत्वादभीष्टतम ! **यत्** यस्माद्, **वयं** त्वदेकशरणाः, **सीदामः** असुरपीडितत्वात् सादं गच्छामः, **स** सादः, **तव महान्** अनल्पः, **अवमानः** अवमानहेतुः निन्दाहेतुर्भवति । नास्माकमन्यस्य वा कस्यचिद् । अवमानस्य महत्त्वोक्त्या अनुपेक्षणीयत्वं भगवदेकसम्बन्धित्वोक्त्या अवश्यपरिहरणीयत्वं च ध्वन्यते । **तत्** तस्मात्, **नः** अस्माकम्, **इह** सादे विषये, **अनवमा** भयहेतोः अत्युच्छेदादुत्तमा, **रक्षा** त्राणं, **दीयताम्** । असुरान्निगृह्णीष्वेति यावत् ॥ ५ ॥

**इत्थं तान्ततमानां द्युसदां मतिमुज्झतां तां ततमानाम् ।**
**अर्थितमनुमेने न प्रभुणा तत्केन शक्यमनुमेनेन ॥ ६ ॥**

**इत्थमिति । प्रभुणा** जगत्स्वामिना हरिणा, **द्युसदां** देवानाम् , **इत्थम्** अनेन प्रकारेण, **अर्थितम्** असुरनिग्रहलक्षणं प्रार्थितं, **नानुमेने** नानुमतम् । करिष्यामीति न प्रतिज्ञातमित्यर्थः । अनुमतावेव देवस्य योग्यतामापादयितुं द्युसदो विशिनष्टि—**तान्ततमानाम्** इति । अतिशयेन तान्तानां असुरपीडया ग्लानिं गतानाम् । अत एव **ततमानां** व्याप्तगर्वां, **तां** बलवृत्राद्यसुरविषये सर्वैरप्यनुभूतां, **मतिं** बुद्धिम् , **उज्झताम्** ।

"शक्ष्यामो हन्तुं न स्वयमिन्द्रस्तैः प्रयाति मोहं तुन्नः।"

इति कण्ठोक्त्या त्यजतां च। एतच्चोपपन्नमित्यर्थान्तरेण समर्थयते—**तदिति**। **तद्** **अर्थितम्**, **अनुमेनेन**। अत्रान्यत्वं नञभिधत्ते। यथोक्तम्—

"प्रतिषेधेऽप्यसत्तायामन्यत्वे सदृशेऽपि च।
कुत्साल्पविरहार्थेषु विपक्षे चापि नञ् भवेत्॥"

इति। उमा पार्वती तस्या इन्नः स्वामी परमेश्वरः तस्मादन्येन। **केन शक्यं**, न केनापि। यच्छिवव्यतिरिक्तानां सर्वेषामप्यशक्यं तत्र हरेरनुमत्यकरणमेव युक्तमित्यर्थः। सर्वाशक्यत्वसामान्येन विशे(ष ? षा)शक्यत्वसमर्थनादर्थान्तरन्यासोऽलङ्कारः॥ ६॥

अथ हरिस्तत्प्रार्थनानुमत्यकरणे हेतुमाह—

**निरतः परमो देवः सततं परमेश्वरो हि परमोदे वः।**
**तस्मान्मनसामर्थ्यं कर्तुं भवतां सुरा मम न सामर्थ्यम्॥ ७॥**

**निरत** इति। हे **सुराः** देवाः! **परमः** उत्कृष्टः। सर्वेषामप्यस्माकम् उपरि वर्तमान इत्यर्थः। **परमेश्वरः** रुद्रः, **देवः वः** युष्माकं, **परमोदे** परेषां शत्रूणां मोदे प्रीतौ विषये, **सततं** सदा **निरतः** तत्परो, **हि** यस्मात् (तस्मात्) ततो हेतोः **भवतां** युष्माकं, **मनसाम् अर्थ्यं** प्रार्थनीयम् असुरवधलक्षणं वस्तु, **कर्तुं मम न सामर्थ्यं** शक्तिरिति। मम सामर्थ्याभाव एव युष्मत्प्रार्थनानङ्गीकारे हेतुरित्यर्थः। परमेश्वर इत्यत्राश्वकर्णादिवत् केवलैव रूढिराश्रयणीया, न तु योगसहिता। तथा (सति) परम इति पुनर्विशेषणीयो न स्यात्॥ ७॥

इत्थं स्वासामर्थ्यश्रवणाद् विषण्णान् देवानवलोक्य हरिस्तन्निग्रहायोपायमाह—

**प्रार्थ्यो हि ततो देवः पिनाकपाणिः स एवाहिततोदे वः।**
**यमगमसावध्यास्ते तं यामस्तस्य तेजसा वध्यास्ते॥ ८॥**

**प्रार्थ्य** इति। अत्र युष्मत्संबोधनगर्भत्वात् सुरा इति सम्बोधनं सिद्ध्यति। हे सुराः!

यतः परमेश्वरस्य असुरप्रीतौ निरतत्वं, **ततस्तस्माद्धेतोः, वः** युष्माकम्, **अहिततोदे** शत्रुवधे विषये, **स एव** तन्निग्रहायापि (**प्रार्थ्यः**।) प्रार्थनीय इत्यर्थः । कीदृशः । **पिनाकपाणिः** पाणौ हस्ते पिनाकः पिनाकाख्यं धनुर्यस्य स तथा । स्वयमेव जगत्कण्टकोद्धरणाय गृहीतशस्त्रः प्रवर्त्तमानस्सन् अस्मत्प्रार्थनासहकृतोऽसुरवधं करिष्यत्येवेति भावः । तस्यापि सामर्थ्याभावे कथं ते वध्याः स्युरित्यत्राह — **तस्येति** । हिशब्दोऽवधारणे । **ते** दैत्याः, **तस्य** परमेश्वरस्य, **तेजसा** शक्त्या, **वध्या हि** हन्तुं शक्या एव । तत्र न सन्देह इत्यर्थः । तर्हीदानीमस्माभिः किं कर्तव्यमित्यत्राह — **असौ** परमेश्वरः, **यम् अगं** पर्वतम्, अध्यास्ते अधितिष्ठति, **तम् अगं यामः** अधुनैव कैलासाय यास्यामः । वर्तमानसामीप्ये लट् । " गत्यर्थकर्मणि " (पा० सू० २-३-१२) इत्यादिना द्वितीया ॥

अथ हरिः परमेश्वरप्रसादोपलब्धये मतिमकरोदित्याह —

**इत्थममेयज्ञानान्नाथः स्मृत्यै प्रचक्रमे यज्ञानाम् ।**
**परमनुरागमनन्ते तन्वति तरसैव चक्रुरागमनं ते ॥ ९ ॥**

**इत्थमिति** । समनन्तरोक्तस्य श्लोकद्वयस्यानेन संबन्धः । अत्रार्थसामर्थ्यादुक्त्वेति पदमाक्षिप्यते । **नाथो** जगत्स्वामी हरिः, इत्थमनेन प्रकारेण, उक्त्वा **अमेयज्ञानाद्** अमेये निखिलैरपि दुर्विज्ञेये वस्तुनि यद् ज्ञानं तस्माद्धेतोः । यज्ञप्रियत्वात् परमेश्वरो यज्ञैनैव प्रसाद्य इति जानन्नित्यर्थः । **यज्ञानां** क्रतूनां, **स्मृत्यै प्रचक्रमे** आरब्धवान् । यज्ञेन परमेश्वरं प्रीणयितुं यज्ञान् सस्मारेत्यर्थः । स्मृतिः फलवती चासीदित्याह — **परमिति** । **ते** यज्ञाः, **अनन्ते** विष्णौ परम् अतिशयि(नम्)... **अनुरागं** स्मृतिलक्षणं प्रमाणं, **तन्वति** कुर्वति सति, **तरसैव** वेगेनैव, **आगमनं चक्रुः** कृतवन्तः । भृत्यानां हि प्रभूणां स्वविषयं स्मरणमपि परोऽनुराग एव इति स्मृतेरनुरागत्वम् । ननु क्रियात्मकत्वादचेतनानां यज्ञानां कथमागमनम् । उच्यते— अधिदेवताविषयेयमुक्तिः न तु क्रियाविषया । अधिदेवता च सर्वेषां पदार्थानामस्त्येव ॥

अथ हरिः परमेश्वरप्रसादनाय कैलासं गतवानित्याह --

क्रतुरुपसन्नामा यः स्वयममुमादाय रुद्रसन्नामाय ।
शम्भुनिवासायागान्मुक्त्वान्यान् सपदि पीतवासा यागान् ॥१०॥

क्रतुरिति। सपदि तत्क्षणमेव, पीतवासाः विष्णुः, स्वयं यः क्रतुरुपसन्नामा उपसदिति नाम आख्या यस्य, अमुम् अभीष्टफलसम्पादनेऽन्तरङ्गभूतम् , आदाय परिगृह्य, अन्यान् (यागान्) क्रतून् , मुक्त्वा प्रस्थाप्य, शम्भुनिवासाय अगात् गतवान् । न तु देवानेव प्रस्थापयामास । अनेन कार्यस्य गौरवातिशयः प्रत्याय्यते । किमर्थमगादित्यत्राह – रुद्रसन्नामायेति । रुद्रस्य सन्नामाय नमस्काराय । रुद्रयागायेति यावत् ॥ १० ॥

अथ चतुर्भिः श्लोकैः कैलासं वर्णयति –

यत्र हि सद्योगरतिः स्मरतामंहांसि यच्च सद्यो गिरति ।
यन्नाम हरहरेति प्रणद्य मुनिसिद्धवृन्दमहरहरेति ॥ ११ ॥

यत्रेति। यत्र शम्भुनिवासे, सद्योगिरतिर्हि सतां जीवब्रह्मैक्यसाक्षात्करणादुत्कृष्टानां योगिनां रतिः स्थितावासक्तिः । हिशब्दः शास्त्रीयां प्रसिद्धिं द्योतयति। स्मरतां परमेश्वराधिष्ठानत्वेन कैलासं ध्यायताम् , अंहांसि पापानि, सद्यः स्मरणसमय एव, गिरति निगीर्णानि करोति। नाशयतीति यावत् । यं शम्भुनिवासं, मुनिसिद्धवृन्दं मुनीनां मध्ये ये सिद्धाः विदिततत्त्वाः तेषां वृन्दं समूहः, हरहरेति नाम भगवतो नामधेयं, प्रणद्य उच्चार्य अहरहः प्रतिदिनं, एति प्राप्नोति। अहरहः अत्यन्तसंयोगे द्वितीया। वीप्सायां द्विर्वचनम् ॥ ११ ॥

यं विविधन्यङ्कुरुते शिरसि वसन् धनद एव धन्यं कुरुते ।
यस्माद्वै रूप्यमयादमरगिरिः काञ्चनोऽपि वैरूप्यमयात् ॥ १२ ॥

यमिति । एवकारो भिन्नक्रमः । पौनर्वचनिकश्च । धनदः यक्षराजः, शिरसि शिखरे, वसन् यमेव धन्यं उत्कर्षवन्तं, कुरुते । वसन्निति हेतौ शता । विशिष्ट-

स्याधेयस्याधारोत्कर्षावगमकत्वादिति भावः । शिरो विशिनष्टि – विविधन्यङ्कुरुते इति । विविधानि हर्षक्रोधादिमूलत्वाद् बहुविधानि न्यङ्कूनां मृगविशेषाणां रुतानि शब्दा यस्मिन् तत्तथा । उपलक्षणमेतत् सत्त्वान्तरस्यापि । वस्तूनां स्वधर्मोपेतत्वं हि गुणः । मृगशकुन्याद्यनेक(स)त्त्वोपसेव्यत्वादिकं पर्वतधर्मः । तस्मादनेनापि पर्वतप्रशस्तिरेव कृता इत्यवगन्तव्यम् । वैशब्दोऽवधारणे भिन्नक्रमश्च । रूप्यमयाद् वै रजतस्वरूपादेव, अस्मात् कैलासाद्धेतोः, अमरगिरिर्मेरुः, काञ्चनोऽपि काञ्चनविकारोऽपि, वैरूप्यं विकृतरूपत्वम्, अयात् प्राप्तः । "धातूनामस्मि काञ्चनम्" इति भगवद्वचनात्, तथा लोकप्रसिद्धेश्च काञ्चनस्यैवोत्कर्षः । तन्मयस्य मेरोः रजतमयस्य कैलासस्य प्रभा-प्रसराक्रान्तत्वात् वर्णापकर्षो जात इत्यर्थः । सर्वस्मादुत्कृष्टस्य काञ्चनस्य रजतापेक्षया वर्णहानेरत्यन्तासम्भाव्यताम् अपिशब्दो द्योतयति ॥ १२ ॥

**बभ्रु करालं केशं बिभ्राणं दशशिरः पुरा लङ्केशम् ।**
**भ्रमयत् पातालसदो रुराव रक्षो यदन्तपातालसदोः ॥ १३ ॥**

बभ्रिति । पुरा किल रावणः भुजकण्डूविनोदनाय कैलासमुद्धृत्योत्क्षिप्य उत्क्षिप्य व्यहरत् । तदा हरः कुपितस्सन् स्वाङ्गुष्ठाग्रेण पर्वते गौरवमाहितवान् । तदा स्वोपरि निपततः कैलासस्य गौरवमसहिष्णुः रावणः रोदनमकरोत् । तदेतदनेनोच्यते । पुरा लङ्केशं लङ्काया ईशं स्वामीभूतं रावणाख्यं रक्षः राक्षसः, यदन्तपातालसदोः यस्य कैलासस्यान्तो मूलकोटे-रेकदेशः, तस्य पातेन पतनेन हेतुना अलसा जडीभूता दोषः बाहवो यस्य तत्तथाविधं भूत्वा, रुराव 'हा हतोऽह'मित्यादिशब्दमकरोत् । रक्षसो लोकोत्तरतां प्रकटयन् तद्विशिनष्टि-बभ्रिति [बभ्रु पिङ्गलं, करालं भयङ्करं, केशं कचं, बिभ्राणं दधानं, पातालसदः पाताले सीदन्तीति तथा तान् पातालवासिनः । भ्रमयत् ] ॥ १३ ॥

**तौ च सदानवसानौ गौरीशानौ सदैत्यदानवसानौ ।**
**सविलासं यत्र स्तः श्रयति च सुरगणोऽरिसंयस्त्वस्तः ॥ १४ ॥**

**तौ चेति** । **तौ** लोकशास्त्रप्रसिद्धौ, **गौरीशानौ** पार्वतीपरमेश्वरौ, **यत्र** कैलासे **सदा सविलासं** विलासेन लीलया सह वर्त्तमानं यथा भवति तथा **रतः** विद्येते च। तस्य महिमा कथं वर्ण्यत इति भावः। कीदृशावित्यत्राह – **अनन्तसानौ** इति। देशतः कालतः स्वरूपतश्चाद्यन्तशून्यौ। नित्यशुद्धावित्यर्थः। यत्रेत्युक्तं विशिनष्टि – **सदैत्येति** । दितेरपत्यानि दैत्याः दनोरपत्यानि दानवाः। भगवत्सेवार्थमागतैः दैत्यदानवैः सहितानि सानूनि प्रस्थानि यस्य स तथा। **अरिसंयत्त्वस्तः** अरीणां संयतः युद्धात् त्रस्तः भीतः, **सुरगणो यं कैलासं, श्रयति** शरणं प्रपद्यते तस्मै शम्भुनिवासायेति पूर्वेणान्वयः ॥ १४ ॥

अथ हरिः कैलासं प्राप्य परमेश्वरप्रसादनायोपक्रान्तवानित्याह –

**तं स्थितमुपसद्यागस्त्राम्ये हरिणा कृतोऽयमुपसद्यागः।**
**कैलासं भूतेशं प्रीणयता यत्र समुदि सम्भूते शम् ॥ १४ ॥**

**तमिति**। **हरिणा** विष्णुना, **तम्** उक्तगुणविशिष्टं, **कैलासमुपसद्य** प्राप्य, **अयं** पूर्वानीतः, **उपसद्यागः**, उपसत्संज्ञो यागः, **कृतः** अनुष्ठितः। कैलासं विशिनष्टि–**अगस्त्राम्ये स्थितमिति**। **अगस्त्राम्ये** गौरीशानवासत्वादिगुणशालित्वात् पर्वताधिपत्ये, **स्थितम्** अवस्थितम्। एतत् क्रतोरन्यत्रानुष्ठेयत्वेऽपि तत्र गत्वानुष्ठाने हेतुः। कस्मै फलायायं क्रतुः कृतः इत्यत्राह – **भूतेशमिति**। भूतानां श्रीमहाभूतगणानां निखिलजन्तूनां वा ईशं परमेश्वरं, **प्रीणयितुम्**। परमेश्वरप्रसादलाभायेत्यर्थः। तस्य किं फलमित्यत्राह – **यत्रेति**। **यत्र** यस्मिन् भूतेशे, **समुदि संभूते** सति **शं** परमप्रयोजनभूतं सुखं भवति। तत्तदभिमतफलसम्पत्त्या सुखावाप्तिरीश्वरप्रसादस्य फलमित्यर्थः ॥ १५ ॥

रागः फलवांश्चासीदित्याह –

**मुक्त्वा हासं सद्यः प्रमथगणो मथितरिपुमहासंसद्यः ।**
**प्रययावच्छायागादुदयं त्रिपुरश्च जगदवच्छायागात् ॥ १६ ॥**

**प्राप्तेने**ति। **अथ** (सु?पु)रप्राप्तेरनन्तरम्, **असुरसार्थं** असुरसमूहं, **प्राप्तेन विष्णुना, वचनं प्रोचे** उक्तम्। वचनं विशिनष्टि – **सुरसार्थ**मिति। शोभनो रसो रागो यस्मिन् तादृशोऽर्थो वाच्यं यस्य ततथा। उक्तिप्रकारं दर्शयति—**हितगिर**मिति। अत्र वैदिकेषु पक्षेषु तद्बाह्यकक्ष्याप्रविष्टं चार्वाकपक्षमाश्रित्य हरिणा वैदिकपक्षाक्षेपः क्रियते। **हे असुराः!** यूयं **मत्तः** मत्सकाशाद्, **हितगिरं** युष्मभ्यं हितां श्रेयस्करीं गिरं, **शृणुत** आकर्णयध्वम्। तर्हि किं तद्वचनमित्याशङ्कायाम् (ऋग्?) वेदोक्तधर्मो नानुष्ठेय इत्याह – **इच्छती**ति। **असुराम**त्तः सुरया मद्येन हेतुना मत्तः भ्रान्तचित्तः सुरामत्तः, विचारशून्य इति यावत्; तस्मादन्यः। **को नु धर्मं** श्रुतिचोदितमग्निष्टोमादिकं कर्म, **इच्छति**। कर्तुमिति शेषः। हिताहित-विचारशून्य एव धर्मे प्रवर्तते इत्यर्थः। तस्माद्विवेकिना धर्मो नानुष्ठेयः प्रयोजना-भावादिति भावः ॥ २३ ॥

नन्वनुष्ठेय एव धर्मः, देहान्तरं गृहीत्वा धर्मादेः फलस्य उपभोक्तव्यत्वादित्यत्राह—

**यदिहैवायात्यन्तं पुरुषोऽयं पुनरनुद्भवायात्यन्तम् ।**
**तत् फलकामी हास्यः स्वर्गे सिद्धिं करोति कामीहास्य ॥ २४ ॥**

**यदिति**। अत्र चार्वाकस्य देह एवात्मा मरणमेव मोक्षः इति राद्धान्तः। तदाश्रयेणाह – **अयं** धर्मानुष्ठाता **पुरुषः, पुनरनुद्भवाय** मरणस्यैव मोक्षत्वाद् भूयो जननाभावाय। **इहैव** अस्मिन् लोक एव, न त्वस्तित्वेन कल्प्यमाने परलोके। **अत्यन्तम्** अत्यर्थम्। नखाग्रादारभ्य शिरःपर्यन्तैः सकलैरप्यवयवैः सहेत्यर्थः। **अन्तं** नाशं भस्मीभावम्, **आयाति** प्राप्नोतीति **यत्** यस्मात्, **तत्** तस्मात् **फलकामी** फलम् अग्निष्टोमादीनां कार्यं स्वर्गादिकमिच्छन् पुरुषो, **हास्यः** अपहासार्हः। इहैव नष्टस्य पुरुषस्य कालान्तरभाविनः फलस्य भोक्तृत्वानुपपत्तेरिति भावः। किञ्च फलभोगाय देहान्तरो-त्पत्तौ सत्यामपि फलभोक्तृत्वं न सिध्यतीत्याह – **स्वर्ग** इति। **अस्य** (स्वर्गा? यागानु)ष्ठातुः पुरुषस्य, **ईहा** चेष्टा धर्मानुष्ठानं, **स्वर्गे कां सिद्धिं** फलनिष्पत्तिं, **करोति**। न काम-

पीत्यर्थः । क्रियाणां जडत्वात् पाकादिक्रियाणामिव यागादिक्रियाणामपि फलदातृत्वानुपपत्तेरिति भावः ॥ २४ ॥

ननु देहव्यतिरिक्त एवात्मा, स च एतद्देहपाते देहान्तरं गृहीत्वा देशान्तरकालान्तरभावि कर्मफलं भुङ्क्ते च । तस्माद्धर्मोऽनुष्ठेय एव इत्यत्राह –

**का पुनरङ्गात्र मितिः स्मरत यदि त्रिशत्यसौ परं गात्रमिति ।**
**यद्ययमक्षे पतति ध्रुवं मतं युष्मदीयमक्षेपतति ॥ २५ ॥**

**का पुन**रिति । पुनश्शब्दो वाक्यालङ्कारे । अङ्ग इत्यामन्त्रणे । अत्र इतिशब्दार्थमहिम्ना मन्यध्वे इति पदमाक्षिप्यते । **अङ्ग**! हे असुराः, **असौ** पुमान् **परम्** एतद्देहादन्यद्, **गात्रं त्रिशति** कर्मफलसाधनत्वेनाङ्गीकरोति **इति** मन्यध्वे **यदि** तर्हि अत्र परगात्रप्रवेशे, **का पुनर्मितिः** प्रमाणम् । न कापीत्यर्थः । **स्मरत** युक्तितो विचारयध्वम् । तदा युष्माकमप्येतद्धृदयङ्गममेवेति भावः । चार्वाकमते प्रत्यक्षमेकमेव प्रमाणम् । अनुमानादीनि न प्रमाणानि । यथाहुः-

"प्रत्यक्षदृष्टमेवास्ति नास्त्यदृष्टमदृष्टतः ।"

इति । तदाश्रयणेनात्र प्रमाणाभावं हृदयङ्गमीकृत्य धर्मस्यानुष्ठेयतामाक्षेप्तुमाह – **यदी**ति । **अयं** परगात्रप्रवेशलक्षणोऽर्थः, **अक्षे** प्रत्यक्षे, **पतति** प्रत्यक्षविषयो भवति, **यदि** तर्हि **युष्मदीयं** युष्मत्संबन्धि, **मतं** धर्मस्यानुष्ठेयलक्षणो वः सिद्धान्तः, **अक्षेपतति** क्षेपः खण्डनीयता तेषां ततिः समूहः तद्रहितं भवेद्, **ध्रुवं** निश्चितमेतत् । अक्षेपमिति वक्तव्ये अक्षेपततीत्युक्तं युष्मन्मतखण्डने अहमहमिकया शतशो युक्तयः प्रसरन्तीति द्योतयितुम् । अयमर्थः– यद्यात्मनः परगात्रप्रवेशस्य प्रत्यक्षविषयत्वं तर्हि युष्माकं पक्षः (स्वर्गा? सा)धिष्ठः अन्यथा खण्डित एव इति । आत्मनो देहान्तरग्रहणस्याप्रत्यक्षत्वे कस्यापि न विमतिः । तस्माद्धर्मो नानुष्ठेय इति भावः ॥ २५ ॥

ननु प्रत्यक्षविषयो देह एव नात्मा । देहव्यतिरिक्तोऽप्रत्यक्षो बोधलक्षणः कश्चित् पदार्थोऽस्त्येव । स एवात्मा । स च देहान्तरं गृह्णातीत्यत्राह –

**श्राव्या मदवध्येयं वाग् बोधं वित्त मद्यमदवद् ध्येयम् ।**
**सार्धं तन्वा तेन प्रणश्यते विघटनान्तु तन्वाते न ॥ २६ ॥**

**श्राव्येति** । अत्र 'संबोधनसारो युष्मदर्थः' इति न्यायाद् मध्यमपुरुषाक्षिप्तो युष्मदर्थः असुरा इति पदमाक्षिपति । हे असुराः!, **मद्** मत्सकाशाद् **इयं वाक्** वक्ष्यमाणा वाक् भारती, **श्राव्या** अवश्यं श्रोतुं योग्या । कीदृशी । **अवध्या** युक्तिमत्त्वात् केनाप्यबाध्या । अत्र वक्तव्यार्थवचनव्यतिरेकेण वाचः श्राव्यत्वविधानाद् मया सिद्धान्तसार उपदिश्यते तत् सावधानाः शृणुतेति व्यज्यते । **बोधं** देहगतं चैतन्यं **मद्यमदवद्** मद्येन हेतुना यो मदः मनोविकारः तेन तुल्यं तद्वदागन्तुकं, **ध्येयं** ध्यातुं योग्यं, बोद्धव्यं, **वित्त** जानीत । तस्य देहान्तरग्रहणं न संभवतीत्याह – **सार्धमिति** । **तेन** बोधेन **तन्वा** शरीरेण **सार्धं** सह, **प्रणश्यते** अत्यन्ताभावः प्राप्यते । कारणाभावे कार्यमपि नश्यत्येवेति भावः । तनुबोधौ **विघटनां** विश्लेषम्, इतरेतरस्माद् अन्यतरत्यागेऽन्यतरस्य गमनं, **न तु** नैव **तन्वाते** कुर्वाते । कार्यकारणयोर्भेदाभावादिति भावः । एतदुक्तं भवति – चार्वाकमते आकाशस्याप्रत्यक्षत्वेनासत्त्वात् पृथिव्यप्तेजो वायुश्चत्वार्येव भूतानि । भूतचतुष्टयारब्धो देह एवात्मा । देहगतं चैतन्यं मदवदागन्तुकमेव । यथा मद्यसंयोगे मदो जायते मद्यशक्तिवियोगे विलीयते च तथा चैतन्यमपि भूतचतुष्टयसंयोगे जायते तद्वियोगे लीयते च । अतो देहव्यतिरेकेण देशान्तरकालान्तरभाविकर्मफलभोगाय देहान्तरं गृह्णन् कश्चित् पदार्थो नास्त्येव इति ॥ २६ ॥

अस्तु वा देहव्यतिरिक्त आत्मा; तस्य देहान्तरग्रहणमप्यस्तु । तथापि कर्मणां फलदातृत्वानुपपत्तेः तस्य फलभोक्तृता न सम्भवतीति इत्याह –

**क्रियते यत्तावदथ श्रुतिगम्यं यच्च यत्ता वदथ ।**
**इह लोके नाश्येतद् ध्रुवमस्य फलं परत्र केनाश्येत ॥ २७ ॥**

**क्रियत** इति । अत्र मध्यमपुरुषाक्षिप्तयुष्मदर्थबलाद् असुरा इति संबोधनं सिध्यति । हे असुराः! यूयं **यत्ताः** सषडङ्गचतुर्वेदाध्ययने तदर्थविचारे च महान्तं यत्नं प्राप्ताः भूत्वा

**श्रुतिगम्यं** वेदवाक्यवेद्यं, **यत्** कर्म दर्शपूर्णमासज्योतिष्टोमादिकं, **वद्थ** श्रेयस्साधनतया कर्तव्यत्वेन समर्थयथ । **अथ** अर्थविचारानन्तरं, **यत्** कर्म, **तावत्** साकल्येन यत्किञ्चिद्प्यवयवैः (वै)कल्यमन्तरेणेत्यर्थः । **क्रियते** अनुष्ठीयते **च**, **एतत्** कर्म, **इह** अस्मिन्, **लोके नाशि** अतिशयेन नाशयुक्तम्। अतिशायने मत्वर्थीयः। अनुष्ठानसमनन्तरमेव निखिलैरप्यवयवैः सहात्यन्ताभावं प्राप्तमित्यर्थः। **ध्रुवं** निश्चितमेतत् । उभयवादिसम्मतत्वादिति भावः। तस्माद् **अस्य** अत्यन्ताभावमापन्नस्य कर्मणः **फलं** स्वर्गादिकं, **परत्र** परलोके, **केन अश्येत** भुज्येत । न केनापि । असतोऽर्थक्रियाकारित्वाभावादिति भावः ॥ २७ ॥

अस्तु वा कर्मणः फलदातृत्वं, तथापि अभिमतफललाभो (स?) न सेत्स्यतीत्याह –

**फलमपि न भवेदिष्टं लभतेऽसौ यदि पुरातनभवे दिष्टम् ।**
**तर्हि समिद्धो नरतः समिधमभुत्राश्नुते समिद्धोऽमरतः ॥ २८ ॥**

**फलमिति**। **इष्टं** स्वाभिमतं, **फलम्** उर्वशीसम्भोगादिकं, **न भवेदि**ति प्रति(ष्ठा?ज्ञा।) (समा?धर्मा)नुष्ठातुरिति शेषः। प्रतिज्ञातमर्थमुपपादयन्नाह – **लभत** इति। **असौ** धर्मानुष्ठाता पुरुषः, **पुरातनभवे** पूर्वजन्मनि, **दिष्टं** दत्तं, **लभते** प्राप्नोति, **यदि तर्हि समिद्धोनरतः** समिधां पलाशादिकाष्ठखण्डानां होमे रतः तत्परः पुरुषः, **समिद्धः** धर्मानुष्ठानमाहात्म्यशालितया प्रज्वलितः, **अमुत्र** परलोके, **अमरतो** देवेभ्यः, **समिधमश्नुते** प्राप्नोति। नोर्वशीसम्भोगादिकम् ।

"दीयते देवताभ्यो यदिह तद् भुज्यते पुनः ।"

इति **वचनाद्**, दत्तस्यैवादानोपपत्तेश्चेति भावः ॥ २८ ॥

श्रौतवत् स्मार्तं कर्मापि नानुष्ठेयमित्याह –

**स्याद्यदि मोदनतोऽयं प्रेतोऽन्यत्राश्नतीष्टमोदनतोयम् ।**
**पथि जनता पाथेयं नयति कुतोऽतः समारतापाथेयम् ॥ २९ ॥**

**मुक्त्वेति।** **अच्छाद्** यथाविध्यनुष्ठानेन निर्दोषाद्, **यागाद्** यजनाद्धेतोः, **सद्यः** यजनसमनन्तरमेव, **प्रमथगणः** भूतगणः, **उद्यम्** आविर्भावं, **प्रययौ** प्राप्तः। किं कृत्वा। **अट्टहासं मुक्त्वा**। कृत्वेत्यर्थः। कीदृशः। **यः** प्रमथगणः, **मथितरिपुमहासंसद्** मथिता महती रिपूणां संसत् समूहो येन स तथा। शौर्यशालीत्यर्थः। **जगद्** भूरादिलोकम्, **अवच्छाद्य** स्वैरावृत्य, **त्रिपुरं** पुरत्रयम्, **अगाच्च** गतवान्। प्रमथितुमिति शेषः। त्रिपुरमिति। तिस्रः पुरः समाहृता इति विगृह्य 'तद्धितार्थ' (पा०सू०२-१-५१) इत्यादिना समासः। 'ऋक्पूः' (पा०सू० ५-४-७४) इत्यादिना समासान्तोऽच्प्रत्ययः। त्रीणि पुराणि समाहृतानीति वा विग्रहः। तदा पात्रादित्वात् स्त्रीत्वाभावः॥ १६॥

विष्णोर्व्यापारो विफलोऽभूदित्याह—

**तान्यपि वासवहानिप्रदानि नगराणि शिवनिवासवहानि।**
**प्रध्वंसं भूतानि द्रुतमनयन् यानि यजनसम्भूतानि॥ १७॥**

**तानीति।** **नगराणि** पुराणि कर्तृभूतानि, **तानि भूतानि** प्रमथान्, **द्रुतं** क्षिप्रं, **प्रध्वंसं** विनाशम्, **अनयन्नपि** प्रापयन्ति स्म च। कानि नगराणीत्यत्राह—**वासवेति।** वासवस्येन्द्रस्य हानिं पीडां प्रददातीति। असुरसंबन्धिनीत्यर्थः। एतत् प्रध्वंसे हेतुः। **शिवनिवासवहानीति।** वहन्तीति वहानि। पचाद्यच्। शिवनिवासस्य शिवालयस्य वहानीति विगृह्य 'कृद्योगा च षष्ठी समस्यत इति वक्तव्यम्' (पा०सू०वा०२-२-८) इति समासः। शिवसान्निध्यमेवासुराणां भूतप्रध्वंसे सामर्थ्यावहमिति भावः। भूतानि विशिनष्टि—**यानीति।** **यानि भूतानि यजनसंभूतानि** यजनाद् उपसद्यागात् सम्भूतानि उत्पन्नानि। अशक्यपरिभवानीत्यथः॥ १७॥

अथ विफलीकृतव्यापारो विष्णुः किमकरोदित्याशङ्कायां तत्प्रवृत्तिं वक्तुमुपक्रमते—

**शक्तिरकम्प्रा सादिगता जनैर्यत्र चाधिकं प्रासादि।**
**यत्कटकं प्रासादिस्फीतं यत्तुङ्गवेदिकं प्रासादि॥ १८॥**

**शक्तिरिति**। अस्योत्तरश्लोकेन सम्बन्धः। **यत्र त्रिपुरे, सादिगता** सादिनोऽश्वारोहाः तान् गता प्राप्ता, **शक्तिः** सामर्थ्यम्, **अकम्प्रा** अकम्पशीला स्थिरा भवति। अनभिभवनीयेत्यर्थः। **प्रासादि च** मनःप्रसादो नाभी च। कदाचिदपि दुःखासंस्पर्शात् सुखेनैवावस्थितमित्यर्थः। य(द्) इत्यनुषज्यते। **यत्कटकं** यस्मिन् कटकं सैन्यं, **प्रासादिस्फीतं** प्रासादिभिः कुन्तप्रमुखैः आयुधैः स्फीतम्। "सैन्येषु कटकोऽस्त्रियाम्" इति **यादवः। यत्** पुरत्रयं, **तुङ्गवेदिकं** तुङ्गा उन्नता वेदिः वितर्दिः यस्मिन् तत्तथा।

"वेदिर्वितर्दौ यागाय परिष्कृतमहीतले।
अग्निकुण्डे चतुष्कोणे त्वग्नि(द? कु)ण्डे परे जगुः॥"

इति **केशवः। यच्च प्रासादि** प्रासादो मन्दिरविशेषः।

"**प्रासादो** मन्दिरान्तरे।
नृपाढ्यदेवतादीनाम्"

इति **केशवः**॥ १८॥

**विप्रततावध्यायध्वंसि स्फीतं श्रिया गतावध्या यत्।**
**हरिरहितावध्याय त्रिपुरायेर्ष्यन् हते क्रतावध्यायत्॥ १९॥**

**विप्रततावि**ति। **यच्च विप्रततौ अध्यायध्वंसि** अध्यायो वेदपाठः तद्ध्वंसनशीलं, **यच्च गतावध्या** गतोऽवधिस्सीमा यस्यास्सा तथा। अपरिमितयेत्यर्थः। **श्रिया** सम्पदा, **स्फीतं, हरिः** विष्णुः, **क्रतौ** क्रतोः कार्यभूते प्रमथगणे, **हते** निगृहीते, **तस्मै** उक्तगुणविशिष्टाय, **त्रिपुराय ईर्ष्यन्** क्रुध्यन् सन्, **अध्यायत्** चिन्तयामास। "क्रुधद्रुह" (पा० सू० १-४-३७) इत्यादिना त्रिपुरस्य सम्प्रदानसंज्ञा। पुरत्रयं विशिनष्टि – **अहिते**ति। अहितैः शत्रुभिरवध्याय हन्तुमशक्याय। पुरत्रयस्याध्यायध्वंसाद्यधर्माचारित्वे सति सादिस्थितशक्तेरकम्प्रतादिवैशिष्ट्यं च हितावध्यत्वं च। प्रयासविफलीकरणं चेर्ष्याया हेतुः॥ १९॥

ध्यानप्रकारं दर्शयति –

**अश्नुवते न विनाशं शिवप्रसादादमी न तेन विना शम् ।**
**अहमाशु भवादरतः तदमून् व्यावर्तयाम्यशुभवादरतः ॥ २० ॥**

**अश्नुवत** इति । **अमी** चाराः असुराः, **शिवप्रसादाद्धे**तोः, **विनाशं** निग्राह्यत्वं, **न अश्नुवते** प्राप्नुवन्ति । एते अवध्या भवन्तीति यावत् । तत्र शिवप्रसाद एव हेतुः नान्यत् किञ्चिदित्यर्थः । एतच्चोपपत्तितो निश्चितवान् इति दर्शयति - तेनेति । **तेन** शिवप्रसादेन, **विना** अन्तरेण, **शं** सुखं, **न** भवति । एषां सुखप्राप्तेरन्यथानुपपत्त्या शिवप्रसाद एव हेतुतां व्रजतीत्यर्थः । तन्मया किमत्र कर्तव्यमिति विमृश्य तदपि निश्चितवानिति (आह) अहमिति । यस्माच्छिवप्रसादस्य तदवध्यत्वे हेतुत्वं **तत्** तस्मात्, कालविलम्बनं विना **अशुभवादरतः** अशुभः तर्काभासरूपत्वादमङ्गलः यो वादस्तत्र रतः तत्परः । पाषण्डागमोक्तप्रस्थानप्रवर्तक इत्यर्थः । भूत्वेति शेषः । **अमून्** असुरान्, **भवादरतः** शिवभक्तेः, **व्यावर्तयामि** वर्तमान-सामीप्ये लट् । कालक्षेपमन्तरेणासुरान् भवभक्तविमुखान् करिष्यामीत्यर्थः ॥ २० ॥

हरिरेवमुद्दिश्य तेषां भक्तिनिरासार्थमुपक्रान्तवानित्याह –

**इति तासान्निध्याय त्वये पुरां पशुपतेरसान्निध्याय ।**
**रूपं महितमतानि प्रभुणास्तिक्यान्निरोद्धुमहितमतानि ॥ २१ ॥**

इतीति । **प्रभुणा** विष्णुना, **इति** उक्तप्रकारेण, **निध्याय** नितरां सोपपत्तिकं ध्यात्वा, **अहितमतानि** अहितानां शत्रूणां मतानि सङ्कल्पान् **आस्तिक्याद्** ईश्वरोऽस्तीति मतिर्यस्य स आस्तिकः । 'अस्ति नास्ति दिष्टं मतिः' । (पा० सू० ४-४-६०) आस्तिकस्य भावमास्तिक्यं तस्मात् । शिवभक्तेरित्यर्थः । **निरोद्धुं** व्यावर्तयितुं, **महितं** पूजितं, **रूपम्**

अतानि कृतम्। **पुरां त्रये पशुपतेः** शिवस्य, **असान्निध्याय** सन्निधिरेव सान्निध्यं तस्याभावाय। शिवभक्तिव्यपोहनायेत्यर्थः ॥ २१ ॥

रूपान्तरग्रहणानन्तरं हरिः किमकरोदित्याह —

**अपि तपसे विविधाय त्रिदशसदः शैलकटकसेवि विधाय।**
**शम्भोः सन्नमनाय स्वयं पुराण्यगमदनवसन्नमना यः ॥ २२ ॥**

**अपीति। अपिर्वाक्यार्थसमुच्चये** । अत्र यच्छब्दबलात् तच्छब्दः सिध्यति। **स** हरिः, **स्वयं पुराणि अगमदपि** प्रसवांश्च। असुराणां मतिभेदं जनयितुमिति शेषः। हरिं विशिनष्टि — **य** इति । **अनवसन्नमना** अनवसन्नं च प्रयासस्य वैफल्ये अप्यप्राप्तकुण्ठीभावं मनो यस्य स तथा। अनेनास्य प्रवृत्तेः फलपर्यन्तता ध्वन्यते। तथैव ह्युत्तमस्वभावः। यथाहुः—

"प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥"

इति। किं कृत्वा गतवानित्यत्राह — **तपस** इति । **त्रिदशसदः** त्रिदशानां देवानां सदः ससूहं, **विविधाय** होमतर्पणनमस्कारादिरूपतया बहुविधाय, **तपसे** तपोर्थं, **शैलकटकसेवि** शैलस्य पर्वतस्यार्थात् कैलासस्य यत् कटकं नितम्बः तत्सेवि तदाश्रयशीलं, **विधाय** कृत्वा । "कटकोऽस्त्री नितम्बोऽद्रेः" **इत्यमरः** । तपो विशिनष्टि — **शम्भोरिति। शम्भोः** शिवस्य **सन्नमनाय** सन्नमनरूपाय। शिवप्रसादहेतुभूतायेत्यर्थः।

त्रिपुरगतो विष्णुः शिवभक्तेरसुरान् विमुखयितुमुपक्रान्तवानित्याह—

**प्राप्तेनासुरसार्थं वचनं प्रोचे च विष्णुना सुरसार्थम्।**
**हितगिरमसुरा मत्तः शृणुतेच्छति को नु धर्ममसुरामत्तः ॥ २३ ॥**

त्रासयन्निव दिक्पालान् शैलानुन्मूलयन्निव ।
पूरयन्निव पातालमूर्ध्वाण्डं विक्षिपन्निव ॥ ७४ ॥

आधून्वन्निव चेतांसि सर्वेन्द्रियविमोहनः ।
शुश्रुवे सुमहान् नादो दिग्गजोन्मादमर्दनः ॥ ७५ ॥

कल्पोद्वृत्ताब्धिकल्लोलकलहाक्रन्दमेदुरः ।
शब्दः स बाडवाग्नेरप्यासीद्दीपद्विभीषिका ॥ ७६ ॥

आलिलिङ्गुर्मिथः केचिद्विजने गूढकामिवत् ।
अधावन्नपरे लुब्धाः सन्त्यज्येव धनं पथि ॥ ७७ ॥

पेतुः केचन वित्रस्ताः पिशाचोपहता इव ।
मुमुहुश्चापरे युद्धे रक्तभ्रमहता इव ॥ ७८ ॥

मन्दं शिवशिवेत्युक्त्वा कृष्णवीरोऽपि साध्वसात् ।
आत्मनाच्छाद्य तद्देहं तत्रैवोपाविशत् कृती ॥ ७९ ॥

शनैर्लोकरवे शान्ते गम्भीरमधुरा पुनः ।
शुश्रुवे भारती कापि भेरीनादानुकारिणी ॥ ८० ॥

वत्स! केरळभूपीठकेतो! हे वीरकेरळ! ।
भद्र! जागृहि भद्राय चिरायेह परत्र च ॥ ८१ ॥

भक्तितस्तव तुष्टोऽस्मि पूजया चानया भृशम् ।
दत्तपिण्डे खलु श्वापि स्निग्धधीः किमुतोत्तमः ॥ ८२ ॥

यत्तवाभीष्टमस्त्यन्तर्वस्तु तन्मयि विद्यते ।
इष्टानिष्टे सदसती सर्वं वा सर्वदेहिनाम् ॥ ८३ ॥

कन्या सुदुर्लभा वत्स! मत्प्रसादं विना तव ।
तां प्रयच्छाम्यहं तुभ्यं वन्ध्यवाञ्छा न मज्जुषः ॥ ८४ ॥

ममांशः केरळावन्यामस्ति कश्चन मानवः ।
धुरैव विप्रकार्यार्थमवतीर्णः सुपुण्यधीः ॥ ८५ ॥

मत्कामिनी ततो गौरी त्वत्कन्यात्वमुपेयुषी ।
अचिरेणैव वीरस्य तस्य भार्या भविष्यति ॥ ८६ ॥

धन्यस्त्वमसि धर्मज्ञ! पुत्री मत्प्रेयसी तव ।
अहञ्च हन्त जामाता वर्तिष्ये वरदो नृणाम् ॥ ८७ ॥

भुक्तिमत्र चिरं लब्ध्वा पात्रे पुत्रीं समर्प्य च ।
तद्गुणैः प्रीयमाणश्च विरामे मुक्तिमाप्स्यसि ॥ ८८ ॥

इति विविधशुभार्था वागभिव्यक्तवर्णा
निखिलहृदयकर्णग्राहिणी निश्शरीरा ।
सदसि यदुनरेन्द्रं तं समाश्वासयित्वा
सुरपरिवृढधाम्नस्तूर्णमन्तर्दधेऽन्तः ॥ ८९ ॥

नरपतिरपि बुद्ध्वा तन्निशम्येश्वरं तं
चरणनलिनलक्षैः स्तोत्रवाक्यैः प्रसाद्य ।
भवनभुवमथागत्याप्तलोकैरुदन्तं
सकलमनुलपंस्तं शर्वरीं तां निनाय ॥ ९० ॥

शिष्टमासमपि तद्वदूढवानिष्टदैवतसमर्चनं नृपः ।
नित्यमेव शिवदर्शनव्रतं तत्प्रभृत्यमलधीरधारयत् ॥ ९१ ॥

॥ इति शिवविलासे तृतीयः सर्गः ॥



## ॥ चतुर्थः सर्गः ॥

अथ मासचतुष्टये व्यतीते शिवपूजानुगते क्षितीशकान्ता ।
समभूष्यत लक्षणैरुदारैरुदरान्तर्गतसर्वमङ्गलाङ्गैः ॥ १ ॥

निखिलानि जगन्ति नैव सोढुं यदलं तद्धती विशिष्टमोजः ।
अलसैरपि सा लसद्भिरङ्गैर्नवपीयूषमभून्नरेन्द्रदृष्ट्योः ॥ २ ॥

शरपाण्डुमुखारविन्दमस्या वपुरल्पाभरणं क्रमाद् बभासे ।
प्रतिबिम्बितचन्द्रमर्धहृष्यत्कमलं पाथ इवोष्णपङ्कजिन्याम् ॥ ३ ॥

मलिनौ मुख ईषदानताङ्ग्या सुभृतावुन्नतिमुत्तमां प्रपन्नौ ।
तनुसाददशागमेषु तस्या भृशमालिन्ययुतौ स्तनावभूताम् ॥ ४ ॥

क्रमवृद्धपरार्ध्यगर्भमूर्च्छच्छ्रियमुच्छृङ्खललक्ष्यदिव्यभावाम् ।
निधिगर्भमहीमिवेक्षमाणो नृपतिस्तां प्रमुमोच नो कदाचित् ॥ ५ ॥

हिमवाप्यवगाहनं नु किं स्यादभिषेको नवरत्नराशिभिर्वा ।
अथवा परमेव तत्सुसाधं दयिते! त्वत्प्रियमित्यजस्रमूचे ॥ ६ ॥

अरुचिं दधदन्नपानमुख्ये सुमनोवर्जमथापि भूषणेषु ।
क्रमशः समभून्मनः कृशाङ्ग्याः परमेशस्तुतिगीतमात्रसक्तम् ॥ ७ ॥

चलगर्भविलोलकुक्षिमेनां प्रथमं प्रैक्षत योऽखिलः स लोकः ।
परशक्तिमिह स्थितां ववन्दे मनसा मङ्गलमुद्गिरन् वचोभिः ॥ ८ ॥

उदरे परिधत्स्व मा दुकूलं न सुता तत्सहते म्रदीयसी मे ।
इति हार्दबलार्द्रधीर्नृपोऽस्यास्तदधिश्रोण्यवतारयाञ्चकार ॥ ९ ॥

अलसालसपक्ष्मलोचनं तद्वदनं घर्मतुषारचारुगण्डम् ।
मृदुहासयुतं कथाविनोदे शरदुन्निद्रसरोजबन्धुरासीत् ॥ १० ॥

उपधाय भुजं मुहुश्शयाना विपुलापाश्रयसंश्रयैकपार्श्वा ।
परिवारवधूरसान्वरौत्सीच्चिरसंवाहनपीडिताङ्घ्रिपद्मा ॥ ११ ॥

व्यजनानिलचञ्चलालकाग्रामजिनोद्धास्तृततल्पगां सदैनाम् ।
दयया व्यथितोऽभवत्स दृष्ट्वा शुभभावित्वविनिश्चयेऽपि भूपः ॥ १२ ॥

मितगर्भरुगातुरेति यस्मिन् क्षण एनां वनिताजनो ह्यबोधि ।
स्वगलार्पितलोलबाहुयुग्मामनयत्तत्र शनैररिष्टगेहम् ॥ १३ ॥

मनुभेषजधीपदेशपादा (?) बहुमङ्गल्यवृता क्षणेन कुक्षौ ।
समसिच्यत तैलधारयासौ श्रुतिवाचा श्रवणे यथा द्विजन्मा ॥ १४ ॥

अथ चायतदृश्युपात्तहूतौ शिव! शैवालपुरेश! शङ्करेति ।
स्वयमेव घनौघवत्त्रिलोकीसदनाः सस्वनुराशु शङ्खभेर्यः ॥ १५ ॥

सुरतापससिद्धयक्षमुख्यैरवमुक्ता कुसुमावलिः पपात ।
नभसो भुवि देवि! लोकमातर्जगतां धात्रि! जयेति शब्दमिश्रा ॥१६॥

विशदाक्षरवेदघोषमिश्रो दिवि गान्धर्वरवः प्रशुश्रुवे च ।
सुरवारमृगीदृशाञ्च नृत्तं परितोऽदृश्यत मातरिश्वमार्गे ॥ १७ ॥

शुभपट्टवितानसन्तता द्यौर्ददृशे चित्रविलम्बिपुष्पमाला ।
समलक्ष्यत लोलचामराभ्यां सह च छत्रमनुत्तमं ततोऽधः ॥ १८ ॥

इति नैकविधेऽद्भुते पुनश्चाप्युपजाते मुहुरुत्सवाग्र्यभूते ।
किमिदं न्विति सम्भ्रमं जनानां विदधानो ध्वनिरम्बरे जजृम्भे ॥ १९॥

इयमेव पुरस्य चास्य भूमेर्वलयस्याप्यखिलस्य नायिकाग्र्या ।
न च तस्य परं विनिश्चिनुध्वं भुवनानामपि सप्तकद्वयस्य ॥ २० ॥

अनया धृतमत्सरं मनश्चेदपहास्यौ ध्रुवमब्धिजाम्बुजाक्षौ ।
अनयोरपि नूनमुन्नतिः स्यादधिका सेयमनुग्रहोन्मुखी चेत् ॥ २१ ॥

भजतामनुपप्लवाय भूमिं परमेनां परदेवतां प्रपन्नाम् ।
मतिभाषितचेष्टितैर्भजन्ते मनुजा ये नियतं त एव धन्याः ॥ २२ ॥

इति वाक्यकुलात्मके स्वनेऽस्मिन्नशरीरे प्रतिनादिनि प्रशान्ते ।
प्रमदाजनभूर्नमश्शिवायध्वनिरश्रूयत सूतिकानिकेते ॥ २३ ॥

उलुल्रुत्विस्तरे तरङ्गप्रतिमेऽथ क्रमशो विजृम्भमाणे ।
श्रुतिहारि सुमङ्गलं किशोरीरुदितं मञ्जुरवं प्रशुश्रुवेऽन्तः ॥ २४ ॥

तनुजाजनि भूभुजश्चिरान्नः फलितं वाञ्छितभूरुहेण राज्ञः ।
नृपवीर! कुमारिकाविरासीद्दुहिताद्रेरिति सल्लाप लोकः ॥ २५ ॥

सलिलैस्तुहिनेन चन्द्रिकाभिः पयसा चन्दनकर्दमैः सुधाभिः ।
प्रियवाग्व्यपदेशतः समानं पृथिवीशः पृथगभ्यवर्षि लोकैः ॥ २६ ॥

मणिहेमदुकूलरूप्यगोभूकलमैस्तण्डुलकम्बलैः कुथाभिः ।
घुसृणेन्दुपटीरशस्त्रपत्रैस्तिलतैलैरपि तेष्ववर्षि राज्ञा ॥ २७ ॥

नृपतिः प्रियवादिपात्रयित्वा धनमन्यन्मुकुटाद्यमुत्सिसृक्षुः ।
निजराज्यविसर्जनोद्यमेन प्रकृतीनां न्यरुणन्निवारणानि ॥ २८ ॥

जरठांस्तरुणान् जळान् विदग्धान् द्विजमुख्यान् वृषलांश्च निर्विशेषम् ।
पथिकान् प्रकृतीः परिष्वजन् स क्रयविक्रयमपूरयत् प्रियोक्तेः ॥२९॥

पटुमङ्गलगीतिशङ्खभेरीपटहारावकुलाकुलेऽप्यजस्रम् ।
न तदाविरभून्नृपालगेहे जनताशीर्वचनादृते रवोऽन्यः ॥ ३० ॥

अथ भूपतिरालयं प्रसूतेरवगाह्योत्सुकसल्लपन्महेलम् ।
गुरुभासमपश्यदात्मजां स्वां लघयन्तीं हृदयेप्सितां कुमारीम् ॥३१॥

वदनादिपदान्तमेतदङ्गं प्रबुभुत्सोरिदमित्थमित्यथास्य ।
हृदयं मुहुरेव मुह्यति स्म स्थगयन्त्या प्रभया दृशौ किशोर्याः ॥३२॥

प्रणतिप्रवणेऽथ भूमिपाले कृतदिक्चक्रविमोहमङ्गभाजाम् ।
सहसाजनि तद्वपुः सुसौम्यं सकलस्यापि विलोचनोपभोग्यम् ॥३३॥

अथ केनचिदप्यनुद्धृता सा नृपकन्या शयनीयतश्शुभाङ्गी ।
प्रणतं पितरं निवारयन्ती करपद्मेन करेऽस्य दृश्यते स्म ॥ ३४ ॥

अतिविस्मितचेतनः क्षितीशः स ततो दिव्यविचेष्टितं कुमार्याः ।
अमितं बहुमानचारुहार्दं विमृशन्नात्मनि हर्षविक्लबोऽभूत् ॥ ३५ ॥

स शिरस्यमले मुहुः कपोले मृदुले काम्यतरे गलान्तरे च ।
समजिघ्रदुरःस्थले दधौ च क्रमशस्तां मुरहेव वैजयन्तीम् ॥ ३६ ॥

अभिषिच्य मुहुस्तदाननाब्जं प्रचुरप्रीतिभवैः स्वबाष्पतोयैः ।
रुचिमस्य हिमैरपि प्रमार्ष्टुं प्रबभूवाप्रतिमां न यादवेन्द्रः ॥ ३७ ॥

इति तस्य विभोः प्रमोदचेष्टा निकटस्थाः सुचिरं विलोकयन्त्यः ।
अलमित्यपहृत्य तत्करात्तां जननीपार्श्वमुपानयन् वराङ्ग्यः ॥ ३८ ॥

नमिताङ्गुलि भुग्नपाणिसन्धिद्वयमाकुञ्चितजानु सद्य एव ।
विवृतायतदृष्टि वीक्षमाणा पितुरास्यं प्ररुरोद कन्यका सा ॥ ३९ ॥

रुद किञ्चन तव गारसज्ञास्यधिकं (?) यादवभर्तुरौरसी त्वम् ।
इति मञ्जुगिरोऽसृजन् विहासान्नृपशैलः स च बाष्पनिर्झरौघान् ॥४०॥

स ततो जनसङ्कुलान्निकेतादमुतो भूभृदमात्यचोदितः सन् ।
निरगात्तनयानुकृष्टदृष्टिप्रतिकृष्टिक्रियया विलम्बमानः ॥ ४१ ॥

सुहृदोऽप्यनुनिर्ययुः स्वभर्त्रा सहिताः स्नातमुपाक्रमंश्च सर्वे ।
अशनस्वपनाभिलाष एषां नृपकन्यास्मरणात्तिरोबभूव ॥ ४२ ॥

मृदुगन्धवहं विकस्वराशं ततगीतादि मिथोऽनुकूललोकम् ।
जगतः सकलस्य चैव तस्या जनिनक्षत्रमभूत्तदुत्सवाय ॥ ४३ ॥

कतिचिद्वसुधाधिपोऽथ नीत्वा शुभनित्योत्सवसङ्कुलान्यहानि ।
उचितं किमु नाम नाम पुत्र्या इति मित्रैर्बहु मन्त्रयाम्बभूव ॥ ४४ ॥

अविनिश्चयतः क्रमेण शोचन् विजनेऽशेत विचिन्तयन्मुहूर्त्तम् ।
विनिमीलितमात्र एव नेत्रे प्रभुरर्द्धाङ्गनशम्भुराविरास्मीत् ॥ ४५ ॥

प्रतिपच्छशिभूषणः कुहापि क्वचिदुन्नद्धमनोज्ञजातिमालः ।
दहनस्थितिमान् क्वचित् कुहाऽपि प्रसरत्कुङ्कुमपङ्कपुण्ड्रदीपः ॥ ४६ ॥

गरगर्भतया सुमेच [क] श्रीः कुहचित् क्वापि निसर्गतोऽतिनीलः ।
सुविचित्रतरक्षुचर्मधारी क्वचिदन्यत्र च नैकवर्णवासाः ॥ ४७ ॥

सितरत्नलसत्पयोधरत्वात् क्वचिदुद्दामरुचिः परत्र चैवम् ।
मणिभास्वदहीनमेखलत्वं दधदेकत्र परत्र चैतदेव ॥ ४८ ॥

क्वचिदुत्पलकान्तिमत्कराग्रः क्वचिदप्यम्बुरुहाभिरामपाणिः ।
खरशूलसमुद्धृतिं प्रकुर्वन् कुहचित्तां क्वचिदप्यमर्त्यपङ्क्तेः ॥ ४९ ॥

दुरितान्तकपालतां दधानः क्वचिदन्यत्र च तद्वदेव नित्यम् ।
अतिवेलमपाशतां धुनानः क्वचिदन्यत्र च तां स्वभक्तिभाजाम् ॥ ५० ॥

अविशेपतयेत्यतीव भिन्नोऽप्यखिलेशः स जनेश्वराग्रसंस्थः ।
शृणु भूप! सुताभिधाश्रयं मे वच इत्यार्द्रमुदीर्य वाचमूचे ॥ ५१ ॥

परिणीतिविधेरनन्तरं नौ विरहाभावविधित्सयो निगूढः ।
प्रकटीकृत एष भव्यवेपः प्रणतापत्तिहरो विशिष्टदेहः ॥ ५२ ॥

भुवनोद्भ्रमणप्रदे प्रवृत्ते दिवसान्तस्पृशि ताण्डवे प्रचण्डे ।
मृदुलास्यकृदप्यसौ तदा नो नटनस्याजनि विघ्नकारिणी मे ॥ ५३ ॥

विगतस्खलिता सदैव ताले त्रिविधायाश्च गतौ भृशानुकूला ।
करणादिषु चाप्यकातराङ्गी निपुणा भ्रूनयनादिचेष्टिते च ॥ ५४ ॥

अवधानवती तनोति नृत्तं पुनरद्यापि तदाद्यसौ तथैव ।
अमुतः क्रमशोऽकृशाद्यथा मे प्रियतामेत्यनुवासरं विशेपात् ॥ ५५ ॥

मम जीवितवल्लभा तवेयं दुहिता तद्भविता नरेन्द्रसिंह! ।
इममर्थमभिप्रदर्शयन्त्या भुवने ख्यातगुणाख्यया समस्ते ॥ ५६ ॥

अभिधानमिदं यथाथमुच्चैर्दयितं चात्मगुणप्रशंसयास्याः ।
अत एव ममापि नर्त्तकीनामुचितश्चेदृशमेव नाम लोके ॥ ५७ ॥

अविचार्य पुरैव चेटगेतत्कुलजानां क्रियमाणमस्ति नाम ।
नृप! केरळभाषया णकारं नपदे प्राकृतनीतितो नियोज्य ॥ ५८ ॥

इह चापि विधेहि तत्तथैव व्यवधानं कुरु मा क्षणान्तरेण ।
उभयोरपि पश्य नौ नियोगादधिकं मङ्गलमङ्ग! किन्तु लोके ॥ ५९ ॥

व्यतिरेक्यनया न भावनीयं भवतामिहापि भाविनि स्थितं मे ।
अशरीरतया स्मृतोऽप्यवश्यं न विभेम्यञ्जनताशये प्रवृत्ते ॥ ६० ॥

चितिशक्तिरसौ क्रियाममेच्छाप्यद उत्सृज्य वयं त्रयं तृणाभम् ।
तनुरस्मि ततोऽसवस्त्वसावित्यवधत्स्वाङ्ग विधत्स्व देशिकं माम् ॥ ६१ ॥

शिव इत्यपि शक्तिरित्यपि द्वौ शुभचैतन्यमहीरुहेशशाखे ।
भुवनं विकृतिस्तयोस्तदेकं सकलं तत्प्रविजानतां निदानम् ॥ ६२ ॥

श्रुतिशास्त्रविनिश्चितं रहस्यं मम वक्त्राद्विदितं विशेषतश्च ।
अविसृज्य चरन्निदं न पाशैरवबद्धो भवितास्यदो हि मुक्तिः ॥ ६३ ॥

सुखमास्व रमस्व भो! विरक्तस्तनयां विद्धि च मामुमासमेतम् ।
मयि मा स्मरणश्रमञ्च कार्षीः क्षिप मामद्भुतचेतनान्तरिक्षे ॥ ६४ ॥

उक्त्वा देवस्तमिति नृपतिं सुप्तमन्तर्दधे खे
बुद्ध्वा राजा प्रणतिमतनोत्तूर्णमुत्थाय तस्मै ।
सद्योऽकार्षीद् भृशमभिवृतां मङ्गलैराख्यया तां
कल्पापायेऽप्यकृशयशसं कन्यकामुण्णियाटीम् ॥ ६५ ॥

षष्ठे मासे सुहृदभिवृतो भोजयित्वान्नमेनां
नित्यं धात्रीनिवहविहिताभ्यङ्गशेषाङ्गशिक्षाम् ।
भृत्यैः स्कन्धे सततविधृतामग्रजक्षत्रियाग्र्यै-
रुत्सङ्गाङ्गीकृतमृदुतनुं वीक्ष्य वीक्ष्याननन्द ॥ ६६ ॥

अव्यक्तार्णं किमपि किमपि व्याहरन्ती हसन्ती
रोहद्दन्ता मुहुरत इतो रिङ्खणाद्रेणुदिग्धा ।

अङ्कस्थायिन्यतनुत विनोदाल्यतुल्यं किशोरी
सम्यग्मातस्थले मलिनीकृत्य सा पुत्रकार्यम् ॥ ६७ ॥

तर्जन्यग्रे जनयितुरथालम्ब्य सन्दर्शयन्ती
चित्रं दृष्ट्या बहुविधरुचा सञ्चचाराश्चितश्च ।
कैशोराल्या सह सवयसा पांसुपाञ्चालिकादि-
क्रीडाः कालादकृत च कृशानर्घविक्लिष्टवासाः ॥ ६८ ॥

पञ्चाब्दान्तात्सपदि पुरतः कृप्तचौळक्रियाथो
वर्णे पद्ये पदसमुदये प्राप वाक्ये च शिक्षाम् ।
नान्यैरेवाभरणनिवहैर्मण्डिता कुण्डलेनाऽ-
प्यासीद्भूयोऽध्यगमदखिलाश्चाथ गान्धर्वविद्याः ॥ ६९ ॥

शब्दे शिक्षातिशयबलतः शब्दमीमांसकानां
वाक्यार्थोक्तिप्रसरगतिभिः पूर्वमीमांसकानाम् ।
अद्वैतार्थे पटुमतितया तत्र चाप्युत्तरेषां
विस्मेरत्वं व्यधित सततं सा विशेषेक्षकाणाम् ॥ ७० ॥

प्रज्ञोत्कर्षः परिचयबलं देशिकेशानसेवा
पुण्ये निष्ठेत्यपि पृथगमी नाम विद्यां विदद्ध्युः ।
देवी साक्षाद्दयितसनकाद्यन्तरात्माङ्घ्रिपद्मा
सा चासौ यन्न तदिह किमप्यद्भुतं बोधभाजाम् ॥ ६१ ॥

केशाः कण्ठावधि विसृमरा मुग्धकान्तं मुखाब्जं
लास्यं चिल्यौ न च विदधतो नोदनामि स्तनाभ्याम् ।

अब्दोपक्रान्त्यरमसकृतोपक्रमश्चाष्टमोऽस्या
धत्ते गाढं तदपि मदनश्चापमद्ध्ये स्म मुष्टिम् ॥ ७२ ॥

चेटीधात्रीशतपरिवृता कन्दुकद्यूतमुख्यै-
रालीवर्गैररमत वधूः शिक्षयन्ती विदग्धाः ।
बाला केलीविपिननलिनीक्रीडितैः कालशेषं
भूयो नानोत्सवकुलसमालोकनैश्चाप्यनैषीत् ॥ ७३ ॥

इति विविधविहारैस्सर्वनारीनराणा-
ममृतसलिलमक्ष्णोराकिरन्ती चरन्ती ।
प्रतिदिनमभिवृद्धिं प्राप सा देहकान्त्योः
प्रतिनवशशिलेखां स्वैर्गुणैस्तर्जयन्ती ॥ ७४ ॥

अथासरति यौवने मदविभावसोरिन्धने
नृणामनिमिषेक्षणत्रिदशसन्ततेर्नन्दने ।
स्वबन्धुहरिचन्दने तरुणधैर्यविष्यन्दने
महीशतनया बभौ मदनसङ्कटस्यन्दने ॥ ७५ ॥

॥ इति शिवविलासे चतुर्थः सर्गः ॥



ततः शरत्पूर्णिमयेव कौमुदी वरप्रदाख्या लतयेव मञ्जरी ।
पयोब्धिवीचीघटया यथामृतं नरेन्द्रपुत्र्या नवयौवनं दधे ॥ १ ॥

बभुस्तदीया मृदुलाः शिरोरुहा मनोज्ञसीमन्तलताभिसंश्रिताः ।
स्मरस्य कक्ष्येव जगज्जयैषिणः सुनीलसंक्षिप्ततरङ्गिताकृतिः ॥ २ ॥

निसर्गसौरभ्यभरे तदानने मधुव्रतालिर्द्विजमुख्यसेविते ।
समग्रचन्द्राब्जधिया समीपतः स्थितेव रेजे कुटिलालकावलिः ॥ ३ ॥

वचःसुधाम्भोभरिताननोडुराट्प्रशस्तकुम्भस्य शिरःपिधायकम् ।
ललाटपट्टं विनिबद्ध्य तच्छ्रुती सतामभातामवशिष्टपाशवत् ॥ ४ ॥

चले पताके तदुदारनासिकाध्वजस्य चिल्यौ नयने तु लक्ष्मणी ।
स्मरस्य गण्डौ मणिदर्पणेऽमले स तु स्वयं रागरसात्मकोऽधरः ॥ ५ ॥

रदाख्यमुक्ताधररक्तमञ्जिकागुणः सुमृद्वी रुचिरा तदीयगीः ।
अतो ह्यमुष्या विवृताश्च संवृता विकाससङ्कोचदशासु सन्त्यमी ॥ ६ ॥

शिरोधराशाम्भवलिङ्गगङ्गया स्मितत्विषालापपयोब्धिनार्थिना ।
स्वपूर्वभूः शीतरुगात्मसद्मने प्रपूरितोऽस्योपरिगस्तदाननम् ॥ ७ ॥

भुजे मृणाले मुकुले सरोरुहोरुरोरुहौ रोमततिर्मधुव्रताः ।
सरस्तु नाभिस्त्रिवली तदीयरुक् प्रसन्नपाथोलहरीलसत्तनोः ॥ ८ ॥

उरस्थलान्तःपुरगस्य निस्तनोरुतातपत्रे निकटस्थचामरे ।
महत्तरे यौवनदण्डमण्डिते स्तनावमुष्याः किमदूरगस्मितौ ॥ ९ ॥

तदीयकव्याक्रकरीन्द्रकृतके रङ्गके मज्जयतीह मानिनाम् ।
मनस्सुमेरावुपपत्तितः करानुभौ स्त एवोऽस्युगन्तु तावुभौ ॥ १० ॥

उतोऽराश्वत्थदलात्मकोज्ज्वलान् प्रसार्य रोमावलिवाहुमूर्द्धतः ।
स्थितस्य पादौ किमधः प्रतिष्ठिनाममुष्य तद्विश्वमनोहरश्रियः ॥ ११ ॥

समुद्गयुग्मन्मथरत्नसम्पदां समुद्गतांशुन्यथ जानुनी ध्रुवम् ।
न वाणधी केतककोरकात्मके तदीयजङ्घे नखरौ मनोभुवः ॥ १२ ॥

बहिर्दले तत्प्रपदे पदाम्बुजद्वयस्य देवोऽभवत्तूणतां गते ।
प्रदृश्यते यत्त्विह पञ्चसायकीशिचित्रपुङ्खावलिरङ्गुलीच्छलात् ॥ १३ ॥

मुखेन्दुधाम्ना शकलीकृतः शशी नखात्मना तां प्रणनाम पादयोः ।
तमस्विनीसङ्गमदौर्ललित्यभाग्महस्वितायामपि जीयते जनः ॥ १४ ॥

नखाः प्रसूनानि तले तु पल्लवाः फलञ्च सर्वोत्तमरामणीयकम् ।
सुरद्रुमौ तच्चरणाववाङ्मुखौ समस्तकामप्रदताऽन्यथा कुतः ॥ १५ ॥

करेणवस्तद्गतिभिः सुलज्जिताः सराजहंसास्तपसे वनं ययुः ।
यतस्ततो गाधिसुतादिभिः कृतान् बुधस्तु को विस्मयते परिश्रमान् ॥१६॥

समीपगेऽस्या नु मुखेन्दुनोन्मुखे स्तनाम्बुजे कुड्मलिते सुकर्कशे ।
कराङ्घ्रिपद्मे न च दूरवर्त्तिनी पराङ्मुखे दर्शितमार्दवे पुनः ॥ १७ ॥

सुमेचकाम्रमुवं समाश्रितः स नीलकण्ठः स्पृहणीयभव्यभाः ।
शिखण्डभारोऽजनि चञ्चलभ्रुवः शिखण्ड एवोत्तमनृत्तसाधनम् ॥ १८ ॥

दरोभ्रलौ मण्डलिनौ पयोधरौ स्फुटीकृताम्भोरुहकोरकश्रियौ ।
समीक्ष्य मुक्ताश्रयमक्रमोन्नती विसिस्मियेऽस्या जनतोऽभ्यर्कम् ॥ १९ ॥

अशेषभूतैः सततं निषेविता वृषेण यान्ती शुचिभूतिभूषणा ।
मनोमवोद्दीपनलोचनात्मनो व्यधत्त सा प्राच्यपतेर्विडम्बनाम् ॥ २० ॥

भुजङ्गसम्बन्धविहीनमुच्चकैरलोलितं भूमिभृतापि केनचित् ।
विलोचनैरञ्जलिभिः पपुर्जनास्तृषैव तद्रूपरसायनामृतम् ॥ २१ ॥

नितम्बबिम्बोरुपयोधरद्वयीभरादिवोगच्छमविन्दुतां नराः ।
हृदैव हार्देन समूह्य सन्ततं श्वसन्त ऊहुः शुकमञ्जुभाषिणीम् ॥ २२ ॥

शिरोरुहारण्यकुचाचलस्थलीविलङ्घनक्लान्तिमिव व्यपोहितुम् ।
विगाह्य नाभीसरसीं सुधाशिनो बुभुक्षुताभाजि शनैर्युशाशयैः ॥ २३ ॥

प्रकाशयन् भावविशेषमीक्षणे विवर्णनेत्रप्रभयात्तभूमिकः ।
ननर्त्त तस्या नतया सह भ्रुवा मनस्सुरङ्गेषु नृणां मनोभवः ॥ २४ ॥

उरूरुणालानवरेण योजितो विजिह्मनेत्राङ्कुशपीडितस्तया ।
मनो(र)थालीकवलच्युतोऽपि सन् ममाद यूनाम्मतिमत्तवारणः ॥ २५ ॥

विहृत्य यां यां स्वसखीजनेन सा विचित्रभूषा सुमुखी व्यगाहत ।
जनस्य तां तां समशिश्रयन्दिशं दृशः प्रफुल्लां मधुपा यथा लताम् ॥२६॥

विलोकनोन्मूलितमुत्प्रपिष्टतां गतं विहासैर्वचसा द्रवीकृतम् ।
सुगीतिभिः क्वाथविपाकयोजितं पपौ नृणां सा हृदयं सुमध्यमा ॥२७॥

स्त्रियोऽपि तां वीक्ष्य शुभां विमत्सराः प्रमोदभारोद्धुररोमहर्षणाः ।
गुणैः स्वदासीसममेनकाद्भिकादनीपदीपुर्नियमेन पौरुषम् ॥ २८ ॥

अतुच्छहर्म्याग्रगता समीक्षितुं सदुत्सवान् कम्रचलद्भुजा पदा ।
जगन्त्रयीजित्वरमन्मथोद्धृतां जिगाय सा जङ्गमवैजयन्तिकाम् ॥ २९ ॥

प्रकाशमानं क्वचिदप्रकाशवत् क्वचित्कलामात्रतयेक्षितं क्वचित् ।
घनाततव्योमगतेन्दुसन्निभं तदाननं सौधगृहेष्वलक्ष्यत ॥ ३० ॥

न केरलाः केवलमन्यभूभुजोऽप्यमूमुपश्रुत्य गुणैस्तथाविधाम् ।
जनाधिपं तं जनकं मृगीदृशो व्यलोभयन् प्राभृतरत्नकोटिभिः ॥ ३१ ॥

सुतामयाचन्त च दूतवक्त्रतो धराधिपास्तं कतिचिद्धनार्चितम् ।
स्वयं समागत्य च शैवलं पुरं प्रतीयुरप्यस्य चटुप्रतारिताः ॥ ३२ ॥

सुरास्तु कान्त्या दमयन्त्यनादरं विवर्द्धयन्तीमपि तां मृदुस्मिताम् ।
समीक्ष्य सर्वाराणिमीश्वरेश्वरीं गतस्मराः सन्नतिमेव चक्रिरे ॥ ३३ ॥

इति क्रमप्रौढमनोज्ञयौवनप्रतिक्षणाम्रेडितरूपसम्पदम् ।
विलोक्य तां विस्मयनीयदर्शनां मुहुः प्रदध्यौ यदुवीरनायकः ॥ ३४ ॥

सुता मम द्वादशवत्सरा परं तदप्यसौ भाति समग्रयौवना ।
मनोरथानां सकलस्य लक्ष्यतां गता च तैस्तैः प्रथितैर्महागुणैः ॥ ३५ ॥

पतिः स को नाम भवेद् गुणोचितः प्रभुस्तदस्या वयसा च साम्यभाक् ।
न केवलं भूवलये जगन्त्रये गुणैः समग्रः पुरुषो न विद्यते ॥ ३६ ॥

आरादारामवाटादमरतरुलताधामहेमारविन्द-
प्रश्च्योतन्मुग्धमाध्वीपरिमलभरणायासमन्दप्रचारः ।
कासारस्फारवारिप्रसृमरलहरीविन्दुसन्दोहसान्द्रः
संसर्पन् दर्पकस्य स्वयमयमयते बन्धुतां गन्धवाहः ॥ १९ ॥

(पुनस्सन्तापनाटितकेन) हेमवति! पश्य पश्य-

भ्रमद्भ्रमरगुञ्जितप्रकृतिमञ्जुशिञ्जारवं
वितत्य सकलर्तुजप्रसवराजिरूपं धनुः।
विकस्वरपिकस्वरस्तवसमृद्धदर्पोद्धुरः
स्मरो मम पुरोभुवि स्फुरति मारुतस्यन्दनः ॥ २० ॥

धनुस्तावत् ।

प्रतीहारी — (स्वगतम्) (क) अहो अच्चारूढो से वम्महुम्माओ केण दाव विणोअणसाहणेण[1] किंपि पसंतिं पाविज्जउ ।

(ततः प्रविशति चित्रपटहस्तः प्रहस्तः ।)

प्रहस्तः — अहो नु खल्वसमीक्ष्यकारिता तत्रभवत्याः शूर्पणखायाः। यद्विराधस्यागमनकालं प्रतिपालयितुमक्षमा स्वयमेव दण्डकारण्यमाहिण्डमाना मानुषकुमारयोरागमनप्रतीक्षा किल पर्यटति ।

---

(क) अहो अत्यारूढोऽस्य मन्मथोन्मादः केन तावद्विनोदनसाधनेन किमपि प्रशान्तिं प्राप्यताम् ।

---

१. 'हसेण'. ग.

दण्डकारण्यमायातौ ससीतौ रामलक्ष्मणौ ।
हत्वाहमागमिष्यामि मायया वा हठेन वा ॥ २१ ॥

इत्थं किल विराधेन प्रतिज्ञातम् । तदश्रद्धानाश्चास्तस्याः प्रस्थानमिदमकल्याणोदर्कं भविष्यतीति तर्कयामि ।

सुन्दस्त्रियं हतवतोऽस्य सुबाहुशत्रोः
स्त्रीपुंसभेदमपहाय रिपुं जिघांसोः ।
रामस्य सन्निधिमुपेत्य सलक्ष्मणस्य
स्थातुं धिगिच्छति किल त्रपया विना सा ॥ २२ ॥

भवतु । स्वामिनमुपसर्पामि । (उपसृत्य) जयतु महाराजः ।

रावणः — (अनाकर्णितकेन) हेमवति ! धनुस्तावद् । (इति हस्तं प्रसारयति । )

(प्रहस्तः चित्रपटं हस्ते निक्षिपति ।)

रावणः — (विलोक्य) किमिदम् ।

प्रतीहारी — (क) इदं[1] अमच्चपहत्थेण हत्थे णिक्खिविअं किंवि ।

रावणः — (पार्श्वतोऽवलोक्य) अये प्रहस्तः ।

प्रहस्तः — महाराज ! अयं चित्रपटः यत्र समर्पिता सीताप्रतिकृतिः ।

---

(क) इदममात्यप्रहस्तेन हस्ते निक्षिप्तं किमपि ।

---

१. 'एदं'. ख.

रावणः — (सहर्षम्) तदिदमुद्वेष्ट्याग्रतः प्रसारय ।

(प्रहस्तः आदाय तथा करोति ।)

रावणः — (निर्वर्ण्य सविस्मयानुरागम्) अये ! इयं सा जानकी ।

एषा खलु—

लावण्यामृतसारणीसरणिभिर्लालित्यनित्यास्पदै-
रङ्गैरङ्गजकेलिरङ्गतलिमैः शृङ्गारशृङ्गाटकैः ।
अध्यक्षीकृतसर्व[1]यौवतवपुश्श्रीणां मदक्ष्णामपि
प्रीतिं कामपि कामनीयकमयी पुष्णाति तृष्णावताम् ॥ २३ ॥

किञ्च—

चित्रं चित्रार्पितापि स्मितमधुरसुधादिग्धमुग्धाननेन्दुः
सुभ्रूस्सभ्रूविलासे किमपि मयि दृशोरञ्चले मुञ्चतीव ।
किञ्चोदञ्चत्कपोलस्तनतटपुलकस्वेदसम्भेदगम्यं
रम्यं रागानुबन्धं मयि पिशुनयतीवेयमब्जायताक्षी ॥ २४ ॥

(साभ्यर्थनम्) अयि प्रिये जानकि !

द्वन्द्वं सुन्दरि ! पुण्डरीकमुकुलस्पर्धालु वक्षोजयो-
[2]र्गाढं वक्षसि निक्षिप स्मरकृतातङ्कस्य लङ्कापतेः ।
किञ्चोदञ्चय चञ्चलाक्षि ! वदनं चुम्बामि बिम्बाधरं
किं वा नाभिदधामि कामि[3]तमितो यद्देवि! दासोऽस्मि ते ॥ २५ ॥

१. 'तदिव्ययौ' क.
२. 'ढं निक्षिप वक्षसि'. ख.
३. 'तमहं यद्देवि'. क.

प्रहस्तः — (स्वगतम्) अहो प्रतिकृतावप्यस्यां सत्यजानकीबुद्धयैव[1] प्रलपति देवः।

रावणः — हेमवति! कुतः कारणादियं प्रतिवचनेनापि न सम्भावयति माम्।

प्रतीहारी — (स्वगतम्) (क) होदु। उम्मत्तीभूदेण णेण किंपि कीलावइस्सं। (प्रकाशम्) महाराअ! पणअकुविदाए[2] इमाए होदव्वम्।

रावणः—

रात्रौ गोत्रस्खलितमथवा[3] वैमुखी कामिताना-
मन्यस्त्रैणप्रणयगणनप्रापितो वापराधः।
इत्येतानि प्रणयकलहं प्रायशः प्रेयसीना-
मातन्वन्ति प्रियसखि! कुतस्तानि[4] लङ्केश्वरस्य॥ २६॥

प्रतीहारी — (ख) मन्दोअरीवल्लह! बलामोडिगहिअदणुअमणुअसुरपुरन्धी-सम्भोअसाहसिअस्स महाराअस्स कहं ण होइ कआवराहत्तणं।

---

(क) भवतु। उन्मत्तीभूतेनानेन किमपि क्रीडयिष्ये। महाराज! प्रणयकुपितयानया भवितव्यम्।

(ख) मन्दोदरीवल्लभ! बलाद्गृहीतदनुजमनुजसुरपुरन्ध्रीसम्भोगसाहसिकस्य महाराजस्य कथं न भवति कृतापराधत्वम्।

---

१. 'बुद्धयेव'. क. ग.
२. 'ए एदाए हो'. ख. ग. घ. ङ.
३. 'स्खलनमथवा'. क. ख.
४. 'स्तान्यहो रावणस्य'. ख. ग. घ.

रावणः — उपपन्नमिदम् । तदनुनयामि कृताञ्जलिः। देवि वैदेहि!

एकं वक्त्रमुभौ भुजौ च विजहाम्यन्तःपुराणां कृते
संधादेकमुपेक्ष्य शुद्ध्यति शुभे! शिष्टो हि दुष्टोऽपि सन् ।
अन्येऽष्टादशबाहवो नव मुखान्यर्हन्ति गर्हां विना
वक्षोजावुपगूहितुं तत्र तथा बिम्बाधरं चुम्बितुम् ॥ २७ ॥

(इति पादयोः पतितुमिच्छति । )

प्रतीहारी — (ससम्भ्रमं पादयोर्निपत्य) (क) महाराअ! विरम विरम । चित्तजाणई खु एसा, ण उण सच्चजाणई ।

रावणः— (सलज्जम्) अये! चित्रमिदम् । (पुनर्विभाव्य प्रहस्तं प्रति) किन्नामधेयोऽयं गिरिः यत्र तावदियमालिखिता वैदेही ।

प्रहस्तः — अयं हि –

तुङ्गैः शृङ्गैस्तुहिनधवलान् निर्झरानुद्वमद्भि-
र्दूराल्लक्ष्यः सितपटदृढाबद्धकेतुप्रकाशैः[1] ।
मन्दाकिन्या नगरपरिखाकारयाश्लिष्टसानु-
र्नानारत्नप्रचयरुचिभिश्चित्रितश्चित्रकूटः ॥ २८ ॥

रावणः — (पुनर्विलोक्य)

अरुणवल्कजटाभरभूषणौ
कवचकार्मुकबाणनिषङ्गिणौ ।

(क) महाराज! विरम विरम, चित्रजानकी खलु एषा, न पुनः सत्यजानकी ।

१. 'शः' ग.

प्रशमवीररसैकसमाश्रयौ
विलिखितौ[1] तरुणाविह काविमौ ॥ २९ ॥

प्रहस्तः — इमौ तौ रामलक्ष्मणौ ।

रावणः — (सक्रोधं खड्गमुत्कृष्य)

मर्त्याविताववमर्त्यव्रजविजयिभुजाविक्रमस्याग्रतो मे
गर्वायेते किमेवं परिणतजरसः पाटनात्ताटकायाः ।
आमज्जं मज्जतु द्रागधिवपुरुभयोरेनयोरद्य मद्यः
कृत्तप्रत्यर्थिकण्ठच्युतरुधिरसुरावीरपाणः कृपाणः ॥ ३० ॥

(इत्युत्तिष्ठति । )

प्रहस्तः — महाराज! कोऽयमकाण्डे संरम्भः । चित्रमिदमिति किं विस्मृतं महाराजेन ।

रावणः — (विमृश्य) युक्तमिदम् । (उपविश्याग्रतो निर्दिशन्) कः पुनरनयोः समानरूपः कश्चिदितो निवृत्त इव किञ्चिद्विप्रकृष्टो विलिखितः ।

प्रहस्तः — देव!

सुतविप्रयोगजरुजोज्झतस्तनुं पितुरौर्ध्वदैहिकविधेरनन्तरम् ।
गुरुशासनात् प्रतिगृहीतपादुको भरतः किलैष नगरं प्रतिष्ठते ॥ ३१ ॥

रावणः — कुतस्तवायं प्रस्तावाधिगमः ।

---

१. 'तौ पुरुषाविह'. ख. ग. घ. ङ.

प्रहस्तः — अस्य चित्रपटस्योपनेतुः करम्बकस्य मुखात् सर्वमवगतवानस्मि[1]।

रावणः — युज्यते । मायावसोः प्रणिधित्वादयोध्यावृत्तान्तवेदी स राक्षसः ।

(प्रविश्य)

दौवारिकः — जयतु महाराजः । एष खलु कश्चिद्वैणिको[2] गन्धर्वो महाराजपादानुपवीणयतुकाम इव द्वारि तिष्ठति ।

प्रहस्तः — (स्वगतम्) इदमपि विनोदनान्तरं भवतु देवस्य । (प्रकाशम्) तदेनं प्रवेशय ।

दौवारिकः — तथा । (इति निष्क्रान्तः ।)

(ततः प्रविशति गन्धर्वः ।)

गन्धर्वः —

उत्सङ्गोपनिवेशितामविरतं सम्यक् समाश्लेषणे
सान्द्रस्निग्धमृदुप्रवालवपुषा रोमाञ्चयन्तीं वपुः ।
आनन्दं मधुरस्वरप्रलपितैरातन्वतीं कर्णयो-
र्वीणामेव विभावयामि दयितामेतामलाबूस्तनीम् ॥ ३२ ॥

(विचिन्त्य) अहं तावच्चिरन्तनमहायोगिनं शरभङ्गतपोधनम् आत्मपुण्यविजितमजरामरं लोकमुपनेतुं विमानेनोपस्थितस्य भगवतः पुरन्दरस्याज्ञया दशकन्धरस्योपक्रममुपलब्धुकामः लङ्कापुरमिदमनुप्रविष्टोऽस्मि । तत् क्व नु खलु स सदाचार-

१. 'मधि' ग.
२. 'ष कश्चिद्वै'. ग. ङ.

कुण्ठो दशकण्ठः । (पुरोऽवलोक्य) अये ! अयमारामोपकण्ठबाह्यालिन्दे प्रहस्तेनोपास्यमानस्तिष्ठति । यावदुपसर्पामि । (उपसृत्य) स्वस्ति समस्तलोकविजयिने महाराजदशमुखाय ।

रावणः — अभिवादये । उपविशतु भवान् ।

गन्धर्वः — बाढम् (उपविशति । )

रावणः[1] — महाभाग ! तर्हि प्रस्तूयतामात्मनोऽधिकारः ।

गन्धर्वः — गान्धर्ववेदविशेषविज्ञस्य भवतः पुरस्तात् चिरकालप्रत्यवायविस्मृतप्रायां संगीतविद्यां कथं प्रयुञ्जे इति लज्जितोऽस्मि ।

प्रहस्तः — गन्धर्वपते ! चिरकालप्रत्यवायस्य को[2] नाम हेतुः ।

गन्धर्वः — तर्हि श्रूयताम् ।

अहं हि तुम्बुरुर्नाम गन्धर्वो गर्वहेतुकात् ।
अलकाधिपतेः शापादवापं यातुधानताम् ॥ ३३ ॥

प्रहस्तः — (स्वगतम्) स कतमोऽस्मासु यातुधानेषु स्यात् (प्रकाशम्) ततस्ततः ।

गन्धर्वः — ततोऽहम्

विराध इति विश्रुतो विविधजन्तुहिंसापर-
श्चिराय निरवग्रहस्समचरं वने दण्डके ।

---

१. णः - 'तर्हि महाभाग प्र'. ख. ग.
२. 'को हेतुः' घ.

प्रहस्तः — (स्वगतम्) कष्टमहो महता विस्रम्भराशिना विश्लेन भवितव्यम् ।

गन्धर्वः — वनं प्रविशताधुना दशरथात्मजेन् क्षणात्

प्रहस्तः — (स्वगतम्) अपगतः सन्देहः । अयि हृदय स्थिरीभव ।

गन्धर्वः — शरेण विनिपातितं मम तदाशरीयं वपुः ॥ ३४ ॥

प्रहस्तः —(जनान्तिकम्) महाराज! महान् मनोरथतरुरामूलमुन्मूलितो दैवेन ।

रावणः — (जनान्तिकम्) एवमेतत् ।

जीवग्राहं गृहीत्वा तौ मानुषौ सह सीतया ।
आनेष्यामीति येनोक्तं स एव विधिना हतः[1] ॥ ३५ ॥

(सधैर्यावष्टम्भम्; प्रकाशम्) भद्र! तिष्ठ । ततः परस्तादवगम्यत एव । अयं हि चिरकालप्रत्यवायस्य हेतुः ।

गन्धर्वः — एवमेतत् । किञ्च, प्रकृतिं प्राप्तस्यापि सदारसहजं राममनुगच्छतः[2] कलशजन्मनो मुनेराश्रमात् पञ्चवटीं प्रविश्य विश्राम्यतो ममान्यप्रस्तावाक्षिप्तहृदयत्वादेतावन्तं कालम् आत्मविद्यायाः स्मरणमपि नाभूत् ।

(नैपथ्ये)

(क) हा भादर दसअंधर हा भादर कुम्भअण्ण हा भादर विहीसण हा भादुणंदणा अक्खवकुमालमेहणाआ तुह्मेसु जीवंतेसु च्चिअ अहं एरिसीं दुरवत्थं मणुस्सअंतूहिं अणुभाविदह्मि ।

( सर्वे आकर्णयन्ति )

---

(क) हा भ्रातर्दशकन्धर! हा भ्रातः कुम्भकर्ण! हा भ्रातः विभीषण! हा भ्रातृनन्दनावक्षकुमारमेघनादौ युष्मासु जीवत्स्वेवाहमीदृशीं दुरवस्थां मनुष्यजन्तुभ्यामनुभावितास्मि ।

---

१. 'ना गतः' क.

२. 'तोऽगस्त्यमुनेराश्रमात्' ख. ग. घ.

प्रहस्तः — (स्वगतम्) हन्त यन्मया[1] प्रथममेवाशङ्कितं तत्तथैवापतितम् ।

रावणः — प्रहस्त ! ज्ञायतां किमेतदिति ।

प्रहस्तः — (स्वगतम्) ज्ञातमेव । (प्रकाशम्) यदाज्ञापयति महाराजः । (निष्क्रान्तः) ।

गन्धर्वः — (स्वगतम्) रामभद्रेण सौमित्रिणा वा अपकृतायाः कस्याश्चिन्निशाचर्याः क्रन्दितेनानेन भवितव्यम् ।

(प्रविश्य)

प्रहस्तः — महाराज ! किमन्यत् ।

जयलक्ष्मलक्ष्मणकृपाणलताविनिकृत्तघोणपुटनिष्पतितैः ।
विततैरसृग्भिरभिषिक्ततनुर्भगिनी तवापतति शूर्पणखा ॥ ३६ ॥

रावणः — (सक्रोधमुत्थाय) किं किं ब्रवीषि ? ।

प्रहस्तः — श्रवसी च नासिका च त्रितयमिदं वः स्वसुर्विलूनमिति ।

(प्रविश्यापटाक्षेपेणाकम्पनः)

अकम्पनः — खरदूषणत्रिशिरसां त्रितयश्चाद्यैव रामेण ॥ ३७ ॥

गन्धर्वः — (स्वगतम्) दिष्ट्या निष्कण्टकं जनस्थानमभूत्, तदिदानीं विदितप्रायोऽत्र वृत्तान्तः । यावदितोऽपसरामि । (प्रकाशम्) अभूमिरस्मदुपसेवायाः, तदहं गच्छामि । (निष्क्रान्तः)

रावणः — अकम्पन ! त्वया तावन्मारीचाश्रमं गत्वा तत्रभवान् मारीचो वक्तव्यः ।

अकम्पनः — महाराज ! किमिति ? ।

रावणः — (कर्णे) एवमिव ।

---

१. तम्) 'यन्म' ख. ग. घ.

अकम्पनः — यदाज्ञापयति महाराजः । (निष्क्रान्तः)

रावणः — तद्यावदिदानीम्

चिरविरहितवृत्रवैरिनारी
घनकच[1]भारहठग्रहोत्सवानाम् ।
भवतु जनकजाकचावमर्शो
रुचिरतरोऽद्य महोत्सवो भुजानाम् ॥ ३८ ॥

(इति निष्क्रान्तास्सर्वे)

इति चतुर्थोऽङ्कः



## अथ पञ्चमोऽङ्कः ।

(ततः प्रविशत्यध्वक्लान्तश्चरः)

चरः — (सशूत्कारम्)

अतिक्रान्ताः शैला न कति, कति तीर्णा न सरितो
भ्रमत्सिंहव्याघ्राः कति न समतीता वनभुवः ।
समादेशो भर्तुः समजनि सहायो न यदि नः
क्व पन्था द्राघीयान् क्व च मनुजमात्रा वयममी ॥ १ ॥

(समन्तादवलोक्य) अये कोऽयमुद्देशः । इह हि-

वृकाभिः कुक्कुरौघो विवृतमुखबिलव्यक्तरक्तार्द्रमांस-
व्यासङ्गव्याकुलाभिः प्रकृतिधृतमिथःस्पर्धितावर्धिताभिः ।
उद्गृध्यद्गृध्रतुण्डत्रुटितशवशतस्रस्तमस्तिष्कपङ्क-[2]
ग्रस्त्या सौहित्यभाजा निबिडयति रवान् भैरवान् फेरवाणाम् ॥२॥

१. 'कुचभार'. घ.
२. 'पङ्क्ति' ग.

(किञ्चिदुच्चैः) कोऽत्र भोः? । केऽसौ सङ्घातपरेताः शरीरिसङ्घाः ।

(आकाशे)

मिहिरान्ववायजलराशिचन्द्रमा
भरताग्रजो यदवधीन्मृधाङ्गणे ।
तदिदं चतुर्दशसहस्रसम्मितं
खरनेतृकं बलमवेहि रक्षसाम् ॥ ३ ॥

चरः — (आकर्ण्य सप्रमोदम्) दिष्ट्या चिराय गवेषितोऽद्य दर्शिष्यते स्वामी रामभद्रः । भोः केदानीमात्मना तृतीयः स महात्मा ।

(आकाशे)

ताटकेयहाटकहरिणच्छद्मना सावरजमात्मानं दूरीकृत्य कपटभिक्षुवेषेण रक्षसां पत्या रावणेन वञ्चितां जानकीं गवेषयितुमितो वनाद्वनं पर्यटति पर्याकुलस्मृतिरात्मना द्वितीयो रामभद्र इत्येतावदवगच्छामि ।

चरः — (सशोकम्) हा कष्टमगर्भसंभवे देवि वैदेहि! कथमीदृशस्ते दैव-विपाकः संवृत्तः।

यस्यास्ते जनकः स एव जनको राजर्षिराजन्मनो
विख्यातः श्वशुरश्च ते दशरथो राजा सखा वज्रिणः ।
भर्ता ते भरताग्रजो भृगुपतेर्जेता जगत्याः पति-
र्माता ते वसुधैव देवि! विपदां तस्याः कुतः सम्भवः ॥ ४ ॥

भोः अपि सत्यमिदमत्याहितं तत्रभवत्याः ।

(आकाशे)

कः संशयः । ननु तत्रभवत्याः सीताया जनस्थानवनवासप्रियसखी मन्दभाग्या मन्दारवती नाम वनदेवताहं ब्रवीमि । तद्गच्छ गवेषय रामलक्ष्मणान्वितो दक्षिणारण्येषु ॥

चरः — मन्दारवति! एवमस्तु । (परिक्रम्यावलोक्य च) अये !

अधो दण्डाकारामुपरि विततां धूमविततिं
दधानो[1] विस्तीर्णां विलसदसितच्छत्रसदृशीम् ।
स्फुलिङ्गालिङ्गच् गगनपथमत्यूष्मलतया
दविष्ठानप्येष[2] ग्लपयति तरून् कोऽपि दहनः ॥ ५ ॥

(पुनर्विभाव्य) धिगहं श्मशानभूमिमनुप्राप्तोऽस्मि । नूनमेष चितानलः समुद्दीप्यते ।

(नैपथ्ये)

रथपथाग्रगाधिगतक्रुधा दशमुखेन परिक्षतपक्षतेः ।
प्रवयसो वयसोऽस्य जटायुषो रघुसुतोपचितेव चिता ह्यसौ ॥ ६ ॥

चरः — (सखेदम्) हा कष्टं! महाराजदशरथप्रियसुहृदोऽस्य जटायुषो विपत्तिरियं रामभद्रमतिमात्रं सन्तापयतीति तर्कयामि। केनेदं व्याहृतं स्यात् ।

(प्रविश्य दनुः)

दनुः — भद्र! अयमहं दनुर्नाम कोऽपि गगनेचरः ।

मुनेः शापात् पापामहमधिगतो नैर्ऋतजनिं
जनद्रोही शक्रात्पुनरथ[3] शिरश्छेदमपि यः ।
कबन्धोऽहं बन्धोर्दशरथकुमारस्य कृपया
निजां मूर्तिं दिव्यां द्रुतमयमनायिष्यविकलम् ॥ ७ ॥

कुतो[4] भवान् को वा भवान् ।

---

१. 'नोऽसावुच्चैर्वि' ख. घ. ङ.
२. 'प्याशु' ख. ङ.
३. 'रपि' क.
४. 'को भवान्'. घ.

चरः — (प्रणम्य) महाभाग! अयमहं नन्दिग्रामवासिनः सानुजस्य कुमारभरतस्य शासनाद् रामभद्रवार्तावगमार्थमागतो[1] नन्दको नाम राजप्रणिधिः। तत् क्वेदानीं स्वामी रामभद्रः।

दनुः — भद्र नन्दक! शृणु संक्षेपतः।

शापान्धोरुद्धरन्मामपि च शबरिकां[2] मोचयन् जन्मपाशात्
पम्पामुल्लङ्घ्य मध्येपदवि हनुमता मानितः सानुजन्मा।
कृत्वा सुग्रीवसख्यं तदनु विदलयन् पत्रिणा सप्तसालान्
हिंसित्वा वालिनश्च प्रतिवसति गिरावृश्यमूके स रामः ॥ ८ ॥

तदित एव निवर्ततां भवान्। किञ्च दृश्यतेऽसावतिभयानक उद्देशः तथाहि—

अत्यन्तोद्धुरहस्तिमस्तकतटीसञ्चारिपञ्चाननः
शार्दूलोत्कटवक्त्रकृष्टहरिणीरक्तावसिक्तावनिः।
उच्छ्रायच्छुरितोडुमार्गशिखरो वैमानिकानामपि
व्योमोत्संगगतागतानि कुरुते वन्ध्यानि विन्ध्याचलः ॥ ९ ॥

अतो भवद्विधैः स्मर्तुमपि न शक्यते, किं पुनरतिपतितुम्।

चरः[3] — महाभाग! एवमस्तु। किं पुनर्नन्दिग्रामं गतेन मया कुमारभरतो वक्तव्यः।

दनुः — (सस्मितम्) यावदेतावतोऽध्वनः प्रतिलङ्घ्य पदातिर्भवान् नन्दिग्राममभिगमिष्यति तावद्रामभद्र एव जानकीं प्रत्याहृत्य स्वयं तत्रागमिष्यति।

---

१. 'द्रस्वामिनो वार्ता'. ख. ग. घ. ङ.
२. 'कामुद्धरन्'. घ.
३. 'रः—एवमस्तु'. घ.

चरः — युक्तमिदं, यतो नन्दिग्रामात् प्रस्थितस्य ममायं दशमो मासः। तदहं साधयामि। (निष्क्रान्तः).

दनुः — तदहमपि चिरकालपरित्यक्तमात्मनो लोकमभिगच्छामि। (ऊर्ध्व-गमनमभिनीयाधो विलोक्य सविस्मयम्) अहो प्लवङ्गममयी विलोक्यते[1] विश्वतो विश्वम्भरा। आः ज्ञातम्।

प्लवगपतिना सुग्रीवेण क्षणादभितो दिशो
दशमुखहृतां सीतादेवीं विचेतुमभीच्छता।
विनतहनुमन्मुख्याः सख्या विभोः प्रणिचोदिता
विदधति महीमङ्गैस्तुङ्गैरमी हरियूथपाः॥ १०॥

(निष्क्रान्तः।)

इति शुद्धविष्कम्भः।

---

(ततः प्रविशति रामो लक्ष्मणसुग्रीवौ च।)

रामः — (सकरुणमात्मगतम्) हा देवि वैदेहि!

कनकरजतचित्रे तत्र दृष्टे कुरङ्गे
प्रकटितकुतुकानां प्रार्थनाकूतभाजाम्।
मुहुरनुपतितानां तन्मुखे मन्मुखे च
प्रणयिनि तव मुग्धप्रेक्षितानां स्मरामि॥ ११॥

सुग्रीवः — (स्वगतम्)

अन्येषु प्रियपूरणार्थिषु हरिप्रष्ठेषु[2] तिष्ठत्स्वपि
प्रायच्छन्निजमङ्गुलीयकमसौ देवो यदीये करे।

---

१. 'वालोक्यते' ख. ग. घ. ङ.

२. 'श्रे' क.

गत्वा तेन हनूमतैव नियतं देवी निरीक्षिष्यते
भाग्विन्येव यदृच्छयापि निपतत्यर्थे प्रभूणां मनः ॥ १२ ॥

लक्ष्मणः — (सुग्रीवमवलोक्य स्वगतम्)

आर्यशरेण हरेणेवाग्रभवे कालकूट इव रूक्षे ।
ग्रस्ते वालिन्यमृतवदुद्भासत एष सुग्रीवः ॥ १३ ॥

(रामश्च निर्वर्ण्य स्वगतम्) कष्टं भोः कष्टम्

वियोगादार्याया[1] बत वितपमानं प्रथमतो
जटायोर्ध्वंसेन व्यथितमथ तातस्य सुहृदः ।
प्रियायाः संव्यानं समुपलभमानस्य च गुरो-
रिदानीमामूलं हृदयमिदमुन्मूलितमिव ॥ १४ ॥

(सुग्रीवं प्रति जनान्तिकम्) किष्किन्धाधिपते! दुष्करमिवार्येण मारुति-प्रत्यागमनावधिकमपि जीवितधारणमिति मे प्रतिभाति । तदन्यत्राक्षिप्यतामस्य चेतः ।

सुग्रीवः — (जनान्तिकम्) सम्यगुपलक्षितं कुमारेण । तथाहि —

स्वेदामृष्टललाटिकाभसितया निःश्वासवाताहति-
व्याधूतस्फुरदक्षसूत्रपटलीचीरोत्तरासङ्ग्या ।
रोमोच्छ्वाससृजा निजप्रियतमास्मृत्यायमत्यायतं
नीतो नूतनसङ्ग्येव सुदृशा कामप्यहो विक्रियाम् ॥ २५ ॥

तदहमन्यत्राक्षिपामि । (प्रकाशम्) देव !

---

1. 'म्) वियो॰. ग.

अनन्तशयनविश्वविद्यालयः

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १७३.

# भीमपराक्रमं

शतानन्दकवीन्द्रसूनुविरचितम् ।




प्रकाशकः

शूरनाड् कुञ्ञन् पिळ्ळ एम्. ए.,
पौरस्त्यग्रन्थप्रकाशनकार्यालयाध्यक्षः ।

अनन्तशयने अलयन्स् मुद्रालये मुद्रितः ।
१९५४/११३०.

मूल्यम् एकम् रूप्यकम् ।

The present publication 'Bhīmaparākrama' is a dramatic piece belonging to the class of Vyāyoga. Das'arūpaka, the well known work on dramaturgy, defines it as follows :—

"ख्यातेतिवृत्तो व्यायोगः ख्यातोद्धतनराश्रयः ।
हीनो गर्भविमर्शाभ्यां दीप्ताः स्युर्डिमवद्रसाः ॥
अस्त्रीनिमित्तसङ्ग्रामो जामदग्न्यजये यथा ।
एकाहाचरितैकाङ्को व्यायोगो बहुभिर्नरैः ॥"

As the name indicates, this play glorifies the exploit of Bhīma in vanquishing and slaying Jarāsandha, the king of Magadha. Yudhiṣṭhira was planning to perform Rājasūya after killing Jarāsandha. But then he received a message from Jarāsandha either to pay him tribute or to leave the kingdom and seek refuge in Dvārakā. The Pāṇḍavās accepted the challenge and promised to meet Jarāsandha. Thereafter, disguised as *Snātakās*, Kṛṣṇa, Bhīma and Arjuna set out to Magadha. Jarāsandha welcomed them unaware of their identity, but they refused to partake of his entertainment, as Jarāsandha was preparing for a *Puruṣamedha*, human sacrifice, in which numerous kings were to be sacrificed. Then arose a dispute between Kṛṣṇa and Jarāsandha as to the righteousness of such a sacrifice. Nārada who happened to come there, was made the umpire. Jarāsandha agreed to do the behest of Kṛṣṇa in case of defeat. Kṛṣṇa gained victory, and according to the original agreement, Jarāsandha had to meet Kṛṣṇa and his companions in a duel. In the duel which followed, Bhīma killed Jarāsandha. Kṛṣṇa thereon celebrated the victory by releasing the kings who had been imprisoned by Jarāsandha.

The story, in the main, is taken from Mahābhārata, but is presented with due dramatic effect. No information is available about the author, except the vague mention made in the *sthāpanā* as 'करिष्यते भीमपराक्रमाख्यं काव्यं शतानन्दकवीन्द्रसूनुः ।' Judging from the style of composition we should admit that this work deserves high praise.

The edition is based on Manuscript C. O. 1694 and Transcript No. 31. The manuscript was obtained from Sri K. R. Kesava Pisharodi, Katuttrutti, Vaikam. It is in Malayalam script and is written in palm leaves. We hope that this will be a valuable addition to our Sanskrit series.

University Manuscripts Library, 17-12-1954.

SURANAD KUNJAN-PILLAI,
*Honorary Director.*

# A NOTE ON THE NEW EDITION OF DANDIN'S AVANTISUNDARĪ.

ŚŪRANĀD KUNJAN PILLAI M.A.,

HON, DIRECTOR, UNIVERSITY MSS. LIBRARY, TRIVANDRUM.

It is a matter of immense gratification that we are able to bring out the present edition of the Avantisundarī Kathā, a fragment of which was published in 1924 by Sri M. Rāmakṛṣṇa Kavi. The edition of Sri Kavi was based on a very defective, fragmentary manuscript full of lacunæ, discovered from Kōṭṭakkal, Malabar. Only the beginning of the book was available to him and his edition covers only 25 pages in print. The present edition is based on a far fuller manuscript although this too is defective and fragmentary. This runs to 246 pages in print and carries the story to the narration of the tale of Kādambarī by Mandākinī. It may be seen that this covers nearly half the story in the Pūrvapīṭhikā of the Daśakumāracarita, the subject-matter of which is identical.

This work is bound to be of great interest to the students of the works of Daṇḍin, the celebrated rhetorician and story-teller of Sanskrit. Much has been written about the works of Daṇḍin by several scholars. There is no consensus of opinion regarding his works.*

*Kāvyādarśa, Daśakumāracarita, Mṛcchakaṭika, Chandōviciti, Kalāparicchēda, Dvisandhāna and Avantisundarī are attributed to Daṇḍin by several scholars.

From a verse of Rājaśekhara, we know that Daṇḍin was the author of three works. Only about one work viz., the Kāvyādarśa, there is absolute unanimity of opinion. The majority of scholars favour Daṇḍin's authorship of the Daśakumāracarita also. (See History of Sanskrit Poetics = Introduction to Sāhitya Darpaṇa by P. V. Kane, p. 89). The third work is taken to be Chandōviciti by some, Dvisandhāna, Mṛcchakaṭika, or Kalāparicchēda by others. Detailed discussion on the question of identification of the third work may be seen in the Introduction to the present edition. But a more important problem has been raised by the discovery of the Avantisundarī Kathā which is specifically attributed to Daṇḍin. The question is whether Daṇḍin wrote only three works as stated by Rājaśēkhara, and whether he wrote both the Daśakmuāracarita and the Avantisundarī, the latter being only a more elaborate and altered version of the former so far as we are able to judge. From the data available, it is doubtful whether the statement of Rājaśēkhara can be accepted as correct, as in that case, the authorship of certain works like the Dvisandhāna etc. now assigned to him will have to be re-examined.

What is, however, more important in this connection is the identification of the authors of the Daśakumāracarita and the Avantisundarī. From the colophons of manuscripts available here we find that both are works of Daṇḍin. The colophon in the Avantisundarī, according to the manuscript available in this library, is as follows:-

"इत्याचार्यदण्डिना कृता अवन्तिसुन्दरी समाप्ता।"

It is also stated in the work itself that the story is narrated by Daṇḍin at the instance of his friends. This is sufficient proof that the Avantisundarī is the work of Ācārya Daṇḍin. There is also strong evidence to ascribe the Daśakumāracarita to Daṇḍin. Tradition is quite in favour of this attribution. In the colophons of the manuscripts of the Daśakumāracarita, we find Daṇḍin being mentioned as the author of the work. The colophon in one paper manuscript (14035 A of this library) is as follows :-

'इति दण्डिनः कृतौ दशकुमारचरिते अपहारवर्मचरितं नाम द्वितीय उच्छ्वासः ।'

In another palm leaf manuscript (10635), again, we find the name of Daṇḍin being mentioned :

'इति श्रीदण्डिविरचिते दशकुमारचरिते प्रथमं चरितम् ।'

On this question, new light is forthcoming from an old Sanskrit work, Abhijñāna Śākuntala Carcā, by an anonymous author now being published in the Sanskrit Journal of this institution (vide Vol. VIII. No. 1. p. 9). A passage from the Daśakumāracarita is quoted in the Carcā with the preface 'अत्राह दण्डी'. This also supports the tradition of Daṇḍin's authorship of the Daśakumāracarita. There is doubt as to the authorship of the available version of the Pūrvapīṭhikā of that work, but that question does not require detailed consideration here, as we are not directly concerned with that.

The facts stated above in regard to the authorship of the Avantisundarī and the Daśakumāracarita are sufficient to ascribe both the works to Ācārya Daṇḍin. But some scholars and critics cannot willingly accept

that both these are works by the same author, on account of the difference in style between them. Dr. A. Berriedale Keith, for example has, in his preface to 'A History of Sanskrit Literature' stated that "if a Daṇḍin wrote the work (the Avantisuṇdarī) he was assuredly not the author of the Daśakumāracarita, and its date may be centuries later than the great Daṇḍin, for there is no reason to accept the suggestion that a writer of the Katha lived sufficiently soon after the famous Daṇḍin to be familiar with his genealogy and to work it into his story." Dr. Keith was greatly influenced in his opinion by the views of Dr. S. K. De 'that even the most careless reader of the Kathā and the Daśakumāracarita should have been struck by the extraordinary difference of style between the two works, the Kathā rivalling unsuccessfully the worst mannerisms of the Harṣacarita and the Kādambarī, (See the Preface to 'A History of Sanskrit Literature by A. B. Keith, p. xvi). But other scholars who have examined the question of authorship of these works have adopted different conclusions. Dr. P. V. Kane in his 'Introduction to the Sāhitya Darpaṇa' has stated that "the Avanti-sundarī Kathā is the first portion of the whole story, the current Daśakumāracarita is the middle portion, and there is one Ucchvāsa for the Uttarapīṭhikā (p. 92). Considering all that has been said by several scholars, Dr. Kane is inclined to hold on the whole (though with some hesitation) that the Avantisundarī Kathā is the work of Daṇḍin, and constitutes the prelude to the current Daśakumāracarita". This view seems to

be quite acceptable. Arguments based merely on the style of composition in these works cannot be considered as convincing proof that the works are by different authors when the contrary is established by categorical statement.

The edition, as above stated is based entirely, on one manuscript – and that too defective (No. 10363). The editors have not, therefore, been able to convince themselves that the readings are quite correct. Several portions of the manuscript have crumbled down, and so the text as now available is full of lacunæ. Scribal errors are also numerous which make the work of the editors extremely difficult. But they have endeavoured to the best of their ability to present as good an edition of the work as possible. Their apology is that this work, with all the shortcomings of the present edition, is bound to be of immense interest to the students of Sanskrit literature.

We hope that the indulgent scholars will overlook the defects and extend their warm welcome to this publication.

# A REPORT ON THE WORKING OF THE UNIVERSITY MANUSCRIPTS LIBRARY FOR THE PERIOD FROM 1st APRIL 1953 TO 1st APRIL 1954.

I. During the first two months i., e. till 1—6—53, Dr. P. K. Narayana Pillai held charge of the institution as Curator. Thereafter Sri K. S. Mahadeva Sastri, Senior Pandit was put in charge of the duties of the Curator. He continued to hold charge till 19-11-53, when Sri Suranad P. N. Kunjan Pillai was appointed as Honorary Director, holding in abeyance the place of the Curator. Place of a Superintendent was also created for supervising the work of the Pandit staff, and Sri K. S. Mahadeva Sastri was appointed as Superintendent.

II. **The Working of the Institution.**

There are four Sections in the Library over and above the establishment section.

(i) *The preservation Section.* This section attends to the collection and preservation of manuscripts. There are the following members working in that section :-

1. One Pandit.
2. One Assistant Pandit.
3. Three attendants
4. Six Dusting & Oiling Assistants.

This section also attends to the work of the Library, (issuing books and manuscripts to the staff, stocking and distributing the Journals published from this institution) and arranges for preparing transcripts.

(ii) *Cataloguing Section.* There are seven Pandits in this section. This section attends to the work of preparing Catalogue of the manuscripts – both preliminary catalogue and descriptive catalogue. There is a huge collection of Manuscripts (nearly 30,000) here, and additions are made frequently.

V. Publications.

(a) *Sanskrit.*

During the period under review the following works in Sanskrit have been published.

1. Mālatīmādhava with the commentary Rasamañjari by Pūrṇasarasvati.
2. Tantrasamuccaya Vol. II with two commentaries.
3. Gurusammatapadārtha.
4. Avantisundarīkatha. of Ācārya Daṇḍin.

(b) Sanskrit Journal, Nos. 3 & 4 of Vol. VII. The Journal contains parts of the following works.

1. Sītārāghava – a Drama by Rāmapāṇivāda.
2. Tripuradahana – a Yamaka Kāvya of Vāsu Bhaṭṭatiri.
3. SivaVilāsa – a Kāvya by Damodara Chākyar.
4. Abhijnāna Sakuntala Carcā – a Critical treatise on the Sakuntala of Kālidāsa.

The following works are in the press :—

1. BhojanaKuthūala of Raghunatha. Part I
2. Sarasvati Kaṇṭhābharana with the commentary – Hṛdayabodhika of Daṇḍanātha Nārāyana, Part V.
3. Prakriyāsarvaswa – of Nārāyaṇabhaṭṭa Part IV.
4. Mimamsaslokavartikam– with the commentary Kāsikā by sucaritamis'ra Part IV.
5. Horavivaranam.
6. Aitareya Brāhmana, with the commentary Sukhapradā of Ṣaḍgurusiṣya, – Part III.
7. Āryabhatiya – with the Bhāṣya of Nilakaṇṭha Vol. III.

Printing of most of them is almost complete and this office is expediting their publication.

(c) *Malayalam Publications.*

The following works have been published during the period.

1. Anantapuravarṇanam – A poem belonging to the fourteenth century, describing Anantapuram (Trivandrum). It is important from the points of view of Malayalam language and history of the State of Travancore.

2. Bhāratamālā – Part II – A middle Malayalam poem by Sankara Paṇikkar, belonging to the fifteenth century A.D.

3. Agnipravesam – An old poem.

4. Alaṅkāra Saṃkṣepam – A work on rhetoric belonging to the 14th or 15th century A. D.

The following works (Malayalam) are now ready to be published as their printing is almost over.

1. S'eṣasamuccayam.
2. Nīlikathā.
3. Uṇṇiyāṭicaritam.
4. Vātalthurapáṭṭukal.
5. Uṇṇiccirutevi caritam.

(d) *Malayalam Journal (Bhaṣātraimāsikam)*

Volume III Nos. 1 to 4 have been issued during the period. Several important old works have been published in the Traimasikam.

The idea is to make the Journals (Sanskrit and Malayalam) organs of higher research of this institution.

(e) *Works taken up for edition.*

The major work of this institution being publication of old works, great attention is paid to select and edit books for publication. During the period under review the following works have been edited and made ready for the press.

*Sanskrit.*

1. Harṣacarita – A prose work by Bhaṭṭa Bāṇa with the commentary of Ranganātha. Harṣacarita is one of

the greatest prose works in Sanskrit by the celebrated writer Bhaṭṭa Bāṇa, a contemporary and courtier of King Harṣa who flourished in the 7th century A. D. As its name indicates, it is a biography of the great king and is important from the point of view of Indian history also. The present edition is based on an old palm-leaf manuscript and the readings are generally better than those of the printed editions. The commentary by Ranganatha is being published for the first time.

2. Anargharāghava - with the commentaries of Pūrṇasaraswati and Mānavikrama. Anargharaghava is a famous Drama by Murāri who flourished in the 9th century A. D. The commentaries prepared for publication will be very valuable.

3. Aṣṭāngahṛdaya Vyākhyā. Hṛdayabbodhikā — By S'rīdāsā Paṇḍita Part III - A work on Indian medicine.

4 Tantrasamuccaya with commentaries Vivarana and Vimarsini Part III. This is a very valuable work and is in great demand by the Namputiris. We have already published two parts of the work. This is the third part and is now in the press.

f. The following works are being scrutinised:—

*Sanskrit.*

1. Tantrasangraha with commentary. This is a work on Astronomy by Nilakantha, a Keraliya who flourished in the 15th century A. D.
2. Bhārata Campu of Mānaveda - with a commentary of Kṛṣṇa. This Campu is a work of a Zamorin of Calicut and will be a good addition to the contributions to Sanskrit literature by Kerala poets.
3. Aitareya Āraṇyaka - with the commentary by Ṣaḍgurus'iṣya. This will be a valuable addition to the vedic literature. The commentary is being published for the first time.

4. Cikitsā Kalika – A medical treatise, probably by a Keraliya. This will be a very useful book for practitioners of Indian medicine.
5. Netraprakāsikā – a treatise on the treatment of eye-diseases.

(g) *Malayalam :-*

(i) Arthas'āstram by Kautalya, Part IV – Old Malayalam Commentary. Three parts of the work have been published. Part IV is being scrutinised. This is one of the most important publications undertaken by this Library. The old Malayalam commentary is assigned to the 12th or 13th century A. D. and it is the best commentary of Kautalya's Arthas'āstra. Modern scholars rely on this commentary for interpreting Kautalya's Arthas'āstra. The Sanskrit annotation of this work by the late Ganapati Sastri was based on this Malayalam commentary. The importance of the work is thus evident. It is also the oldest specimen of Malayalam prose, a fact which immensely adds to the value of the work.

(ii) Cākravākasandes'am. This is a sandes'akāvya in Malayalam which may be ascribed to the 14th or 15th century A. D.

(iii) Adhyatma Rāmayaṇam by Ezhuttacchan – a critical edition of this work has been under preparation for a few years past. The edition is prepared on the basis of nearly fifty manuscripts preserved here. Rāmayaṇa by Ezhuttacchan is the greatest literary work in Malayalam, and although there exist several editions, there has not been any attempt worth the name to bring out a critical edition. Our attempt is to supply this need. The edition is now being finalised and the work will be published in the issues of Bhasha Traimasikam in the first instance.

## VI. Services to outside institutions and scholars.

This being a Research institution several references are received from other similar institutions and individuals for information and transcripts of old works. This library continued to render all possible services to them by supplying information regarding manuscripts and publications.

## VII. Exhibition of Manuscripts.

The usefulness of the work done here will be appreciated by the public only if it is brought to their notice. With this view, publications of this Library were sent to the press for review. This Library also participated in the S. N. D. P. Golden Jubilee Exhibition held at Quilon during April 1953, and we have won a gold medal certificate for the rare manuscripts we have been able to exhibit.

## IX. Research Association.

There is a Research Association in this Library and the Pandits are members of this Association. The object of the Association is to promote research and this Association has met several times during the period under report. Several important subjects have been taken up for discussion. Papers embodying the results of research contributed by the members have been published in the Journals of this institution.

Several distinguished persons visited this institution and have expressed their appreciation of the valuable work that is carried on here.

## X. Reorganisation of the Institution

With a view to improving the work of the institution it was felt necessary to reorganise the office. The University appreciated the need and have decided to upgrade the scales of pay of the Pandit Staff. The nomination of the members of the staff to the revised scales of pay is now pending sanction.

Office of the University<br>Manuscripts Library,<br>2-8-1954.

SURANAD KUNJAN PILLAI,<br>*Honorary Director.*

## The Present Organisation of the Manuscripts Library.

The Government and the University have been pleased to reorganise the University Manuscripts Library recently (vide Order No. AB. 4-1624/52, dated 19-5-1954). The Present organisation is as follows:—

| | |
|---|---|
| Honorary Director | |
| Curator | |
| Senior Pandit (Sanskrit) | 1. |
| Senior Pandit (Malayalam) | 1. |
| I Grade Pandits | 10. |
| II Grade Pandits | 15. |

*Establishment.*

| | |
|---|---|
| Clerks | 3. |
| Library Attenders | 3. |
| Peons & Watchers | 6. |
| Dusting & Oiling Assistants | 6. |



*Licence No. 644, Dated 9-3-1949.*

VOL. VIII. NO. 2

# JOURNAL OF
# THE TRAVANCORE UNIVERSITY ORIENTAL MANUSCRIPTS LIBRARY




[ANNUAL SUBSCRIPTION RS 4]

ALLIANCE PRINTING WORKS
Thycaud, Trivandrum.

1955 / 1130

CONTENTS

1. देवनारायणीयम् ... ... 1 — 4

2. अभिज्ञानशकुन्तलचर्चा ... ... 5 — 20

3. शिवविलासः ... ... 21 — 36

4. त्रिपुरदहनम् ... ... 37 — 52

5. सीताराघवम् ... ... 53 — 68

6. होराभिप्रायनिर्णयः ... ... 69 — 84

7. उषापरिणयप्रबन्धः ... ... 85 — 92

8. Introduction to Nṛgamokṣa prabandha 93 — 99

9. Reviews of our publication 101 — 107



# *देवनारायणीयम्

अनन्ताद्वयामेयनित्येद्धसच्चित्-
प्रकाशाततानन्द! मङ्गल्यधामन्! ।
जगज्जन्मरक्षालयक्रीड! शान्त!
प्रकृष्टाद्भुतोरुक्रमाद्याखिलात्मन्! ॥ १ ॥

सदा सर्वथा सर्वतः सत्यरूप!
प्रवृद्धात्ममायान्धकारोष्णरश्मे! ।
विमुक्तेन्द्रियप्राणदेहाभिधादे!
सुशुद्धैककूटस्थ! कारुण्यमूर्ते! ॥ २ ॥

हरे! वासुदेव! प्रपन्नोरुदुःख-
प्रहाणप्रवीण! प्रभो! दीनबन्धो! ।
सदा घोरसंसारसर्पातिबिभ्य-
ज्जनाह्लादनैकौषधं नो हृदब्जे ॥ ३ ॥

---

* This is a devotional lyrical piece composed by a nephew of the Nambutiri chief of Ambalappuzha. This fact is clearly stated in stanza 14. As the author gives the title as Devanārāyaṇīyam, it may be inferred that the poem is in praise of Devanārāyaṇa. Devanārāyaṇa is the popular title of the chiefs of Ambalappuzha. But they would have assumed this title, in all probability, as a token of devotion to their tutelary deity Devanārāyaṇa of Ambalappuzha, generally known as Kṛṣṇa.

भवत्पादपङ्केरुहं नित्यपूतं
द्रुतं सन्निधेहीश ! भक्तिं च गाढाम् ।
व्रजालोलनेत्रामनोज्ञे त्वयीशे
हृदिस्थे सदा नोऽतिगूढे सुदूरे ॥ ४ ॥

नमल्लोकसन्तानसन्तान ! दद्याद्
दृशोर्मे मुदं वर्ष्म तेऽम्भोदनीलम् ।
कलापव्रजप्रोतकेशातिशुम्भत्-
सुवर्णारविन्दस्रगत्युज्ज्वलाभम् ॥ ५ ॥

निटाले निशानाथलेशातिरम्ये
हिरण्यावदातोर्ध्वपुण्ड्राभिरामम् ।
प्रसूनाशुगोद्दण्डकोदण्डदण्ड-
प्रभामोहनभ्रूलतां सन्दधानम् ॥ ६ ॥

सुवृत्तप्रतीकभ्रमद्भृङ्गलग्न-
प्रकामारुणाम्भोजशङ्कावहाक्षम् ।
हरिद्रत्ननीलामलादर्शराजत्-
कपोलालुठत्कुण्डलं चारुनासम् ॥ ७ ॥

जपारक्तदन्ताम्बरं सूक्ष्मकुन्द-
द्विजेशोस्रभाताखिलाशान्तरालम् ।
पदद्वन्द्वभक्ताधिकप्रीतमुग्ध-
स्मिताश्चत्तुलाहीनवक्त्राम्बुजातम् ॥ ८ ॥

सुधास्यन्दसन्दोहहृद्योक्तिदत्त-
त्रिलोकेशयोगीन्द्रसान्द्रप्रमोदम् ।
मणिव्रातभास्वद्गलाकल्पकम्रं
विशालोन्नतोरोलसन्मुग्धहारम् ॥ ९ ॥

लसन्मुद्रिकाकङ्कणाग्र्यांगदालि-
प्रपीनायतोच्चण्डदोर्दण्डयुग्मम् ।
परिक्षीणमध्यं पृथुश्रोणिचक्रं
तटित्पिङ्गवासो दधद्रत्नसूत्रम् ॥ १० ॥

महारत्नरम्भाजयोच्छृङ्खलोद्यत्-
सुजातोरुजानुद्वयीविश्वरम्यम् ।
शिखण्डीन्द्रकण्ठप्रकाण्डोपमानं
दधानं सुजङ्घायुगं वल्गुगुल्फम् ॥ ११ ॥

रणद्धंसकं मञ्जुमञ्जीरघुष्टं
पदाम्भोरुहं बिभ्रदत्यन्तरक्तम् ।
कराब्जाङ्घ्रियुग्माङ्गुलिस्तोमराज-
न्नखश्रेणि राकेशबालातिकान्तम् ॥ १२ ॥

मृदुस्निग्धमच्छं नवं चारु नित्यं
रमामन्दिरं कामदं विश्ववन्द्यम् ।
यदुश्रेष्ठ! कृष्णाज! विष्णो! परात्मन्!
हृषीकेश! विश्वेश! गोविन्द! शौरे! ॥ १३ ॥

व्रजेशान ! नन्दात्मजाभीरयोषा-
हृगिन्दीवराक्रान्तगात्र ! प्रसीद ।
इमं देवनारायणक्षोणिनाथ –
स्वसुःसूनुबद्धं हरिध्यानसारम् ॥ १४ ॥

स्तवं देवनारायणीयं पठेद्य-
स्तदीये हृदि श्रीपते ! संस्थितस्त्वम् ।
विमोहं विधूयाशु देहावसाने
पदं तावकं प्रापयानन्दसान्द्रम् ॥ १५ ॥



आलिङ्गनशक्यत्वमुत्प्रेक्षितं मन्तव्यम् । अन्यच्छायायोनिश्चायमर्थः । यथा श्रीरामायणे –

"मेघोदरविनिर्मुक्ताः कल्हारस्पर्शशीतलाः ।
शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः" ॥

इति । अत्र पुरातनकविदृष्टार्थस्वीकारो न दोषाय, ध्वनिप्रभेदानुगृहीतत्वात् । तदुक्तं ध्वनिकृता –

"अतो ह्यन्यतमेनापि प्रकारेण विभूषिता ।
वाणी नवत्वमायाति पूर्वार्थान्वयवत्यपि" ॥

इति । अत्र पवनस्वभाववर्णनं विप्रलम्भाङ्गतया चमत्कारैकघनत्वात् सहृदयहृदयमुल्लासयति । तत्र तु प्रावृड्वर्णनमात्रपरमेव । अत्र पवनस्य शिशिरोपचारप्रवृत्तप्रियसुहृत्समाधिः । हर्षोऽत्र भावः ।

अभ्युन्नतेति । जघनगौरवात् पश्चादवगाढेत्यनेन तदानीन्तन औत्सुक्यविशेषो द्योत्यते । अस्य लतामण्डपस्य । पाण्डुसिकत इत्यनेन पदपङ्क्तेः स्पष्टत्वं हृद्यत्वं च व्यज्यते । अभिनवा तदानीन्तनी । अनेनाविकलत्वं गम्यते । किञ्च इदानीमेवास्या लतामण्डपप्रवेश इति तस्य हृद्यतयोल्लासः प्रतीयते । औत्सुक्यं भावः । स्वभावोक्तिरलङ्कारः ।

अये इति हर्षः । लब्धं नेत्रनिर्वाणमिति । अतः परं श्रोत्रेन्द्रियनिर्वाणं क्रमप्राप्तमिति द्योत्यते । एषेत्यादिना नेत्रनिर्वृतिप्रकार उक्तः । अन्वास्यते । अनुपूर्वोऽयमासिः सकर्मको दृश्यते । यथा 'अन्वासितमरुन्धत्या' इति ।

भवतिवति। श्रोप्यग्म इति श्रोत्रनिर्वाणस्य पूर्वरङ्गः। विस्रम्भकथितानि स्वैरालापानि। तेभ्यः सर्वमवधारयानः इति भावः।

हला सउंदले इति। दुःखव्यञ्जिकया सम्बोधनकाका 'समदुःखसुखः सखीजन' इत्युक्तनीत्या सखीहृदयेऽपि नायिकादुःखावेधः सूच्यते। अपिशब्दः प्रश्ने। सुखायते। 'सुखप्रियादानुलोम्ये' (पा० सू० ५-४-६३) इति डाच्। 'लोहितादिडाज्भ्यः क्यष्' (पा०सू० ३-१-५३) इति क्यष्। 'वा क्यषः' (पा० सू० १-३-९०) इति क्यष्यात्मनेपदम्। अनेन सन्तापस्य प्रबलतरत्वं ध्वन्यते। नलिनीपत्रवात इति। नलिनीपत्रसम्बन्धाद्वातस्य शैत्यातिशय उक्तः।

तथाभूतस्योपवीजनस्य वैफल्यमाह – किं वीजयन्तीति। ननु वीजयतो मां सख्यौ इत्यनेन तद्वीजनसुखमनया किञ्चिदपि न ज्ञातमिति सूच्यते। तेन सन्तापगौरवं ध्वन्यते। सविषादपरस्परनिरीक्षणमप्येतदेव प्रकटयति।

अथ सविकल्पकज्ञानपुरस्सरमस्याः सन्तापहेतुं निश्चिनोति – बलवदिति। बलवदस्वस्था शकुन्तला दृश्यते इति सखीहृदयमनुवदति। अथोपपत्त्या विमृश्य निश्चिनोति – अथवेति। कृतम् अलम्। अत्र सन्देहो मा भूदित्यर्थः।

स्तनन्यस्तेति। उशीरं वीरणमूलं। प्रशिथिलानि अयथास्थितानि परिम्लानानि च मृणालैकवलयानि परित्यक्ताभरणत्वान्मृणालैकवलयानि यस्य। सदपि भवदपि। तदपीति पाठे तथापीत्यर्थः। कमनीयम् अक्लिष्टलावण्य–हृद्यम्। वक्ष्यति च 'केवलं लावण्णमई छाआ तुमं ण मुञ्चइ' इत्यादि। इदम् अनुभवगोचरम्। शरीरसन्तापस्य काममूलत्वमन्वयमुखेन प्रसाध्य व्यतिरेकमुखेनाप्यवस्थापयति – सम इति। काममित्यर्थाङ्गीकारे। यद्यपीत्यर्थः। एवमिति। मनसिजोपरोधवदित्यर्थः। उपरुद्धमिति। 'नपुंसके भावे क्तः' (पा०

सू० ३-३-११४) इति क्तः। उपरोध इत्यर्थः। यद्यपि युवतिषु मनसिजनिदाघप्रसरयोस्तापः समः तथापि निदाघप्रसरोपरोधः सुभगो न भवति, अतोऽयं मनसिजप्रसरोपरोध एवेत्यर्थः। अत्र निदाघग्रीष्मशब्दौ समानार्थौ, तथा बाधतापोपरुद्धशब्दाश्च। मतिरौत्सुक्यं च भावः।

पर्युत्सुकमना वर्धमानानुरागा। आपन्ना इव दशमीमवस्थां प्राप्तेव। तन्निमित्तः राजर्षिनिमित्तः आतङ्को द्रोहः। भवतु एवं करिष्य इत्यर्थः।

किमपि बलवानत्यर्थं बलिष्ठः।

अनभ्यन्तरा अज्ञाः। अवस्थैव समवस्था। तादृशी समवस्थेत्यनुषज्यते। आयासः क्लेशविकारः। खलु परमार्थतः अज्ञात्वा अनारम्भः प्रतीकारस्येति व्याधेरतत्त्वपरिज्ञानं विना चिकित्सा न फलवतीति भावः। न हि मे स्वाभिप्रायेण दर्शनमिति वस्तुवृत्तमप्येवमेव भवतीति भावः।

अभिनिवेशः प्रणयातिप्रसङ्गः। यद्येवं झटिति सन्तापहेतुनिवेदनमेवोचितमिति चेत् तदपि न शक्यमित्याह - एदाणं पीति। अपिशब्देन तयोर्विस्रम्भातिभूमित्वात् किमपि न गूहितुं युक्तमिति सूच्यते। सहसेति। लज्जातिरेकादिति शेषः। क्षणान्तरे शक्यमपि स्यादिति द्योत्यते। न शक्नोमीति निवेदनेच्छा मनसि वर्तत इति भावः।

सहीति। सखि शकुन्तले सुष्ठु युक्तियुक्तमेषाऽनसूया भणति। 'हला सउंदले अणब्भंतरा खु वअं' इत्यारभ्य 'अणारम्भो पडिआरस्स' इत्येतत्पर्यन्तम्। यावदस्यामप्यवस्थायामायासनिमित्तं भणितुं युक्तं, नो चेत् तदन्य एवायासस्त्वां परिभविष्यतीत्याह - किमिति। उपेक्षसे। उपेक्षणं नाम प्रतीकारा-

करणात् क्रमेणातङ्कविवृद्धिः । इदानीमपि कारणाकथनेनाचिकित्सिते रोगे शरीरं नाशमेष्यतीत्याह – अणुदिअहं इत्यादि । अनुदिवसमित्यनेन परिहाणे क्रमस्फुटत्वमुक्तम् । परिहीयसे क्षीयसे । अनेन क्षयस्य विरतिर्नास्तीति द्योत्यते । केवलं लावण्यमयी छाया त्वां न मुञ्चतीत्यनेन आतङ्कस्य कामनिमित्तत्वं स्फुटीकृतम् । सखीभ्यां सिद्धेऽप्यातङ्कनिमित्ते तन्निबन्धनः प्रश्नः तन्मुखेन निवेदितस्य तस्य श्रोतुमभीष्टत्वात् प्रतिक्रियायोग्यत्वात् च । छाया त्वां न मुञ्चतीत्यत्र यथा प्रियसखी विरहादिदुःखितां नायिकां कदाचिन्न परित्यजति तथा छाया त्वामपीति छायायाः प्रियसखी-व्यवहारो ध्वन्यते ।

अनेन नायको नायिकाविरहवेदनामात्मविषयां निश्चित्य पुनः प्रियंवदो-पवर्णितां तदवस्थां च श्रोत्रद्वारेण नयनपुटेन चास्वाद्य प्रहर्षपरवशतयानु-मोदमान आह – अवितथमाहेत्यादि । क्षामक्षामेति । पूर्वार्धेन प्रियंवदोक्तमेव विशदीकरोति । उक्तप्रकारेण शोच्या च लावण्यसहभावेन प्रियदर्शना च । अत एव मदनक्लिष्टा इयं लक्ष्यते विरहलक्षणेन ज्ञायते । पत्राणामित्यङ्गानां प्रतिनिर्देशः । शोषयतीति नन्द्यादिपाठात् कर्त्तरि ल्यु । उपलक्षणे तृतीया । स्पृष्टा न तु क्लिष्टा, तथात्वे लावण्यस्थानीयं प्रियदर्शनत्वं हीयेत । मालत्युपमानेन तस्याः सौकुमार्यातिशयः सन्तापासहिष्णुत्वं च ध्वन्यते ।

अथ सखीजननिर्बन्धात् क्लेशासहिष्णुत्वाच्च लज्जां कथञ्चित् परित्यज्य आतङ्ककारणं वक्तुं सपीठिकाबन्धमुपक्रमते - सखीत्यादि । अन्यस्येति सामान्य-निर्देशः, तस्यान्यस्य इतिवत् । विस्रम्भातिशयाद् युवयोरेवैतत् कथयितुमुचितं, नान्यस्येत्यर्थः । कारणे कथितेऽपि युवयोरपि तापो भवत्येव न शमेत्याह – सर्वथेत्यादि । अकथने यथातत्त्वसंवेदनाभावात् कथने त्वशक्यप्रतिक्रियत्वाच्चाह-मिदानीं युवयोरायासयित्री क्लेशप्रदा भविष्य इत्यर्थः ।

अत एव आयासस्यंक्रमणाद्धेतोरेवेत्यर्थः । तेन किं स्यादित्याह - संविभक्तं खु इत्यादि । संविभक्तं खलु दुःखं सह्यवेदनं भवति । यथा वोढुर्भारसंविभागेन दुःखं लघु भवति तथा इत्यर्थः ।

अथ सखीनायिकयोः प्रश्नप्रतिवचनयोरन्तराले विजृम्भितमौत्सुक्याऽतिरेकजनितं संभ्रमप्रकारं नायकः परामृशति - पृष्टेति । सम्दुःखसुखेनेति । सुखशब्दस्याऽपि दुःखशब्दस्य प्रेमप्रकर्षगमकत्वाद् दुःखशब्दस्य पूर्वनिपातः । जनेनेति स्नेहबहुमानपात्रत्वमुक्तम् । अनेन प्रतिवचनस्यावश्यकत्वमुक्तम् । बाला दुरसहसन्तापासहनाद्विचारणाक्षमा । अनेन प्रतिवचनस्याविलम्बः प्रतीयते । कन्याजनसुलभलज्जाभरातिलङ्घी तस्या दुरसहमदनाग्निसन्ताप इति निषेधद्वयमुक्तम् । द्विनञोरर्थः पूर्वमुक्तः । मनोगत इत्यनेन प्रश्नावकाश उक्तः । आधिहेतुमिति । 'मनश्शरीरयोस्तापः परस्परमनुव्रजेद्' इति न्यायेन आधिरत्र व्याधिरूपेण परिणत इतीयानीमुक्तपरम् । अनेन गोपनाशक्यत्वं व्यज्यते । दृष्टोऽप्यत्यपिशब्दः श्रवणकातरत्वस्यासम्भावनां द्योतयति । अनया मन्मनोरथपात्रभूतया । बहुशो निवृत्य बहुशः सतृष्णं दृष्ट इत्यनेन

'दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा'

इत्यादिनोक्तोऽर्थः कटाक्षितो द्रष्टव्यः । अत्रान्तरे प्रश्नप्रतिवचनयोरल्पेऽन्तरालकाले । श्रवणकातरतां श्रवणे प्रतिवचनश्रवणे कातरतां अधीरतां गतोऽस्मि । अहं तद्गतेनाभिलाषेण एतामवस्थां प्राप्तोऽस्मि इत्यविलम्बेन तन्मुखादेव श्रवणलोलुपतया तमत्यल्पमप्यन्तरालकालं सोढुं न शक्नोमीत्यर्थः । यथा मालविकाग्निमित्रे –

"नेपथ्यपरिगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः ।
संहर्तुमधीरतया व्यवसितमिव मे तिरस्करणीम्" ॥

इति । अथवा श्रवणकातरताम् इयं स्वाभिलाषविषयत्वेनान्यं वरं कथयिष्यति तत्प्रतिवचनश्रवणभीरुतां गतोऽस्मीत्यर्थः । अत्रौत्सुक्यं शङ्का च प्रतीयते ।

अथ नायिका तावत् प्रतिवचनमुपन्यस्यति - सहीति । सख्यमेवात्र प्रतिवचनदाने हेतुरित्यर्थः । नोपन्यासे हेतुरिति भावः । एतद्गम्यावस्था । अत्र लिङ्गं 'अण्णहा अवसिश्चह उदअं मे दाणिं' इति वक्ष्यमाणवचनम् ।

अथ नायिकाप्रतिवचनमहोत्सवप्रमुदितो नायकः तदानीं कृतार्थतां परामृशति - श्रुतं श्रोतव्यमिति । इदानीं श्रोत्रेन्द्रियनिर्वृतिरप्युपलब्धा इत्यर्थः । तन्निर्वृतिप्रकारमाह – स्मर एवेति । अनेनोभयप्रार्थना प्रकटीकृता । उभयप्रार्थना रतिं कुरुते इति चास्ति । एवकारद्वयेन तापनिर्वाणयोरेककर्तृकत्वं प्रतिपादयता स्मरस्य साम्राज्यमुत्तेजितम् । अर्धश्यामः प्राह्णापराह्णयोरातपानातपाभ्यां तापनिर्वापणनिर्वाहकत्वात् । तपात्यये ग्रीष्मावसाने ।

अथ लोकोत्तरगुणनिधानभूते नायके नायिका स्वाभिलाषौचित्यं प्रति सखीजनं प्रमाणयितुमारभते - तम् इत्यादि । तदिति प्रकृतो वाक्यार्थः परामृश्यते । दुष्यन्ताभिलाषित्वमित्यर्थः । राजर्षेरनुकम्पनीया । तेन सादरं परिगृह्या । अन्यथेति । युवयोरेतदनौचित्यादननुमतं चेदित्यर्थः । अवसिञ्चतमिदानीमुदकमिति । तर्हि म्रियेऽहमित्यर्थः । इदानीमित्यनेन क्षणमपि सोढुं न शक्नोमीति सूच्यते ।

अथ नायिकायाः पश्चिमं वचनं सहर्षमनुवदति – संशयच्छेदि वचनमिति ।

सत्यमियं विरहासहतया मरिष्यति न संशय इत्यर्थः । अनेन नायकस्य हर्षः प्रतीयते ।

अथ प्रियंवदा नायिकाया दृढप्रतिपत्तिमवधार्य सविषादं सहर्षं चानसूयामाह – अणसूए इत्यादि । सम्बोधनेन वयं सङ्कटे पतिताः स्म इति सूच्यते । सदृशदर्शनचित्रालोकनस्वप्नानुभूत्यादिभिरियं कालहरणस्य न शक्तेत्याह – दूरगेत्यादि । दूरगतमन्मथा भृशप्राप्तमन्मथा । अनेन दुःखस्य प्रियसमागमैकशरणत्वं ध्वन्यते । अत आह – अक्खमेति । अक्षमेयं कालहरणस्य । एवं हि सा तेनाविलम्बितमेव घटयितुमुचितेति चेत् तन्न शक्यमित्याह –जस्सिं इति । यस्मिन् बद्धभावा एषा सः ललामभूतः पौरवाणाम् । ललामभूत इत्यनेन सद्यस्तत्समागमसंपादनस्य दुष्करत्वं द्योत्यते । तेन सखीजनस्य विषादो व्यज्यते । यद्यपि झटिति तत्समागमो दुर्लभस्तथापि तद्विषयोऽभिलाषः श्लाघ्यतर इत्याह –ता इत्यादि । तत् तस्मात् यस्मादयं पौरवश्रेष्ठः ।

अथ प्रियंवदावचनमनसूया सहर्षमनुमोदते - तह इति ।

अथानसूया तदेव प्रकाशं नायिकामुद्धर्षयितुमाह — सहीति । इदानीमस्मत्सख्यं हृद्यमभूदिति द्योत्यते । अत आह - दिट्ठेति । अयं हर्षद्योतको निपातः । अभिलाषस्य परस्परानुरूप्यदृष्टान्तद्वयेन तां प्रमोदयति - साअर इति । महानदी गङ्गा ।

'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलता ।

इति सिंहः । अस्याः स एवानुरूपः तस्येयमेवेति परस्परानुरूप्यं द्योतयितुं दृष्टान्तद्वयमुक्तम् ।

अथ नायकस्सखीवचनमनुसरति - यदीति ।

अथ नायिकायाः विरहदुःखसमुद्भूतानन्दया तत्समागमोपायं चिन्तयति - को उण इत्यादिना। येनोपायेनाभिलषितं शीघ्रं निष्प्रत्यूहेन केनाप्यविज्ञातम्। अनेन गान्धर्वविवाहो विवक्षितः, स तु दुष्कर इति भावः। अत्र महाभारतवचनम् -

"अष्टावेव समासेन विवाहा धर्मतः स्मृताः।
ब्राह्मो दैवस्तथा चार्षः प्राजापत्यस्तथासुरः॥
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः।
तेषां धर्मान् यथापूर्वं मनुः स्वायम्भुवोऽब्रवीत्॥"

इति। योजनस्य सुकरत्वं समर्थयते - णं सो इत्यादि। ननु स राजर्षिः अस्यां स्निग्धदृष्टिः सूचिताभिलाषः अमूनि दिवसानि प्रजागरकृशो लक्ष्यते।

'स्निग्धं तद्यस्य विषयस्तत्प्रसाभिलितो भवेद्'
इति उक्तपरम्। लक्ष्यते अङ्गुलीयके।

इदमिति। इदमन्धविनिधिरसप्रत्युपन्यासाद् अतिश्लाघ्यम्। अन्तस्तापाद्-शिशिरैः अत्युष्णैः। पर्युदासे नञ्। विवर्णीकृतं मणीनामुष्णनयनधारासेकाद् वैवर्ण्यं भवतीति प्रसिद्धम्। अहमिव वलयमपि अतिशोच्यं भवतीति भावः। निशि निशीति। वासरेषु वासरेषु सहदर्शनाद्युपायैः कालयापना भवतीति भावः। निशायां तु चन्द्रोदयकुसुमसौरभादेर्दुस्सहत्वाद् गत्यन्तराभावाच्च सातिशयेन विविक्तं निषेद्धुम्(?)अशक्यत्वात्। शायिकायां तामेव प्रियतमामनुचिन्त्य भुजसंपुटन्यस्तवदननिवेशवशान्निक्षिप्तेनापाङ्गद्वयेन प्रसर्पणशीलैरविच्छिन्नप्रसृमरैः अश्रुभिरिति बहुवचनेन बाहुल्याद् दुःखातिशयो व्यज्यते। अनतिलुलितेति। कार्श्यातिशयादनतिस्पृष्टज्याघातकिणम्। अनेन वलयस्रंसनेन ज्याघाताङ्कस्य निश्शोभत्वं

सूच्यते । कनकेति । कार्श्यातिशयात् स्रस्तं स्रस्तं एकं कनकवलयं मङ्गलार्थतयाधारणौचित्याद् मुहुर्मुहुरास्रुच्यत इत्यर्थः । पूर्वार्धेन प्रस्तुतः प्रजागरक्लेशोऽनूद्यते, उत्तरार्धेन तत्प्रसङ्गात् कार्श्यातिशय उक्तः । अत्र नायिकाविषयस्य नायकसम्बन्धिनो रतिभावस्य निशातपाक्षिप्तचन्द्रमन्दानिलकुसुमसौरभादय उद्दीपनविभावाः । अश्रुप्रवरणशरीरकार्श्यादयोऽनुभावाः, तदभिव्यङ्ग्याश्चिन्ताविषादालस्यग्लान्यौत्सुक्यादयो व्यभिचारिणः । एभिर्विप्रलम्भो रसः स्फुट एवाभिव्यज्यते । अत्र तावद्विप्रलम्भस्याङ्कद्वयेन विस्तरवर्णनं क्रियते सम्भोगादपि विप्रलम्भस्य चमत्कारकारित्वात्, ब्रह्मास्वादसहोदरस्य संभोगरसस्य विप्रलम्भगौरवानुविधायित्वात् च, सम्भोगस्य नाटकेषु साक्षात्कारानुपपत्त्या विप्रलम्भद्वारेण ज्ञापकत्वयोग्यत्वाच्च । उत्तरत्र वर्ण्यमाने वियोगेऽप्ययमेव न्यायो द्रष्टव्यः ।

अथ सन्तप्तयोर्नायकयोरविलम्बितसमागमसद्भावं निश्चित्य प्रियंवदा निभृतसमागमोपायं चिन्तयति – विचिन्त्येति । विचिन्त्य एवं कर्तव्यमिति मनसा समाकलय्येत्यर्थः । हळा! मदनलेखोऽस्याः क्रियताम् । तं सुमनोगोपितं देवशेषाव्यपदेशेन तस्य राज्ञो हस्तं प्रापयिष्यामि । हलेत्यनुनयसूचकं सम्बोधनपदम् । मदनलेखः मदनसूचको लेखः । लिख्यतेऽस्मिन्निति लेखः पत्रम् । अस्या मदनलेखः क्रियतामिति सम्बन्धः । तं मदनलेखम् । सुमनोगोपितं पुष्पैस्तिरोहितम् । देवशेषाव्यपदेशेन मुनिभिः परमेश्वरार्चनोपयुक्तं माल्यं देवशेषेत्युच्यते । 'पुष्पाक्षतादिदाने[1] स्त्री शेषा' इति केशवः । परमेश्वरनिर्माल्यकुसुममित्यर्थः । शेषेति प्रभूणां वस्त्रपाल्यादिदानमिति केचित् । इदं भगवतो मुनिभिः कल्पितं देवनिर्माल्यकुसुम-

1. माल्याक्षतादीति मुद्रितकोशपाठः ।

मिति व्याजोत्पादनेन इत्यर्थः । किं वा शकुन्तला भणतीति । तस्या रोचते वा न वा इति न जानामीत्यर्थः । अनेन तद्रुचिरेवात्र प्रमाणमिति सूच्यते । अथ सखीहृदयं जानती नायिका भङ्ग्या सखीवचनमनुवदति – किं णिओओ इति । नियोगश्चेदविलम्बितमेवानुष्ठातुं युक्तः न विकल्पयितुमिति भावः । तर्हि तथैवानुष्ठीयतामित्याह – तेण हीति । तेन मदुक्त्यनुरोधादित्यर्थः । आत्मन उपन्यासरूपं चिन्तयेति । आत्मनः आत्मीयविरहवृत्तान्तस्य, उपन्यासरूपं योजनारूपं, चिन्तय सावधानं चिन्तय । अनेनार्थशुद्धिप्रकार उक्तः । किं पीति । किमपि ललितपदबन्धनम् । अत्यर्थं माधुर्यगुणप्रधानमित्यर्थः । अनेन शब्दवैशिष्ट्यमुक्तम् । चिन्तयाम्यहम् । उक्तलक्षणं काव्यबन्धं निर्मातुं आत्मोपन्यासस्वरूपं चिन्तयामीत्यर्थः । अत्र विशेषोऽस्तीत्याह – अवहीरणेति । पत्रिकाप्रदाने प्रणयित्वे प्रकाशिते तत्कृतामवज्ञां सम्भावयामि, तेन भीरुत्वान्मम हृदयं कम्पते इत्यर्थः ।

तच्छङ्कितामवज्ञां परिहरति – अयमिति । स यः खलु प्रौढविरहानलज्वालावलीढदन्दह्यमानमनश्शरीरतया क्षणमपि नोत्सहते अयं तच्छमनार्थं त्वद्दर्शनचन्द्रिकाप्रारम्भसुखमनुभवितुं त्वत्सविधवर्तीत्यर्थः । ते सङ्गमोत्सुकः त्वत्सङ्गमे क्षणमपि विलम्बितुमसहमानः, तिष्ठति आत्मानं व्यवधाय स्थितिं करोति । प्रकाशनाभावादात्मनेपदाभावः । वर्तमानप्रत्ययेन सङ्गमावधि त्वत्समीपान्नापगच्छतीति द्योत्यते । तच्छब्दार्थं विवृणोति – विशङ्कस इति । यतः यस्मात् । मत्त इत्यर्थः । भीरु ! । अत्रावधीरणाजन्यस्य भयस्य नायमवकाश इति भावः । अत्र वामनः – “मनुष्यजातेर्विवक्षाविवक्षे । इतो मनुष्यजातेः', (पा० सू० ४-१-६५) ‘ऊङुतः’ (पा० सू० ४-१-६६) इत्यत्र मनुष्यजातेर्विवक्षा अविवक्षा च लक्ष्यानुसारतः ।

'मन्दरस्य मदिराक्षि! पार्श्वतो निम्ननाभि! निपतन्ति निम्नगाः ।
तासु वासुकिविकर्षणोद्भवा भामिनीह पदवी विभाव्यते ॥'

अत्र मनुष्यजातेर्विवक्षायां 'इतो मनुष्यजातेः' इति ङीषि सति 'अम्बार्थनद्योर्ह्रस्वः' (पा० सू० ७-३-१७) इति सम्बुद्धौ ह्रस्वत्वं सिध्यति । 'सुतनु! जहिहि कोपम्' इत्यत्र मनुष्यजातेर्विवक्षेति सुतनुशब्दात् 'ऊङुतः' इत्यूङि सति पूर्ववद्ध्रस्वत्वे च सुतनुशब्दस्सिध्यति" । एवंविधोऽहमेवंविधया त्वया सुलभो वा न वेति शङ्का मा भूदिति हृदयङ्गमेन दृष्टान्तेन द्रढयति—लभेत वेति । प्रार्थयितेति तृन्नन्तं पदम् । श्रिया ईप्सितः कथं श्रिया दुरापो भवेदित्यन्वयः । अत्र हर्षो भावः ।

उक्तदृष्टान्तसब्रह्मचारिणा दृष्टान्तेन सखीजनस्तामाश्वासयति—अत्तगुणेति । आत्मगुणावमानिनि क इदानीं शरीरनिर्वापयित्रीं ज्योत्स्नां पटान्तेन वारयिष्यति । पूर्वमेव त्वत्समागमसमुत्सुकः प्रियतमः तत्समागमप्रवृत्तां त्वां कथमवजानीयात्, नैवेति भावः । अत्र नायिकामौग्ध्यासहनादात्मगुणावमानिनीति निन्दागर्भं सम्बोधनम् । एतदनुसारेण क्षेपद्वाराप्रस्तुतेनार्थान्तरेण प्रस्तुतार्थप्रतिबोधनमिति बोद्धव्यम् । तस्मादवधीरणाभीरुत्वं मा कृथा इति भावः । सस्मितमिति । हृदयङ्गमेन दृष्टान्तेन मनोगतस्यार्थस्य दृढप्रत्ययात् । णिओइदा दाणिं ह्वि इति । पूर्वं लघुसमागमोपायार्थं नियोगमात्रमेव कृतं, इदानीं तु शङ्कापरिहारपुरस्कारेण सोपपत्तिकमात्मोपन्यासे नितरां नियोजितोऽस्मीत्यर्थः । उपविष्टेति । कुसुमशयनादुत्थाय प्रस्तुतप्रतिपत्तये कथञ्चिदासीनेत्यर्थः । उपवेशने हि चिन्तनलेखनयोः सौकर्यं भवतीति भावः । इदानीं किमपि विशेषदृश्यत्वमापततीत्याह — स्थान इत्यादि । स्थाने

खल्विदानीं विशेषेण द्रष्टुं युक्तमिति भावः । अत एवाह – विस्मृतनिमेषेणेति ।

चिन्तास्वभावं राजमुखेन दर्शयति – उन्नमितेति । पूर्वार्धेन रचनायां पदे पदे सावधानत्वम् अस्या व्यज्यते । कण्टकितेन प्रियतमानुसन्धानबलेन मनस्यानन्दसंप्लवनाद्रोमाञ्चितेन । कपोलेनेत्येकवचनं तदानीम् एकस्यैव कपोलस्य दर्शनोपपत्तेः । अत एवोक्तम् अनुरागं प्रथयति विस्तारयतीति । अत्र रचनास्वभावदर्शनेन नायकस्य मनसि कोऽपि चमत्कारोदयः प्रकाश्यते ।

हळा इति । हर्षगर्भमेतदामन्त्रणम् । चिन्तितमिति भूतकालप्रत्ययेन वस्तुनः पारिपूर्ण्यमुक्तम् । वस्तु पद्यरूपेण रचितं अर्थशरीरमित्यर्थः । शब्दशरीरं तु दण्डापूपिकया सिद्धम् । अत एवाह – असण्णिहिदाणीति । असन्निहितानि लेखनसाधनानि तालपत्रादीनि । अस्मिन् शुकोदरसुकुमारे नलिनीपत्रे नखैर्लिखितवर्णं कुरु । हळा ! शृणुतं तावदेनं सङ्गतार्थं न वेति । अवहिते स्व इति । अनेनादरं द्योतयति ।

अथ प्रणयकुपिता नायिका सत्यपि प्रणये विलम्बितसमागमं नायकमपलपति – तुज्झेत्यादि ।

> तव न जाने हृदयं मम पुनर्मदनो दिवापि रात्रिमपि ।
> निर्घृण ! तपति बलवत् तवाभिमुखमनोरथं हृदयम् ।

दिवा दिवसं रात्रिमिति च अत्यन्तसंयोगे द्वितीया । मदनस्तव हृदयं प्रथम-

दर्शनादारभ्य प्रवृत्तप्रेमसंरम्भप्रकर्षक्रमेण स्मरशरसन्धुक्षितहृदयसन्तापवशात् सद्यश्शदर्शनादिप्रतीकारोपायान् निराकृत्य दिवापि रात्रिमपि सदैवाधिकतरं बाधते वा । महाकुलप्रभवत्वादियुक्ता राजकन्यका मम समुचिता न तु दुर्भगा मुनिकन्यकेति प्रेमपरीक्षार्थं न तपति वेति न जाने इत्यर्थः । यदि मदनस्तव हृदयं तपेत् तदा पूर्वमेवावयोस्समागमोऽभूदिति भावः । तस्मादन्वयव्यतिरेकाभ्यां प्रणयस्तव हृदयं नास्पृशदिति मे प्रतिभातीत्युक्तं भवति । एतत्तु जानामीत्याह – ममेति । मम स्त्रीत्वाद्स्पृष्टधैर्यायाः । पुनश्शब्दस्त्वर्थे । मम मनस्तु पूर्वोक्तप्रकारेण सदा बलवदत्यर्थं तपति । अत्र हेतुमाह – तुहेति । त्वामभिमुखमनोरथमिति । मनोरथाः संकल्पाः प्रियतमस्य दर्शनसुखादीन्यनुभविष्यामीत्यादयः । एते हृदयस्थाः सर्वे मनोरथाः त्वदभिमुखा एव वर्तन्त इति भावः । तुइ वुत्तेति, पाठान्तरम् । त्वयि वृत्तेति च्छाया । अथ मत्प्रणयपरीक्षार्थोऽयं समागमविलम्बः तस्य नायमवसरः, अहो ते हृदयकाठिन्यमित्येवं सम्भाव्य निर्घृणेति सम्बोधनम् । अत्र मदनो दिवानिशं मम हृदयं तपतीत्यनेन सततं मम हृदयसन्तापव्यापारेण कालक्षेपान्मदनस्तव हृदयं न तपतीवेत्युत्प्रेक्षाध्वनिः । तवौत्सुक्यमान्द्यात्तापस्यावसानं न दृष्टमिति तपतीति लट्प्रत्ययेन द्योत्यते । अत्रौत्सुक्यकोपौ ।

अथ नायकः पत्रिकावाचनप्रसक्तां तस्याः शङ्कामपनुदन् सहसा समीपमागत्य स्वावस्थां निवेदयति - तपतीति । तापश्शरीरस्य मनसस्संक्रान्तं प्रबलतरमौष्ण्यम् । तेन गात्राणां तनुत्वमेव भवति । तेन तु सद्यश्शरीरापायप्रसङ्गः अतस्तनुगात्रीति सम्बोधनं श्लाघ्यात्मकं च । अनिशमित्युभयवाक्यशेषः । प्रथमं वाक्यं नायिकोक्तानुवादनिष्ठं; अनुवादश्च तस्या आत्मनो विप्रलम्भपरिखेदस्य प्रबलतरत्वं ख्यापयितुम् । तदेव प्रबलतरत्वं निवेदयन्नाह -

मामिति । पुनश्शब्दो विशेषद्योतकः । दहत्येवेति । दह भस्मीकरणे । तमायश्शल्यैरिव कुसुमशरैर्मां दहतीत्यर्थः । एवकारः पौनर्वचनिकः । अनेन समागमविलम्बने देहस्यापायोऽपि भविष्यतीति भावः । न तु त्वद्भ्रंशनार्थमेतच्चाटुभाषणम्, अपि तु भूतार्थमेवेति च भावः । अस्मिन्नर्थे दृष्टान्तमाह - ग्लपयतीति । न तथैव कुमुद्वतीमिति । कुमुद्वत्यास्तु मुकुलनलक्षणं कार्श्यमेव भवतीति भावः । औत्सुक्यं भावः ।

अथ सखीमुखेन नायिका स्वागतवचनं करोति - साअदं इति । अविलम्बिनः अतर्कितोपनतस्य । अनेन प्रियतमवृत्तान्तकथनप्रस्तावे स्वयमेव तदागमनं मङ्गलमिति तासां हृदयोल्लासात् कार्याविलम्बनप्रतीतिः । तथा रघुवंशे - 'इति वादिन एवास्य होतुः' इत्यादि । तस्य तथाविधव्याजानुपलम्भनात्तासामेवं प्रतीतिः । मनोरथस्येति । मनोरथशब्देन नायक उच्यते । अनेन तदागमने मनोरथप्राप्तिबुद्ध्या तासां कृतकृत्यताभिमानो व्यज्यते । अभ्युत्थातुमिच्छतीत्यनेन अभ्युत्थानासामर्थ्यं गम्यते । आयासेनाशक्यकरणेन ।

कुत इत्याह - सन्दष्टेति । सन्दष्टानि ग्लानतया संश्लिष्टानि कुसुमशयनानि तद्गतकुसुमकदम्बकानि येषु । अनेन गात्राणां परिवर्तनपरिक्षेपादि ध्वन्यते । अत एव वक्ष्यति – 'तस्याः पुष्पमयी शरीरलुलिता शय्या' इति । तापगौरवादाशुक्रान्ता विसभङ्गा येषां तान्याशुक्रान्तविसभङ्गानि च तान्युशीरानुलेपनात् पुष्पशयनसम्मर्दाद्वा सुरभीणि चेति बहुव्रीहिगर्भः कर्मधारयः । क्रान्तबिसभङ्गसौरभाप्रसिद्धेः । अस्तु वा तथा प्रसिद्धिः तदा तृतीया तत्पुरुषः । अनेन गुरुपरितापत्वमुक्तम् । अनेन तस्याः शिशिरोपचारवैफल्यमन्तरान्तरा मोहोपगमः सखीजनवीजनादिवैयर्थ्यं च ध्वन्यते । गात्राणीति बहुवचनेन नायकदर्शने नायिकायाः स्वयमेवोत्थानाशक्यत्वं सिद्धम् । तत्र

शय्यायाः सखीकरावलम्बनेन कथं कथमप्युत्थाने सिद्धेऽपि पुनर्वन्दनादिकमप्युभयपार्श्वस्थिततत्करावलम्बनेन निर्वर्तनीयमिति ध्वन्यते । अस्य श्लोकस्य भाष्यम् –

"मनोरोगस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानत इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥"

इति ग्रन्थसन्दर्भः । अनेनास्यै मरणस्यार्धमार्गः शिक्षित इति प्रतीयते । तेन सखीजनवैक्लव्यादयो व्यज्यन्ते । अत्र ग्लान्यादयो बहवो भावा व्यज्यन्ते ।

इदो इति । वयस्य इत्यनेन इदानीं भवानस्मत्सख्याः पतित्वेन वृत इति सूच्यते । अत आह – शिलातलैकदेशमिति । त्वत्प्रियतमाधिष्ठितस्य शिलातलस्यैकदेशमित्यर्थः । इदमेव हि वयस्यत्वम् । अनुगृह्णातु । सहोपवेशेनास्माकं प्रीतिं पुष्णात्विति भावः । एकासने सहोपविष्टयोर्युवयोः अन्योन्यानुरागश्च प्रत्यक्षो भविष्यतीत्यभिप्रायः । अत आह – वअस्स इत्यादि । सखीस्नेहो मां पुनरुक्तवादिनीं करोतीति । सिद्धस्य पुनर्वचनं पुनरुक्तम् पौनरुक्त्यमनुचितमिति भावः । पौनरुक्त्यमत्र न परिहार्यमित्याह – भद्द इति । अनेन विवक्षितश्रवणकौतूहलत्वरया (ता)मावर्जयति । नैतदिति ।पौनरुक्त्यं न कर्तव्यमित्यस्य नायं विषय इति भावः । 'पिए जणे

णत्थि पुणरुत्तं' इति वचनात् । अत्र हेतुमाह – विवक्षितमिति । तत् किमित्याह – आपण्णस्स इति । आपन्नस्य शरणाभावाद् दौर्गत्याद्वा दीनस्य इत्येकत्र, अन्यत्र विरहसन्तापदग्धत्वाद्दशमीमवस्थां गमिष्यतः । विषयवासिनो राज्यवासिनः तपोवनस्यापि राज्यान्तर्भूतत्वात् इत्येकत्र, इतरत्र त्वदेकसक्तस्य । जनस्य वर्णाश्रमलक्षणस्य इत्येकत्र, अन्यत्र मुनिकन्यकाजनस्य । आर्तिरापन्नशब्दे व्याख्यातः । राज्ञा रञ्जनाद्राजा । राज्ञां न केवलं तत्र, धर्मः अवश्यानुष्ठेयः । अत्रैकस्सामान्यरूपो वाच्योऽर्थः अन्यो व्यङ्ग्यरूपो विशेषः स्वाभिप्रायानुगुणः । अत्र सामान्यो विशेषस्य व्यङ्ग्यरूपस्य समर्थको द्रष्टव्यः । अनेनाविलम्बितमेव समागमः कर्तव्य इत्युक्तं भवति । एष वो धर्म इत्यनेन गान्धर्वविवाहस्य धर्मबाधा न भवतीति सूच्यते । तथा च श्रीमहाभारते –

"गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा विशङ्कथाः ।
पृथग्वा यदि वा मिश्रौ कर्तव्यौ नात्र संशयः ॥"

इति । मिथस्समयोपवेशनं कृत्वेति विवाहस्स गान्धर्व इति गान्धर्वविवाहलक्षणम् ।

'विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते'

तदल्पदोषे पुरुषे गुणाधिके समर्प्यते चेदियमात्मजा क्वचित् ।
(स?न)च प्रमादो भविता तथाविधं महत्त्वमस्या हि जगत्सु सम्मतम् ॥३७॥

परेश्वरीयं खलु मङ्गलाकृतिस्तपोबलान्मे तनयत्वमागता ।
न कश्चिदस्याः परमेश्वरादृते समस्तकर्तुः सदृशोऽपरो वरः ॥ ३८ ॥

अपात्रदत्ता त्वपरीक्ष्य चेदसौ वरस्य दातुश्च कुलं विनिर्दहेत् ।
विपर्यये प्रत्युत तन्नियोजना विमृश्य कार्या तनुजन्मनः शिवे ॥ ३९ ॥

अनिच्छयास्याः सहसातिसर्जने मतिश्च नो जात्वपि नो फलिष्यति ।
विपश्चितार्थः सुविनिश्चितो ह्यसौ न कश्चिदिच्छां छलयेदिहैश्वरीम् ॥४०॥

स चाप्यमूमेव किलादिपूरुषः शिवाय लोकस्य भुवं निषेवते ।
प्रमाणमस्मिन् प्रणतार्त्तिपेषणव्रतस्य शैवालपुरेश्वरस्य गीः ॥ ४१ ॥

श्रुतं प्रमाणान्यखिले नृणाममून्यनत्ययप्रत्ययजीवितानि च ।
स देवता स्वात्ममयी शिवस्त्वसौ न तत्प्रमाणान्तरमस्य वाक्यतः ॥४२॥

स को हि नाम क्वनु चेति नैव तु प्रतीयते संवृतलक्षणत्वतः ।
गुणैस्तताः सन्ति नरास्ततस्ततो द्विजातिराजादिमहाकुलोद्भवाः ॥ ४३ ॥

उपायभूतो दुहितुः स्वयंवरस्तदेनमुच्चैरवगन्तुमावृतम् ।
कुमारिका यं वृणुते स एव स प्रधानभूतो जगतां भवेत् प्रभुः ॥ ४४ ॥

अलोकसामान्यगुणान् नराधिपानिहोपनेष्याम्यनघैः सहाग्रजैः ।
समागतेष्वेषु सभाजितेष्वसौ मनस्विनी वक्ष्यति मे महाभरम् ॥ ४५ ॥

अथेति निश्चित्य सुतास्वयंवरं स घोषयामास पुरेऽत्र सर्वतः ।
गजाधिपस्कन्धनिवेशितोल्बणप्रणादभेरीदरकाहलोत्करैः ॥ ४६ ॥

द्विमासपर्यन्तदिने तमुत्सवं प्रघोषणायां परिकल्प्य भूमिपः ।
स कारयामास च रङ्गमाततं विशारदान् शिल्पिजनान् विशालधीः ॥४७॥

न्ययुङ्क्त दूतानपि दूरगान् प्रति क्षमाभृतः सत्कटकात्तसम्पदः ।
तदैव भूपस्ततवाहिनीशतान् करानिवौघन् गरुडाग्रजप्रभुः ॥ ४८ ॥

क्रमेण लोकोत्तरविप्रसंसदे समीपतामन्तविभुत्रजाय च ।
निवेदयित्वोत्सवमान्तरालिकप्रभुप्रवीरांश्च मुदा व्यजिज्ञपत् ॥ ४९ ॥

सपत्रदूतप्रकराभिचोदिताः समग्रसेनापतिमन्त्रिसेवकाः ।
सहस्रशस्तं नृपपुङ्गवाः क्रमात् समुद्रमद्रिप्रवरा इवाययुः ॥ ५० ॥

समस्तसेव्योऽपि गुणैरमून् नृपः प्रभुत्वभावं प्रविहाय मत्सरम् ।
स कृष्णवीरादिविदग्धसङ्गतः समर्चयामास सदैव दैववत् ॥ ५१ ॥

अनल्पतल्पासनसद्वितानवद्गृहाङ्गनाचन्दनतैलसर्पिषा ।
परैश्च सन्तोष्य तदीशताधिकैर्निजाधिकत्वं प्रकटीचकार च ॥ ५२ ॥

ततश्चतुष्षष्टिविधाग्रहारजाः परेऽपि पर्याप्तपवित्रकीर्तयः ।
ततस्ततः शस्त्रभृतोऽपि शास्त्रिणः परश्शतं तत्पुरमाव्रजन् द्विजाः ॥५३॥

अभीप्सितार्थैरमुना प्रमोदिता महस्विना भूमिभृदग्रगामिना ।
सिषेविरे ते सकलानुरञ्जकं तमोभिदं तं तरुणं यथा रविम् ॥ ५४ ॥

समृद्धगीता ततवादितालता धृतोऽभूपप्रमदाशतावृता
सुहृद्यकास्तूरिकचान्द्रसौरभा विवृद्धसम्भूतिविभाससैनिका ॥ ५५ ॥

अनन्तशैलाग्रगने गभस्तिमत्यपि प्रदीपोज्ज्वलसौधवीथिका ।
निरन्तरङ्गाञ्चितनृत्तनिस्तुपप्रतिक्वणन्मङ्गलतालसङ्कुला ॥ ५६ ॥

मठच्छटाच्छात्रविहृत्युपक्रमप्रयुक्तपुण्याशिषिबद्धगीतिका ।
स्वरङ्गसङ्घर्षप्रशोक्तसूक्तिका विसर्पिधूमौघमहाम्हानसा ॥ ५७ ॥

प्रभुव्रजोपायनदानसन्ततप्रवृत्तलोकाविरलप्रतोलिका ।
प्रसक्तनादक्रयविक्रयापणा ततः पुरी सा विरराज सर्वदा ॥ ५८ ॥

अथोद्यद्दाक्षिण्यामपि परिहृतां प्रोज्झ्य ककुभं
जनैः प्रायो भूयोऽप्युरुनुतिमुदीचीं यति रवौ ।
शुभर्क्षप्रत्यूपे क्षितिपदुहितुः श्लाघ्यकमितृ-
स्वयंग्राहोद्धर्षः पुनरपि समाघोषि पुरुषैः ॥ ५९ ॥

तदागामित्वोद्यत्प्रमदविगताहारशयन-
स्पृहा सर्वा खर्वेतरनृपशता शैवलपुरी ।
चरन्ती धावन्ती सततमभिगर्जन्त्यत इतो
विशन्ती निर्गच्छन्त्यपि च रजनीं तामगमयत् ॥ ६० ॥

॥ इति शिवविलासे पञ्चमः सर्गः ॥

—*—

पूर्वाचलादथ पिशङ्गकपर्दभार-
साधारणीं दशशतीं विकिरन् कराणाम् ।
आविर्बभूव दिनकृद् विधुमाधुनानो
नाट्योद्धुरप्रमथनाथमुखानुकारी ॥ १ ॥

स्तम्बेरमस्य तमसः प्रविदारणोत्थ-
रक्ताभसान्ध्यमहसात्यरुणैर्मयूखैः ।
पञ्चास्यवद्विरुरुचे नखरैर्विशस्तां-
स्तन्मांसपेश्य इव शोणसरोरुहाणि ॥ २ ॥

कुण्ठाश्चिरात्कृतरुचेर्विरहादमुष्य
जाल्येन जारपदवीनियतस्य चेन्दोः ।
आयात्यहर्पतिपतौ ककुभः प्रसेदु-
र्भावं मुखैरखिलमान्तरमुद्गिरन्त्यः ॥ ३ ॥

आत्मोपसेविनमलिव्रजमापदार्तौ
स्वत्यागिनं विमतसेविनमप्युदीक्ष्य ।
प्रत्यागतौ न कलुषत्वमभाजि पद्मैः
प्रद्वेषधीः सुमनसां न मलीमसेऽपि ॥ ४ ॥

वल्गुस्वनाः पिकचकोरमुखाश्चुकूजु-
रुच्चैरुपाश्रितकुलायकुलाः शकुन्ताः ।
चक्राह्वयान् विरहिणः कृकवाकुनादै-
रुत्कान् प्रभातमिव साधु विबोधयन्तः ॥ ५ ॥

वायुर्ववौ सरसतामरसोरुगन्ध-
सागन्ध्यसन्धृतनिरन्तरसौभगश्रीः ।
सामन्तकेतुतनयावदनारविन्द-
सौरभ्यसिन्धुलहरीपृषतैरिवार्द्रः ॥ ६ ॥

उच्चिक्षिपुः शुचिजलाञ्जलिमुत्सवोत्का
विप्राः प्रतीक्ष्य सुचिरं रविबिम्बलक्ष्म् ।
सर्वेशसक्तमनसो नृपकन्यकाया-
स्तत्कर्मणा सफलयन्त इवाभिलाषम् ॥ ७ ॥

कान्तान्तिकान्निजगृहं प्रतिपेदुषीणां
कान्तिः प्रपूरिततृषामभिसारिकाणाम् ।
आसन्नकेरळसुतोत्सवदर्शनेच्छा-
सम्मूर्च्छिता शतगुणा ददृशे तदानीम् ॥ ८ ॥

सम्मृष्टनिस्तुषसमाः सवितानभङ्ग्यः
सम्यक् सुगन्धिहरिचन्दनवारिसिक्ताः ।
सूनोपहारसुभगाः शुभधूपदीपा
वीथ्यो बभुस्त्रिपुरपेष्टुरिवेष्टिशालाः ॥ ९ ॥

अभ्रंकषाविरळकेतुगताः पताका-
श्चित्रा दिशां श्रियमधुश्चलकिङ्किणीकाः ।
छद्मात्तमानुषतनोः प्रमथाधिपस्य
भृत्या इवोत्सवदिदृक्षुतयोच्चलन्तः ॥ १० ॥

छत्राणि तोयरुहवत् कलहंसपाली-
कल्पानि सन्दधिरे सितचामराणि ।
शस्त्राणि मीनवदथोर्मिवदश्वपङ्क्त्यो
रथ्यागतागतरता जनता नदीवत् ॥ ११ ॥

शीर्षत्रशेषकलितोरुगळाः सुकक्ष्या
विभ्राजिभूषणशता विधुतासिधेनु ।
गोमूत्रिकाभिरभिपत्य निवृत्य चोच्चैः
केचिद्भटा ननृतुरुज्झितगीतवाद्यम् ॥ १२ ॥

उत्पेतुरुद्धतकृपाणमुदग्रवीर्याः
प्रोद्भ्रान्तचामरमनोहरचर्मकर्म ।
नर्दन्त उत्तमभटा नवकुङ्कुमार्द्रा
दण्डाः प्रगृह्य गरुडा इव कृष्णसर्पान् ॥ १३ ॥

उत्तुङ्गदीप्तधनुषः शरधी निबद्ध्य
हेमाभिरामकवचाः कतिचित् सुयोधाः ।
आयन् ययुश्च मुदिताः शतशः प्रतोळ्या-
मेधस्समेधितशिखा इव हव्यवाहाः ॥ १४ ॥

प्रासाः सतोमरकुलाः प्रसभं विचेरु-
र्द्वेधा विभक्तनिवहा लघु राजमार्गे ।
स्थित्वा मुहुः क्वचन युद्धधुरानुकृत्या
व्यत्यासतोऽपससृपुश्च तथोपससुः ॥ १५ ॥

आधोरणैरत इतः प्रहितैर्गजेन्द्रै-
राभोगरुद्धनगरैः समधारि लक्ष्मीः ।
सूरांशुनाशितसुहृच्छरणात् सरोषं
लोकान्तरात् प्रसरतां तिमिरोत्कराणाम् ॥ १६ ॥

विस्मेरसद्युवतिदृग्द्युतिसन्ततायां
वीथ्यां तुरङ्गमभटाश्चटुलप्रतोदाः ।
रेजुर्गतागतिभृतो विजितप्रयासा
तन्तुप्रताननिरता इव तन्तुवायाः ॥ १७ ॥

वातोद्धुतध्वजपटाथ शताङ्गपङ्क्ति-
र्मध्येलसद्विविधरत्ननिधेर्बलाब्धेः ।
सम्मूर्च्छदद्भुतरवे बहलप्रवाहे
सालङ्कृतिः प्रवहणालिरिवाभिरेजे ॥ १८ ॥

दध्वान भैरवरवप्रविभावितान्धि-
निध्याननिह्नवभरो हृदयस्य भेत्ता ।
कल्पान्तनर्तनपरिक्रमकेळिमूर्च्छा-
मुक्तः प्रहास इव दुन्दुभिरिन्दुमौलेः ॥ १९ ॥

शार्ङ्गरवैस्तदनु काहलनर्दितानि
शृङ्गाटकादिषु विशृङ्खलतां तथेयुः ।
योसत्सभापरिवृढा अपि कौतुकाढ्याः
शीघ्रं स्वयंवरमहेऽत्र यथापतेयुः ॥ २० ॥

रङ्गं नृपाः प्रविविशुस्त्वरितास्तुरङ्गै-
रङ्गीकृताम्बुदरवैः प्रवरै रथैश्च ।
दन्तावलैश्च बहलात्तमदैरुपेत्य
सिंहा यथा त्रिदशशैलगुहां विशालाम् ॥ २१ ॥

विप्रेश्वराश्च मुदिताः प्रथिताः पृथिव्यां
विद्यातपोभिजनवीर्यधनाभिमानैः ।
अभ्येत्य विस्तृततमेऽत्र यथावकाशं
दीपाग्नितुल्यमहसो न्यविशन्त सन्तः ॥ २२ ॥

कान्त्या विभूषणगणैर्वसनैर्विहासै-
रालोकितैः सुवचनैरपि सत्सभा सा ।
बालातपाब्जकलहंसमृणालभृङ्ग-
माध्वीरसाभिवितता सरसीव रेजे ॥ २३ ॥

आक्रान्तिपीडनविलङ्घनधावनानि
मिथ्योक्तिभूतिपरिभर्त्सनगर्जितानि ।
सन्त्यज्य सा समितिरुत्सवसेवनार्थं
सन्नद्धधीः समभवत् तिमिताब्धितुल्या ॥ २४ ॥

सा चापि केरळनृपालसुता वधूभिः
स्नाता महार्हवसनाभरणानुलेपा ।
शुद्धान्तधाम्नि शुशुभे यदुराजवीर-
लक्ष्मीरिवाक्षिपथगा नृपतौ प्रसन्ना ॥ २५ ॥

तस्या नितम्बभुवि लोकततेस्ततायां
काञ्चीकलापविशदांशुकवेष्टितायाम् ।
दुग्धाब्धिफेनजटिला गुरुभोगिनद्धा
मन्थक्षमाधरतटीत्यजनि क्षणं धीः ॥ २६ ॥

सीमन्तभूषणवती कबरी सजातिः
सामन्तमौलिदुहितुः सुतरां चकाशे ।
नीरन्ध्रनिर्भरजला विलसद्बलाका
कादम्बिनीव कमनीयतटिद्गुणाङ्का ॥ २७ ॥

ताम्बूलरागविरहेऽपि तताधरश्रि
मुक्तात्तकुण्डलमुदंशुरदं बभासे ।
तस्या मुखं विकचकैरवमर्धलक्ष्य-
नक्षत्रमालमिव चारु शरन्निशायाः ॥ २८ ॥

काश्मीरपङ्कपरिदिग्धकुचान्तलग्न-
सूक्ष्मांशुकोपरिविलम्बिगळाग्रचभूषम् ।
वक्षस्तदीयमभवन्मदनाधिराज्य-
मूर्द्धाभिषेककलशस्थलसन्निकाशम् ॥ २९ ॥

सक्ताङ्गुलीयकटकाङ्गदकुङ्कुमाभ्यां
तस्या व्यजायि मृदुबाहुमृणालिकाभ्याम् ।
पीनस्तनाख्यकनकाद्रिशिरोविसर्पि-
जम्बूनदीद्वयरुचिः शिशिराङ्गयष्टेः ॥ ३० ॥

पादावलक्तकरसाक्ततलौ वराङ्ग्या
मञ्जीरशिञ्जितभृतौ मणिपादुकास्थौ ।
तद्द्रष्टृमारशरविद्धयानकूज-
च्चित्ताम्बुजन्मसरुचावचिराद्भूताम् ॥ ३१ ॥

पत्रक्रिया पट्टकपोलतले मृगाक्ष्याः
सख्यार्पिता सदसि मार्गमदद्रवेण ।
बभ्राज नूतनमृदुन्यनघे वयित्रा
वस्त्रे यथा सुविपुलार्थविशेषसङ्ख्या ॥ ३२ ॥

कस्तूरिकाविहितमेव न फालदेशे
तस्या विशेषकमभूद्वदनारविन्दे ।
आताम्रजिह्मविपुलायतयोस्तदानीं
नीलाञ्जनं नयनयोर्विनियोजितश्च ॥ ३३ ॥

स्कन्धावलम्बिधवलोल्लसदुत्तरीया
दन्तद्युतीरभिकिरन्त्यपि चाननाब्जे ।
रक्ताम्बुजाननरुचिः सुतरां बभौ सा
लक्ष्मीरिवामृतरसैरभिषिच्यमाना ॥ ३४ ॥

वर्णेन हेम सुरभित्वगुणाद् विलेपान्
भासा मणीन् मृदुतया वसनप्रसूनम् ।
सा मङ्गलार्थमखिलैः प्रवरैः स्वजाता
वेतैरलङ्कृततमापि तदातिशिश्ये(?) ॥ ३५ ॥

आदर्शबिम्बगतमम्बुजदृक् ततोऽसौ
वक्त्रं विडम्बितसमग्रनवेन्दुबिम्बम् ।
आलोक्य विस्मयवती निजमुग्धभाव-
माविःस्मिताप्रथयदुद्‌धुरमङ्गनानाम् ॥ ३६ ॥

आदर्शबिम्ब इव भूषितमाननाब्जं
स्वाङ्केऽमले सविधवस्त्वखिलं निरीक्ष्य ।
आत्मानमस्य जगतो जननीं ततोऽसौ
प्रत्यभ्यमंस्त कलया प्रकृतिं पुराणीम् ॥ ३७ ॥

यद्यस्ति मामकगुणानुगुणोऽत्र रङ्गे
मर्त्यः स एव परमः स पुमान् मतो नः ।
तस्याधुना तनुमुपायनयेयमेता-
मित्यात्तकौतुकभरा गमनाय चासीत् ॥ ३८ ॥

मात्रादराद्विहितमङ्गलसंविधाना
मान्याभिरप्यपरपौरनितम्बिनीभिः ।
सौधात् ततो नृपसुता धनतर्पिताना-
माशीश्शतैर्मुहुरवारुहदर्च्यमाना ॥ ३९ ॥

निश्श्रेणिपर्वसु पदक्रमणं क्रमात् सा
भव्यैर्वृता विदधती परिचारकौघैः ।
व्यभ्राजतामृतघटी नयनाभिपेया
मर्त्यैः सुरैरिव शनैरवतार्यमाणा ॥ ४० ॥

उत्क्षीर्यमाणजनतारवमथ्यमान-
रथ्याथ गोपुरमुखं सुमुखी समेत्य ।
अध्यारुहद्द्विरदकरेणुमनल्पभूषां
दिग्दन्तिराजदयितां मुदिता शचीव ॥ ४१ ॥

छत्रं सितं शतशलाकमनल्पशिल्पं
तस्याः बभावुपरि पार्श्वगचामराग्र्यम् ।
सव्यापसव्यगसुरासुरदेशिकेन्द्र-
श्चन्द्रो यथा शरदि संपरिमृष्टचिह्नः ॥ ४२ ॥

छत्रस्य तस्य वदनस्य च चन्द्रभास-
स्तस्याः परस्परमुपाकुरुतामतीव ।
छाये तते न तु परस्य परस्य कस्या-
प्याद्येतरस्य सकलस्य च नेत्रभाजः ॥ ४३ ॥

अश्वाननुद्धतगतीन् शिबिकाः करेणू-
रन्दोलिकाश्च शुभहाटकरत्नचित्राः ।
हृष्टाः समारुरुहुराशु ततः समन्ता-
दस्याः प्रसिद्धकुलजा भुवि पौरनार्यः ॥ ४४ ॥

दीपाङ्कुरप्रकरसङ्करदीप्ररूप्य-
स्थालीगता तदनु निर्मलतण्डुलालिः ।
अग्रे तता सरसचम्पकसंभृतश्री-
र्मालेव जातिकुसुमग्रथिता चकाशे ॥ ४५ ॥

पात्राणि हेमकलशीकरकोरुभङ्गि-
भृङ्गारचारुचपकप्रभृतीन्यथात्र ।
ऊर्ध्वं महाजनभुजाग्रधुतान्यभूवन्
वाताभिमृष्टकनकाञ्जवनोपमानि ॥ ४६ ॥

शिञ्जानमञ्जुवलयोद्धतबाहुवल्ली-
निर्व्यूढताळलयमाकुलकेशपाशाः ।
शृङ्गारबीजनिभधर्मजलैः कपोलै-
रुन्मीलितार्धरदमुज्जगुरुत्पलाक्ष्यः ॥ ४७ ॥

भावानुकूलवलिताननमानतभ्रू-
लीलातरङ्गितदृशो ननृतुस्तथान्याः ।
आगुल्फलम्बिविचलद्विकसद्दुकूलाः
पादावघट्टितभुवो लयसौष्ठवेषु ॥ ४८ ॥

उन्मुक्तशस्त्रभुजदण्डमुपात्तभूषा
मल्ला इव ग्रथितमाल्यमतल्लिकाभिः ।
सन्नाहिनः करणकौशलशालिनोऽन्ये
सिंहादिधावनविवल्गनमन्वकार्षुः ॥ ४९ ॥

कल्याणि कामकलिके कविकामधेनो
गान्धर्वकौशलनिधे वसते कलानाम् ।
सर्वेश्वरीत्यपिच वन्दिजनौघवक्त्रा-
दश्रूयताग्रभुवि वागवधेहिमिश्रा ॥ ५० ॥

प्रोंमादगाः कळगिरः समवाकिरंस्तां
लाजैः प्रसन्नलळितैर्नलिनोत्पलैश्च ।
हासश्रिया रुचिरनेत्ररुचापि तासा-
मेतत्त्रयं शतसहस्रगुणं बभूव ॥ ५१ ॥

वीणाः प्रवीणजनवादितवेणुनादै-
र्गीतानुवादरणिता वरवाणिनीनाम् ।
गम्भीरमञ्जुळकळाहतमद्दळौघ-
सन्नादिने पथि तिशुश्रुविरे समन्तात् ॥ ५२ ॥

अश्वश्रितां कळकळैरिह किङ्किणीनां
घण्टाझणाझणरवैरपि वारणानाम् ।
एषां मदोड्डमरहेषितबृंहितैश्च
सोऽभून्महेन्द्रमह एव नृणां विमर्दः ॥ ५३ ॥

शङ्खानकौघनियुतान्यथ मङ्गलानि
सांराविणं व्यधुरधः कृततोयदानि ।
सङ्घातशोऽत्र विसृतैस्तदपि व्यधायि
पुण्यैरुल्लुलुविरुतैः पुरसुन्दरीणाम् ॥ ५४ ॥

आस्फोटितानि ककुभां स्फुटितप्रदानि
प्रक्ष्वेलितैः सह विबभ्रुरभ्रमार्गे ।
सङ्घषधीरपरिघट्टितचर्मसङ्घ-
सङ्घोषसंक्षुभितसिन्धुमहाह्रदानि ॥ ५५ ॥

सालेषु गोपुरवरेषु महाद्रुमेषु
मञ्चेषु हर्म्यशिखरेषु महीतलेऽपि ।
आपूरितेष्वथ जनैरपि सूचिमात्र-
मासीन्न शैवलपुरे विवरं तदानीम् ॥ ५६ ॥

माणिक्यमौक्तिकहरिद्धरिनीलरत्न-
हेमच्छविच्छुरितमिन्द्रशरासशोचिः ।
व्योम क्षणादजनि चित्रितचीनपट्ट-
कालापचन्द्रककपोतगळानुकारि ॥ ५७ ॥

तापं निवार्य तरणेर्वियदावृणोच्च
रेणुस्तृतीयकरणं जडयन् जनानाम् ।
सम्यक् कुचानिव कचानपि मेचकाभान्
कुर्वन्निवोत्पलदृशां घुसृणोपलिप्तान् ॥ ५८ ॥

गच्छानुगच्छ जहि वाधविधिं जनानां
पाणिं न मुञ्च वितरान्तरमङ्ग गन्तुम् ।
इत्याद्यहंप्रथमिकानुगतं वचश्च
प्रत्यानशेऽत्र ककुभः पथि वीतरन्ध्रे ॥ ५९ ॥

सौदामिनी जलदगेव करेणुगा सा
संहर्षणी सकललोचनचातकानाम् ।
स्थित्वा मुहुः सुवदना विहृतिप्रसक्तै-
र्लोकैः प्रकामविततां प्रजगाम रथ्याम् ॥ ६० ॥

अथावरुह्य यादवी पदैव पादुकावती
जगाम रङ्गसम्मुखं गुणाधिकैर्वधूगणैः ।
अवाधितेन वर्त्मना महाजनेन विस्यता
घनाभरक्षिहुङ्कृतिप्रतोदवेत्रयष्टितः ॥ ६१ ॥

समाविशच्च सादरं नृपोत्तमा ततां सभां
प्रभाभरोरुनिर्झरप्रवाहमग्नदिङ्मुखा ।
चकार च प्रदक्षिणं परेव दीपमण्डली
विशालरङ्गमध्यगां प्रदीपमण्डलीं प्रति ॥ ६२ ॥

जगुः कळं मृगीदृशः श्रितश्रियो जितश्रमं
प्रवृद्धडिण्डिमक्वणत्प्रयुक्तहस्तताळिकाः ।
ननर्त नर्तकीजनः पदक्रमे धृतक्रमं
भुजद्वयावलयदङ्मुखक्रियैकमत्यकः ॥ ६३ ॥

तमस्विनीरजश्छटाभिरच्छलाजराजिभिः
सुभिक्षचन्दनद्रवैरतुच्छगन्धकुङ्कुमैः ।
परस्परं सभासदश्च विभ्रमान्वितभ्रुवो
लसद्भिरभ्यवाकिरन् विहस्य केलितत्पराः ॥ ६४ ॥

समृद्धयौवनोदयप्रगल्भपीनकर्कश-
स्तनद्वयेतरेतरप्रकल्पितोपगूहनाः ।
विदग्धमुद्रया पुनश्च(ल)दृढशः समापयन्
जगत्त्रयप्रहर्षणीममुत्र केलिमुद्यताम् ॥ ६५ ॥

**स्यादिति**। युष्मादृशैः देहव्यतिरिक्ततया कथ्यमानः **अंतः** मृतः पुरुषः **अन्यत्र** स्वस्मादन्यस्मिन् पुरुषे इष्टमभिमतं **ओदनतोयं** पुत्रादिना दीयमान- मोदनमन्नं तोयं पानीयं च **अश्नति** भुञ्जाने सति **मोदनतः** क्षुन्निवृत्त्या प्रीतियुक्तः **स्याद्यदि** तर्हि **इयं जनता** जनसमूहः **अथ** साकल्येन सर्वापीत्यर्थः। **अतः** एतस्मादपादानभूतात् प्रदेशात् **कुतः** कस्माद्धेतोः **पथि** मार्गे **पाथेयं** पथि साधु तण्डुलादिकं **नयति**। तत्र न कोऽपि हेतुः प्रयोजनाभावात्। क्षुन्निवृत्तिस्तु गृहावस्थितपुत्रादिना क्रियमाणान्यजनभोजनेनैव सेत्स्यतीति भावः। कीदृशी जनता ? **सभारतापा** भारेण पाथेयवहनेन हेतुना यस्तापः खेदः तेन सह वर्त्तमाना। प्रकारान्तरेणेष्टफलसिद्धावनिष्टफलदकर्म नानुष्ठेयमित्यर्थः ॥ २९ ॥

एवं वैदिकपक्षमाक्षिप्य पाषण्डपक्षस्यैवानुष्ठेय(त्व)मित्याह –

**तद् वचने शस्ये मे तिष्ठत धर्मा हिताय नेशस्येमे ।**
**प्राप्नुत भो गानसुरास्वादवधूश्लेषणादिभोगानसुराः ॥ ३० ॥**

**तदिति** । अत्र तदितिपदम्

“ एकस्यैवोभयार्थत्वे तन्त्रमित्यभिधीयते ।
तच्च काकाक्षिवत् क्वापि भित्तिदीपसमं क्वचित् ॥ ”

इति न्यायेनोभयत्र संबध्यते। (**भो**) हे **असुराः** यस्मात् श्रौतस्मार्तधर्माणामनुष्ठेयत्वं **तत्** तस्मा**दीशस्य** शिवस्य संबन्धिनः **इमे** वेदमूलपाशुपतादिशैवागमसिद्धा **धर्माः** त्रिपुण्ड्र- रुद्राक्षधारणपञ्चाक्षरीजपहोमतर्पणलिङ्गार्चनादीनि कर्माणि **हिताय** श्रेयसे **न**। भवन्तीति शेषः । यस्मादीशकर्मणामहितकरत्वं **तत्** तस्मात् यूयं **मे वचने तिष्ठत** हितबुद्धिं कुरुध्वम् । कीदृशे । **शस्ये** स्तुत्ये । उपपत्तिमत्त्वादबाध्ये न तु वैदिकपक्षवद् बाध्ये इत्यर्थः । तर्हि किं तद् वचनमित्याह - **प्राप्नुतेति** । यूयं **गानसुरास्वादवधूश्लेषणा-**

ईश्वरसद्भावे किञ्चित् प्रमाणं नास्ति । अस्ति चेद्वक्तव्यम् । तच्च वक्तुं न शक्यते । अभावादेव हेतोः । तस्मात् प्रमाणाभावे प्रमेयमप्यसदेव । तस्मान्महेश्वरसेवा न कर्तव्या । असतो महेश्वरस्य सेवा कर्तव्या चेत् शशशृङ्गेण किमपराद्धम् । तस्य सेवा च क्रियतामित्यभिप्रायः ॥ ३१ ॥

पूर्वत्र तात्पर्यवृत्त्या सिद्धं मानाभावं विवृणोति –

**न पतति तं प्रत्यक्षं बुध्यध्वमतो निराकृतं प्रत्यक्षम् ॥**
**तत्स्थितिमानवलम्बः प्रमाणराशेस्ततः क्व मानबलं वः ॥ ३२ ॥**

**न पततीति** । **तं** महेशं **प्रति अक्ष**मिन्द्रियं चक्षुरादि **न पतति** प्राप्नोति । ईश्वरो नीलपीतादिवदिन्द्रियाणां विषयो न भवतीत्यर्थः । **अत** एतस्मादक्षपाताभावाद्धेतोः **प्रत्यक्षं** प्रत्यक्षाख्यं प्रमाणं **निराकृतम्** ईश्वरसद्भावसाधकत्वे निरस्तं **बुध्यध्वं** जानीत । ननु मा भूत् प्रत्यक्षम् अनुमानादिरीश्वरसद्भावे प्रमाणमित्यत्राह – **तत्स्थितिमानिति**। **प्रमाणराशेः** अनुमानादिप्रमाणवर्गस्य **अवलम्बः** आश्रयस्वरूप इति यावत् । **तत्स्थितिमान्** तेन प्रत्यक्षेण हेतुना स्थितिमान् **प्रतिष्ठावान्** । भवतीति शेषः । अनुमानादीनां व्याप्तिग्रहणादिसापेक्षत्वात् प्रत्यक्षमन्तरेण स्वरूपलाभो न सिद्ध्यतीत्यर्थः । यद्वा तदिति पृथक्पदम् । तत् प्रत्यक्षं प्रमाणराशेः स्थितिमान् प्रतिष्ठावानवलम्बः । यत इत्थं **ततः** तस्माद्धेतोः **वः** युष्माकं **मानबलं** मानेन प्रमाणेन हेतुना यद् बलं प्रतिवादियुक्तिखण्डने सामर्थ्यं तत् **क्व** न क्वापीत्यर्थः ॥ ३२ ॥

नन्वीश्वरः प्रत्यक्षगोचरः इति को वा ब्रूते । यत्तावदुक्तं 'तत्स्थितिमानवलम्ब' इत्यादिना तदयुक्तम् । तथाहि – अनुमानादीनां व्याप्तिग्रहणादावेव प्रत्यक्षापेक्षा, न तु साध्येऽपि । तथात्वे प्रत्यक्षेणैवालं किमनुमानेन । तस्मादनुमानेन ईश्वरसद्भावे प्रमाणेनैव भाव्यमित्यत्राह –

**यदि धी माने नमति स्फुटं जगत्कर्तृकानुमानेन मतिः ।**
**जगतः कार्यत्वेन स्थिताः स्थ तदसिद्धितोऽधिकार्यत्वेन ॥ ३३ ॥**

**यदीति** । हे असुराः **वः** युष्माकं **मतिर्बुद्धिः जगतः** प्रपञ्चस्य **कार्यत्वेन** कृतिसाध्यत्वेन हेतुना **जगत्कर्तृकानुमानेन** जगतः कर्तृकः कर्त्ता । स्वार्थे कः । तस्यानुमानेन क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवत् इत्यादिरूपे(ण) । **माने** ईश्वरसत्तासाधके प्रमाणे **(स्फुटं) नमति** प्रह्वीभवति । ईश्वरसत्तासाधकत्वमभ्युपगच्छतीत्यर्थः । तर्हि यूयम् **अधिकार्यत्वेन** प्रतिवादियुक्तिखण्डनादत्यन्तमहनीयत्वेन **स्थिताः स्थ** भवथ । तत्र हेतुमाह – **तदसिद्धित** इति । तस्य कार्यत्वस्य हेतोरसिद्धितोऽसिद्धेः । यदि जगतः (कार्यत्वं) येन केनचित् प्रकारेण सिद्धं नहि युष्मत्पक्षः साधीयान् तत्तथा च न भवति । तस्मात् सिद्धत्वेन हेतोराभासत्वात् खण्डिता एव यूयमित्यर्थः । नित्यसिद्धस्य जगतः कथं कार्यत्वमिति भावः ॥ ३३ ॥

तर्हि माभूदनुमानपरं, ईश्वरसद्भावे श्रुतिः प्रमाणं भवतीत्यत्राह –

**या वागेकर्तारं ब्रवीति देवं युगे युगे कर्तारम् ।**
**सा हि समस्ता वितथा तया पुनर्देवता समस्तावि तथा ॥ ३४ ॥**

**या वागिति** । **या एका** युष्मत्पक्षेऽपौरुषेयत्वेन मुख्या **ऋता** सत्या **वाग्** वेदलक्षणा वाणी **युगे युगे** सर्गे सर्गे इति यावत् । **कर्तारं** जगत्स्रष्टारं **देवमीश्वरं (अरं) ब्रवीति** व्यक्तं भाषते **सा समस्ता** कृत्स्ना **वितथा** मिथ्यैव । तस्याः स्वार्थे न प्रामाण्यमित्यर्थः । तत्र हेतुमाह – **तयेति** । **पुनश्शब्दो** वाक्यालङ्कारे । **तया** वाचा **पुनः देवता** आस्तिकजनमनोरथमात्रसिद्धा, ईश्वरः । **तथा** तेन जगत्कर्तृकत्वादिना प्रकारेण **समस्तावि** अभिष्टुता । **हि** यस्मात् । यतो निखिलस्यापि वेदस्य स्तुतिपरत्वेन स्वार्थेऽप्रामाण्यमतः श्रुतिरीश्वरसद्भावे प्रमाणं न भवतीत्यर्थः ॥ ३४ ॥

एवं प्रमाणतया आभासमानान्यनुमानानि प्रत्येकं निराकृत्य 'समुदायेनेतराण्यपि निराकरोति —

**तस्मान्मानसमूहे युष्माभिर्यत्र यत्र मानसमूहे।**
**तत्तत् सत्त्वे नेष्टे महेशितुर्देहिनाल्पसत्त्वेनेष्टे ॥ ३५ ॥**

**तस्मादिति**। यस्मात् प्रमाणतया आभासमानानामनुमानादीनामपीश्वरसत्तासाधनायासामर्थ्यं **तस्माद्युष्माभिः मानसमूहे** प्रमाणकदम्बके । निर्धारणे सप्तमी। प्रत्यक्षानुमानागमार्थापत्त्युपमानाभावसंभवैतिह्येषु मध्ये इत्यर्थः । (**यत्र यत्र** यस्मिन् यस्मिन् **मानसं** मनः **ऊहे** ऊढं) **तत्तत्** प्रमाणं **महेशितुरी**श्वरस्य **सत्त्वे** सद्भावे **नेष्टे** न प्रगल्भते । अनुमानादीनामप्यसामर्थ्ये किमुतान्येषामिति भावः । तर्हीश्वरोऽस्तीति कुतस्त्योऽयं प्रवाद इत्याशङ्काव्युदासाय सत्त्वं विशिनष्टि-**देहिने**ति । **अल्पसत्त्वेन** अल्पबुद्धिबलेन **देहिना** पुरुषेण **इष्टे**ऽभिमते । 'राहोः शिरः' 'सालभञ्जिकायाः शरीर'मितिवद्देहिनेति प्रयोगः । अन्यथा देहव्यतिरिक्तात्माङ्गीकारः प्रसज्येत। देहिनां शुभाशुभकर्मफलप्रदाता कश्चिदीश्वरोऽस्ति इति तस्माद् भयं जनयित्वा प्रबलकृतपीडां निवारयितुकामैर्दुर्बलैरुद्घोषित एवायमीश्वरसद्भाव इत्यर्थः ॥ ३५॥

एवं निखिलप्रमाणाविषयत्वेन ईश्वरासत्त्वं द्रढीकृत्य पुनर्येनकेनचित् प्रकारेण ईश्वरसद्भावाङ्गीकारेऽपि तत्सेवा न कार्या इत्याह —

**अपिचाम्बरवासा यः श्मशानभूमिश्च यस्य वरवासाय।**
**यो नृशिरस्यत्त्यन्धः श्रेयस्तत्सेवको निरस्यत्यन्धः ॥ ३६ ॥**

**अपिचेति** । **अपिचे**त्ययं निपातसमुदायः समुच्चये । अत्र सत्त्वे इति पदमध्याहर्तव्यम् । सत्त्वेऽ**पिच** ईश्वरस्य सद्भावेऽपि न केवलमसत्त्वे । **तत्सेवकः** तस्येश्वरस्य सेवकः **अन्धः** कार्याकार्यज्ञानशून्यः **श्रेयः** अभ्युदयं **निरस्यति**

त्यजन्ति । तत्र हेतुतया ईश्वरं विशिनष्टि - **अम्बरवासा** इत्यादि । **यः ईश्वरः अम्बरवासाः** अम्बरमाकाशं वासो वस्त्रं यस्य स तथा नग्न इत्यर्थः । **यस्य वरवासाय** उत्कृष्टवासस्थानाय **श्मशानभूमिश्च** । योऽत्यन्ताशुचौ श्मशान एव वसतीत्यर्थः । **यो नृशिरसि** नृणां शिरसि । शिरः कपालः तत्र, **अन्धः** अन्नम् **अत्ति** भुङ्क्ते **च** । लोके हि नग्नत्वं श्मशानवासित्वं नृकपालधारित्वं चात्यन्तगर्ह्यास्पदमेव । तथाविधः परमेश्वर इति युष्मादृशा एव कथयन्ति । तस्मात् श्रेयोर्थिभिः युष्माभिस्तत्सेवा न कार्या इति भावः ॥ ३६ ॥

अथ हरिः प्रारब्धमर्थं यथामनीषितं घटितवानित्याह –

**इत्थममत्यध्वनिने व्यापारयतात्ममतमसत्यध्वनि ते ।**
**नाथेनास्थाप्यन्त श्रेयसि तेषां बभूव नास्थाप्यन्तः ३७ ॥**

**इत्थमिति । इत्थम्** अनेन प्रकारेण **आत्ममतं** आत्मनः स्वस्य मतं नास्तिकवादलक्षणं सिद्धान्तं **व्यापारयता** प्रवर्त्तयता असुराणाम(पवा?नुपा)देयबुद्धिं जनयतेति यावत् । **नाथेन** जगत्स्वामिना विष्णुना **तेऽसुराः असति** अश्रेयस्करत्वाद् दुष्टेऽ**ध्वनि** नास्तिकपक्षलक्षणे मार्गेऽ**स्थाप्यन्त** स्थापिताः । अध्वानं विशिनष्टि – **असत्यध्वनित** इति । असत्यं कल्पनारूपत्वान्मिथ्याभूतं ध्वनितमुक्तिर्यस्मिन् स तथा । एतदसत्त्वे हेतुः । **तेषामसुराणां श्रेयसि** धर्मेऽन्तर्मनसि **आस्था** (अभिनिवे)शोऽपि न बभूव । किंपुनः...... भावः ॥ ३७ ॥

तेषां न केवलं श्रेयस्यास्थाभाव एवासीद् अपि तु अश्रेयस्करं कर्म कृतवन्तश्च इति द्वा ...... भ्यामाह –

**ते द्रुतमक्षमयेषु स्फोटं वलयेषु कर्तुमक्षमयेषुः ।**
**बिभिदुर्भवनमनेकं प्रभोरतः कैर्व्यतानि भवनमनेकम् ॥ ३८ ॥**

**त** इति । **अतो** ......... द्धेतोः **ते** असुरा **अक्षमया** आस्तिकपक्षं प्रतीर्ष्यया हेतुना **द्रुतं** वेगेन **अक्षमयेषु** रुद्राक्षस्वरूपेषु **वलयेषु**...नवन्धेषु **स्फोटं** भेदनं **कर्तुम्** **ईषुः** इच्छां कृतवन्तः । **प्रभोः** शिवास्यानेकं बहु-स...... लयं **विभिदुः** क्षुण्ण ...... **रैः भवनमने** भवस्य शिवस्य नमने नमस्कारे विषये **कं** शिरः **व्यतानि** कृतम् न कैरपि ॥ ३८ ॥

सर्वेऽपि शिवनमस्कारपराङ्मुखा आसन्नित्या(ह) –

**निश्शङ्कं पादानां पातैः प्रतिमां प्रभोः सकम्पादानाम् ।**
**कर्तुं भवनेऽत्रेषुः श्रेयः क्व पराङ्मुखेषु भवनेत्रेषु ॥ ३९ ॥**

**निश्शङ्कमिति**। **अत्र** अस्मिन् स्वैर्भिन्ने **भवने** शिवालये **पादानां** चरणानां **पातैः** **प्रभोः** शिवस्य **प्रतिमां** प्रतिष्ठितं लिङ्गं **सकम्पादानां** कम्पश्चलनं तस्यादानं स्वीकारः तत्सहितां **कर्तुं** **निश्शङ्कं** निर्गता शङ्का भयं यथा तथा **ईषुः** इष्टवन्तः। शिवलिङ्गान्यप्युन्मूलयामासुरित्यर्थः । नन्वत्यन्तभक्तास्ते कथमेवं कृतवन्त इत्यत्राह – **श्रेय** इति। **भवनेत्रेषु** शिवदृष्टिषु **पराङ्मुखेषु** सत्सु **क्व** **श्रेयः** कुशलं, न क्वापि । दैवे प्रतिकूले सर्वेषामप्यकुशलमेवेत्यर्थः ॥ ३९ ॥

अथ देवाः नारदमुखेनासुरस्त्रियोऽसन्मार्गे ... रित्याह –

**नारदनामा ज्ञातः परमर्षिर्यः स नाकिनामाज्ञातः ।**
**तेषां शुद्धान्तरतः स्त्रीणां धर्मं निरास शुद्धान्तरतः ॥ ४० ॥**

**नारदेति**। **यः परमर्षिः** उत्कृष्टो मुनिः **नारदनामा** नारद इत्याख्यावान् **ज्ञातः** लोके ख्यातः। **स नाकिनां** देवानां **आज्ञातो** नि(देशात् **ते**)**षामसुराणां** **शुद्धान्तरतः** शुद्धान्तेऽन्तः पुरे रतः सन् **तेषां स्त्रीणां** भार्याणां **शुद्धान्तरतः** शुद्धं विहितधर्मानुष्ठानैकपरत्वान्निर्दोषं ... **धर्मं** पातिव्रत्यादिकं **निरास** निरस्तवान् । धर्मस्य कर्तव्यताबुद्धिं त्याजयामासेत्यर्थः ॥ ४० ॥

धर्मनिरासप्रकारं दर्शयति –

**अयि ललिता नार्यो हे भवतीभिर्धीश्चिरं वतानार्योहे ।**
**व्रजत निकाममनुनेन स्वेनैव पथा सुखाय का मनुते न ॥ ४१ ॥**

**अयी**ति । अयीति संबोधनद्योतको निपातः । **ललिताः** सुकुमार्यः **हे नार्यः** स्त्रियः **भवतीभिश्चिरं** बहुकालं **अनार्या** कुत्सिता **धीः** पातिव्रत्यादिको धर्मोऽनुष्ठेय इति बुद्धिः **ऊहे** ऊढा । **वते**ति सुकुमारीभिर्भवतीभिः सुख...तावान् कालः वृथा नीत इत्याश्चर्यमित्यर्थः । यद्वा खेदे वतशब्दः । अतिसुकुमारीणां व...भासे धर्मधिया एतावान्...इति मे महान् **खेदो जायते** इत्यर्थः । अलमतिक्रान्तानुशोचनेन इतः परं किं कर्तव्यमित्यत आह - **व्रजते**ति । **स्वेनैव** ...तः स्वकृतेन ननु श्रुतिस्मृतिविधिपरतन्त्रेण **पथा** मार्गेण **व्रजत** प्रवर्तध्वमित्यर्थः । पन्थानं विशिनष्टि – **निकाममनुनेने**ति । य... तेन युक्तिचिन्तायामिदमेव कर्तव्यमिति भावः । नचास्माकं सुखापेक्षा इति न वाच्यमित्य...ति **सुखाय** परमप्रयो...खं सर्वस्यापि तदर्थत्वात् तस्यानन्यार्थत्वाच्च तथाविधं सुखमनुभोक्तुं **का स्त्री न मनुते** कल्पयति । नेच्छतीति यावत् । न कापि । सर्वापि स्त्री सुखमभिलषत्येवेत्यर्थः । 'क्रियार्थोपपद-'(पा०सू० २-३-१४) इत्यादिना चतुर्थी । सुखानीति वा पाठः । सुखेच्छायाः स्त्रीपुंससाधारण्येऽपि स्त्रियो विशिष्य सुखाभिलाषिण्यो भवन्तीति द्योतयितुं स्त्रीलिङ्गतया निर्देशः । यथाहुः – "सुखाभिलाषी स्त्रीभाव" इति ॥ ४१ ॥

ननु दानपातिव्रत्यादिलक्षणको धर्मोऽनुष्ठेय इति हि कथ्यते । तत्कथं ...नैवमुच्यते इत्याशङ्क्य एषा नाभियुक्तोक्तिरित्याह –

**दानं परमाहारं दरिद्रलोको विचिन्त्य परमाहारम् ।**
**या सरसा बालपतिः स्त्री पातिव्रत्यमप्यसावालपति ॥ ४२ ॥**

**दानमि**ति । **दरिद्रलोकः** दरिद्राणां निःस्वानां लोकः समूहः **परमाहारं** उत्कृष्टमशनं **विचिन्त्य** निरूप्य (**दानं**) अन्नहिरण्यादिवितरणम् **अरम्** अत्यर्थं **परं** श्रेयस्साधनेषूत्कृष्टं

आह व्यक्तं भाषते । दरिद्रा एव स्वेषामशनार्थं दानस्य धर्मरूपतां उद्घोषयन्ति न तु तत्त्व-विद इत्यर्थः । **या** स्त्री **बालपतिः** युवभर्तृका, **सरसा** स्वपतौ रसेन रागेण सह वर्तमाना च, **असौ पातिव्रत्यमपि परम् आलपति**। परमित्यनुषज्यते । स्वभर्तर्येव प्रणयवती स्त्री स्त्रीणां पातिव्रत्यमेव परो धर्म इति ब्रूत इत्यर्थः । तस्मात् स्वार्थपरत्वेन दरिद्रादिवचनस्य न प्रामाण्यमिति भावः ॥ ४२ ॥

एवं पातिव्रत्यादीनामकर्तव्यतामुपपाद्य कर्तव्यमर्थमुपदिशति —

**तन्मा गच्छत मोहं श्रद्धेयोऽस्म्यद्य सम्यगच्छतमोऽहम् ।**
**प्राणसमा जारा वः सेव्या निन्द्योऽर्थिनां समाजारावः ॥ ४३ ॥**

**तदिति** । यस्मात् पातिव्रत्यादीनामननुष्ठेयत्वं **तत्** तस्माद्, **अद्य** इदानीम् इतः परस्मिन् कालेऽपि, **मोहं** अकर्तव्ये कर्तव्यबुद्धिलक्षणं भ्रमं, **मा गच्छत** प्राप्नुत। मा इत्ययं निरनुबन्धको निपातः। सानुबन्धकत्वे 'माङि लुङ्' (पा०सू० ३-३-१७५) इति लुङा भवितव्यम् । तर्हि किमस्माभिः कर्तव्यं तदुपदिश्यतामित्यत्राह-**प्राणसमा** इति। **प्राणसमा** अत्यन्तवल्लभाः, **जारा** उपपतयः, **वः** युष्माकं, **सेव्या** उपभोग्याः, न तु स्वभर्तारः । पातिव्रत्यादिधर्माणां कर्तव्यत्वं न कतिपये कथयन्ति अपि तु बहव एव , ते सर्वेऽपि किं निराकरणीया इत्यत्राह - **निन्द्य** इति। **अर्थिनां** स्वभर्तृभोगात्ता(ति?दि)काङ्क्षिणां जनानां, यः **समाजः** समूहः तस्य **आरावः** 'स्त्रीणां पातिव्रत्यमेव धर्मः' 'दानमेव परो धर्मः' इत्यादिरूपः शब्दो, **निन्द्यः** गर्ह्यः । अनुपादेय इति यावत् । ननु तवापि रागादिदूषितत्वं चेत् कथं विश्वास्यत्वमित्यत्राह - **श्रद्धेय** इति । **अहं सम्यक्** सुष्ठु, **अच्छतमः** अतिशयेनाच्छः । शुद्धान्तःकरण इत्यर्थः । अत एव **श्रद्धेयः** विश्वास्यः, **अस्मि** । न मदुक्तौ किञ्चिदप्रामाण्यमाशङ्कनीयमित्यर्थः ॥ ४३ ॥

अथासुरस्त्रियो नारदवचनादसन्मार्गस्थिता अभूवन्नित्याह —

**इति बहुधा वाचारं परमर्षेर्यः परं दधावाचारम् ।**
**गतमहिमाशुचिकायः स्त्रीलोकः पापमधिकमाशु चिकाय ॥ ४४ ॥**

इतीति। सः **स्त्रीलोकः** असुरस्त्रीजनः, **परमर्षेः** नारदस्य, **इति** उक्तप्रकारेण **बहुधा** अनेकप्रकारेणावस्थितया, **वाचा आशु** कालविलम्बनं विना, **अधिकं** बहु, **पापं** परपुरुष-संसर्गादिलक्षणं निषिद्धाचरणं, **चिकाय** सञ्चितवान्। अकरोदित्यर्थः। स्त्रीलोकं विशिनष्टि — **य** इति। **यः स्त्रीलोकः**, नारदवचनात् पूर्वं **परं** श्रुतिस्मृतिमूलत्वाद् उत्कृष्टम्, **आचारं** पातिव्रत्यादिलक्षणम् **अरम्** अत्यर्थं, **दधौ**। दैवे प्रतिकूले किं नामासंभावनीयमिति भावः। नारदवचनात् परम् **अशुचिकायः** अशुचिः परपुरुष-संसर्गादशुद्धः कायो देहो ऽस्य स तथा। अत एव **गतमहिमा** अपगत-माहात्म्यः ॥ ४४ ॥

अथ द्वाभ्यां श्लोकाभ्यां पापाचरणं विवृणोति —

**त्यक्तसुहृत् स्थविरोऽधःकृतः स्नुषाभिर्निगूढहृत्स्थविरोधः।**
**उज्झितवानाश्वश्रूःकारी श्वशुरः शुचोऽश्नुवाना श्वश्रूः ॥ ४५ ॥**

**त्यक्ते**ति। **श्वशुरः** भर्तुः पिता, **आशु** नारदवचनश्रवणसमनन्तरमेव, **अश्रु** नयनजलम्, **उज्झितवान्** मुक्तवान्, दुःखितोऽभूदित्यर्थः। कीदृशः। **ऊःकारी** ऊःकारवान्। अयमपि दुःखानुभावः। "ऊर्दुःखभावने कोपे" इति **भट्टः**। तत्र हेतुः — **स्नुषाभिः** पुत्रभार्याभिः अत्यर्थं प्रार्थिताभिः, **अधःकृतः**। धिक्कृत इति यावत्। तत्र हेतुः — **स्थविरः** वृद्ध इति। **त्यक्तसुहृत्** त्यक्ताः सुहृदः स्नुषादिरतिर्न कर्तव्या स्वदाररतिरेव कर्तव्या इत्यादि हितमुपदिशन्तो जनाः येन स तथा। भवितव्यताक्रान्ते मनसि शतकृत्वो-ऽभिहितमपि हितवचनं नावगाहत इति भावः। **निगूढहृत्स्थविरोधः** निगूढः स्नुषाणामविधेयत्वात् स्वस्य तत्प्रतीकारासामर्थ्याच्च आच्छादितो हृत्स्थः हृदयस्थो विरोधः द्वेषः येन स तथा। अपिशब्दोऽध्याहर्तव्यः। **श्वश्रूरपि** भर्तृमातापि, **शुचः** दुःखस्य **अश्नुवाना** प्राप्नुवती। अभूदिति शेषः। अत्रापि रत्यर्थं प्रार्थितैः पुत्रैः स्थविरेयमित्यधःकृतेति हेतुरतिदेष्टव्यः। शब्दतस्त्यक्तसुहृत्त्वं चार्थतो निगूढ-

हृत्स्थविरोधत्वं च ऊःकारित्वं च श्वश्र्वा अपि विशेषणं भवति ।

'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ।'

इत्यमरः ॥ ४५ ॥

**युगमवजानानं दम्पत्योर्वृत्तीर्जहौ निजा नानन्दम् ।**
**तद् व्यचरज्जारहितं परदारहितश्च वीक्ष्य लज्जारहितम् ॥ ४६ ॥**

**युगमिति । दम्पत्योः** जायापत्योः, **युगं** युगलं, **निजा** आत्मीया, **वृत्तीः** स्वपत्येकनिष्ठत्वस्वभार्यैकनिष्ठत्वादिलक्षणानाचारान्, **जहौ** त्यक्तवत् । **आनन्दं न** जहौ । स्वैराचारजनितं सुखमङ्गीकृतवदित्यर्थः । कीदृशम् । **अवजानानं** भार्या भर्तॄन् प्रति भर्तारो भार्याः प्रति परस्परमवज्ञां कुर्वाणम् । यस्मान्निजवृत्तेर्हानं स्वैराचारात् सुखस्योपादानं चाङ्गीकृतं **तत्** तस्मात्, **जारहितं** जारेभ्यो हितमिष्टं वस्तु, **परदारहितं च** परदारेभ्यो हितं च, **वीक्ष्य** विचिन्त्य, **लज्जारहितं** लज्जाकार्यकरणादुत्पन्नया ह्रिया रहितं शून्यं यथा भवति तथा **व्यचरत्** आचरति स्म । स्त्रियो जारहितं **वीक्ष्य** व्यचरन् । पुरुषाः परदारहितं च वीक्ष्य व्यचरन्नित्यर्थः ॥ ४६ ॥

असुराणामधर्मव्यापारमुपसंहरति —

**इति हरिनारदमततः स जनौघो धर्मवर्त्म नार दमततः ।**
**चण्डालोपमचेष्टः स्थाणोरपि च प्रसादलोपमचेष्ट ॥ ४७ ॥**

इतीति । **स जनौघः** असुरलोकः, **हरिनारदमततः** हरिनारदयोर्मतात् सिद्धान्ताद्धेतोः हरिमतात् असुरजनः नारदमतात् तत्स्त्रीजनश्च **इति** उक्तप्रकारेण, **धर्मवर्त्म** धर्मः श्रुतिस्मृतिचोदितं कर्म तत्प्रधानं वर्त्म मार्गं, **न आर न** प्राप्तवान् । अधर्म एव प्रावर्तिष्टेत्यर्थः । कीदृशः । **दमततः** दम इन्द्रियजयः तेन ततः व्याप्तः । दमोपलक्षितेन सदाचारेण व्याप्त इत्यर्थः । भूतकालविशेषणमेतत् । 'दम इन्द्रियनिग्रहे । दण्डे गृहे च' इति **केशवः । चण्डालोपमचेष्टः** चण्डालः श्वपचः

तदुपमा तत्सदृशी चेष्टा प्रवृत्तिर्यस्य स तथा। तत्कालविशेषणमेतत्। पूर्वं सदाचारपरः (त इ)दानीं दुराचारपरो जातः। अहो विचित्रा दैवगतिरिति भावः। अत एव **स्थाणोः** शिवस्य, **प्रसादलोपं** प्रीतिविनाशम् **अचेष्ट** अकरोदपि च। 'चिञ् चयने' इति धातोः लुङ्। असुराणां दुराचारपरत्वदर्शनात् शिवोऽपि रुष्टोऽभूदित्यर्थः॥ ४७॥

अथ देवानां प्रवृत्तिमाह—

**अथ विजयाशां भव्या दधतो देवा दिदृक्षया शाम्भव्या।**
**तस्थुस्तापस्यां ते धुरि गिरिभर्तुर्गुरुप्रतापस्यान्ते॥ ४८॥**

**अथे**ति। **अथ** सुराणामसन्मार्गस्थापनानन्तरं, **ते** त्रिपुरपराजिता **देवाः**, **शाम्भव्या** शम्भुसंबन्धिन्या, **दिदृक्षया** द्रष्टुमिच्छया हेतुना, **गिरिभर्तुः** पर्वतश्रेष्ठस्य हिमवतो**ऽन्ते**ऽवसाने। अधित्यकायामित्यर्थः। **तापस्यां** तपस्सम्बन्धिन्यां, **धुरि** व्यापारे, **तस्थुः** स्थितवन्तः। किं फलमुद्दिश्य तपश्चक्रुरित्याशङ्कां परिजिहीर्षुः देवान् विशिनष्टि—**विजयाशा**मिति। विजयेऽसुराभिभवे आशामिच्छां **दधतः** बिभ्राणाः। तथा **भव्याः** कल्याणगुणशालिनः। एषामभिलषितसिद्धिर्भविष्यत्येवेति भावः।

"**भव्यः** पुनर्ना पादपान्तरे।
कमरङ्गाह्वये क्ली तु फले तस्य धने तथा।
कल्याणाख्यगुणे च स्याद् मेघलिङ्गं च तद्वति॥
योग्ये भवितरि प्राप्ये भवितव्ये तु तन्नपि।"

इति **केशवः**। गिरिभर्तारं विशिनष्टि—**गुरुप्रतापस्ये**ति। गुरुर्महान् प्रतापो वैशिष्ट्यं यस्य स तथा। अत्राचेतने पर्वते दूरादेवारीणां भयजनकत्वलक्षणस्य प्रतापस्यासंभवाद् मुख्यार्थबाधे विशिष्टताविशेषेण प्रतापेन विशिष्टतासामान्यं लक्ष्यते। सामान्यविशेषभावः सम्बन्धः। कार्यकारित्वनैयत्यप्रतीतिः प्रयोजनम्। वैशिष्ट्यं चास्य क्षेत्रान्तरेभ्यः पावनत्वाद्यतिशयात्। एतच्च देवानां तत्रावस्थाने हेतुः॥ ४८॥

तपश्चर्यां विवृणोति—

**अकृत जपञ्चाक्षरतः त्रिदशसमूहोऽर्चनञ्च पञ्चाक्षरतः ।**
**अतनुत मनुविद्धोमं तेन ततोऽस्तावि दैवमनुविद्धोमम् ॥ ४९ ॥**

**अकृते**ति । **त्रिदशसमूहो** देवजनः, **पञ्चाक्षरतः** पञ्चाक्षरमन्त्रस्य, **जपं चाकृत,** चकारेणानुक्तं तर्पणमपि । कीदृशः । **मनुवित्** मनुर्मन्त्रः मन्त्र-मन्त्रार्थर्षिच्छन्दोदेवताविनियोगज्ञ इत्यर्थः । **अक्षरतः** अक्षेषु रुद्राक्षेषु रतः । रुद्राक्षमालया कॢप्तजपसङ्ख्य इत्यर्थः । पञ्चाक्षरतः पञ्चाक्षरमन्त्रेण **अर्चनं** पूजाम् । चकारोऽकृतेत्य-नुकर्षणार्थः । पञ्चाक्षरतो **होम**मग्निकार्यं **चातनुत** कृतवान् । पञ्चाक्षरत इत्यत्र जपविषये षष्ठ्यन्तात्तसिः । अन्यत्र तृतीयान्तात् । **ततो** जपार्चनाद्यनन्तरम् । **तेन** त्रिदशसमूहेन । **अनुविद्धोमं** अनुविद्धा संबद्धा उमा पार्वती यस्य तत् तथाविधं **दैवं** श्रीपरमेश्वरः **अस्तावि** ॥ ४९ ॥

अथ नवभिः श्लोकैः स्तुतिप्रकारमाह—

**शुभकर्मा ना नियतः प्राप्नोति फलानि काम्यमानानि यतः ।**
**लोके वेदे वा यः स्तुतो नमस्तेऽस्तु शम्भवे देवाय ॥ ५० ॥**

**शुभकर्मे**ति । अत्र नास्तिकपक्षावलम्बिना हरिणा य आस्तिकपक्षाक्षेपः कृतः तं समादधद्भिर्देवैः स्तुतिः क्रियते इत्यवगन्तव्यम् । तत्रानेन 'यदि-हैवायात्यन्तमि' त्यारभ्य 'युष्मदीयमक्षेपतती' त्यन्तेन 'क्रियते यत्तावदथे' त्यारभ्य 'कुतोऽतस्सभारतापाथेयमि' त्यन्तेन च ग्रन्थेन यदाक्षिप्तं तत्परिहरन्तः स्तुवन्ति— तस्मै **शंभवे ते** तुभ्यं **नमः** नमस्क्रिया**स्तु** भवतु । कीदृशाय । **देवाय** दीव्यति द्योतते अहमस्मीति सर्वप्राणिनामप्यन्तः स्फुरतीति देवः । सर्वेषामप्यन्तरहमिति प्रकाश-मानस्य किं प्रमाणान्तरान्वेषणमिति भावः । 'यदिहैवायात्यन्तमि' त्यादिना च 'क्रियते यत्तावदथेत्यादिना' च यदाक्षिप्तं तत्परिहर्तुं शम्भुं विशिंषन्ति - **यतो** यस्मात् शम्भोः, **शुभकर्मा** चोदितकर्मानुष्ठाता, **ना** पुरुषः, **नियतः** फलभोगे व्यभिचाररहितस्सन्,

**काम्यमानानि** अभिलष्यमाणानि, **फलानि** देशान्तरकालान्तरदेहान्तरभोग्यानि स्वर्गादीनि, **प्राप्नोति** लभते। 'का पुनरङ्गात्र मितिरि'त्यादिना यदाक्षिप्तं तत्परिहर्तुं शम्भुं विशिंषन्तिलोक इति। यश्शुभकर्मा ना **लोके**

'तावत् प्रमोदते स्वर्गे यावत् पुण्यं समाप्यते।'

इत्यादिवचनैः **वेदे वा** त्रय्यां च, **स्तुतः** प्रतिपादितः। पुरुषस्य देहान्तरग्रहणे फलभोक्तृत्वे चागमः प्रमाणमिति भावः। लोके वेदे वा यः स्तुत इत्यनेनावृत्त्या शम्भुरपि विशेषणीयः। अत्रेश्वरसत्तायामागमः प्रमाणमिति भावः। 'फलमपि न भवेदिष्टमि'त्यादिना 'स्याद्यदि मोदनतोऽय'मित्यादिना च यदाक्षिप्तं तदप्यनेनैव समाहितम्। अग्निष्टोमादेः श्राद्धादेश्च श्रुतिस्मृतिचोदितत्वात्॥ ५०॥

'श्राव्या मदवध्येय'मित्यादिना यदाक्षिप्तं तत्परिहरन्तः स्तुवन्ति—

**अद्वैतं परममलं चिन्मयमानन्दमच्युतं परममलम्।**
**सकलेशं सत्यमृतं वचनं त्वामप्रमेय शंसत्यमृतम्॥ ५१॥**

अद्वैतमिति। **अप्रमेय!** निखिलप्रमाणाविषय! **ऋतं** वेदलक्षणं, **वचनं त्वामलम्** अत्यर्थं, **शंसति** तात्पर्येण प्रतिपादयति। कीदृशं शंसतीत्याशङ्कायां विशिंषन्ति—**अद्वैतमिति**। **अद्वैतं** द्वयोर्भावो द्विता द्वितै(व)द्वैतं तद्रहितम्। सजातीयविजातीयस्वगतभेदशून्यमित्यर्थः। ननु जीवानां पृथक्सत्त्वे कथमद्वैतत्वं इत्यत्राहुः—**सकलेशमिति**। सकलस्य भूतेन्द्रियान्तःकरणात्मकस्य विश्वस्येशं प्रवर्तयितारम्। ईश्वर एव चराचरेषु देहेषु (तिष्ठति। उक्तं च) श्रीभगवता—

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥"

इति। नन्वेवं चेद् जन्मविनाशवत्त्वादीश्वरस्य विकारित्वप्रसङ्ग इत्यत्राहुः—

**अमृत**मिति । मृतं मरणम् । 'नपुंसके भावे क्तः' (पा० सू० ३-३-११४) इति क्तः । जन्मोपलक्षणमेतत् । जन्मविनाशरहितमित्यर्थः । जन्मविनाशौ तु देहस्यैवेति भावः । तथोक्तं भागवते—

"नात्मा जजान न मरिष्यति नैधतेऽसौ
न क्षीयते सवनविद्व्यभिचारिणां हि ।
सर्वत्र शश्वदनपाय्युपलब्धिमात्रं
प्राणो यथेन्द्रियबलेन विकल्पितं सत् ।"

इति ।

'विसर्गाद्याः श्मशानान्ता भावा देहस्य नात्मनः' ।

इति च । नन्वीश्वरस्य जीवात्मना स्थितत्वे स्वगतभेदसंभवान्नाद्वैतसिद्धिरित्यत्राहुः-**पर**मिति । **परं** सर्वोपरिष्टात् स्थितं मायातत्कार्याणामप्युपरि वर्तमानम् । अत एवा**मलम्** । मलशब्देन मायाभिधीयते । तदुक्तं वासिष्ठे—

"क्वचिन्मलमिति प्रोक्तं क्वचिन्मायेति कल्पितम् ।"

इति । मायासंबन्धरहितमित्यर्थः । अत एवा**च्युतं** अवयवविनाशात्मकक्षयरहितम् । अथास्य सात्त्विकं रूपमाहुः—**सत्यं** परमार्थभूतं सद्रूपमित्यर्थः । **आनन्दं** सुखस्वरूपं, **चिन्मयं** बोधस्वरूपम्, अत एव **परमं** सर्वोत्कृष्टम् । सर्वस्यापि मूलकारणत्वादीश्वरस्य प्रमाणगम्यत्वे प्रमेयत्वेन यज्जडत्वं प्रसज्येत तत्परिजिहीर्षुभिर्देवैः 'अतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि' इत्याद्यभियुक्तोक्तनीत्या वेदोऽप्यतन्निरसनेनैव ईश्वरं प्रतिपादयतीति द्योतयितुमप्रमेयेति सम्बोधनमित्यवगन्तव्यम् । अनेन देहव्यतिरिक्त एवात्मा स एव परमेश्वरः । श्रुतिरत्र प्रमाणमित्युक्तं भवति ॥ ५१ ॥

अथ 'तद्वचने शस्ये मे तिष्ठत धर्मा हिताय नेशस्येऽमे ।' इति यदुक्तं तन्निरस्यन्तः स्तुवन्ति—

**येऽखिलयोनिं दन्तित्वग्वसन ! भवन्तमपधियो निन्दन्ति ।**
**उत्तारानन्वेते निरये निपतन्ति हर ! नरा नन्वेते ॥ ५२ ॥**

य इति। हे **दन्तित्वग्वसन**! दन्ती गजः तस्य त्वक् चर्म वसनं वासो यस्य तस्य सम्बोधनम्, तथा। हे हर! हरश्रीनामशालिन्। भक्तानां पापं हरतीति हरः। अत्र सम्बोधनद्वयेन गजासुरं निहत्य तच्चर्मवासिनस्तस्य जगत्कण्टकोद्धारणपरत्वं च भक्तानां नः दुरवस्थामूलं पापं संहरणीयमिति च ध्वन्यते। **ये नराः** चार्वाकादयः, **भवन्तं निन्दन्ति** 'धर्मा हिताय नेशस्येमे' इत्यादिना दुष्यन्ति **एते निरये** नरके, **निपतन्ति**। **ननु**रवधारणे। निपतन्त्येवेत्यर्थः। नरान् विशिंषन्ति — **अपधिय** इति। बुद्धिशून्याः। तेषां बुद्धिशून्यत्वमेव भवन्निन्दाया हेतुः। बुद्धिमन्तस्तु न निन्दन्तीति भावः। भगवन्तं विशिंषन्ति — **अखिलयोनि**मिति। अखिलस्य योनिं कारणम्। अतो वन्दनीयत्वमेव न निन्दनीयत्वमित्यर्थः। निरयं विशिंषन्ति - **उत्तारानन्वेत** इति। उत्तार उत्तरणं तेनानन्वेते (स?र)हिते। भवन्निन्दकाः कदाचिदपि नरकान्नोत्तरिष्यन्तीत्यर्थः॥ ५२॥

'न पतति तं प्रत्यक्षम्'इत्यादिना यत्प्रत्यक्षाविषयत्वमुक्तं तन्निरस्यन्तः स्तुवन्ति -

**अनितरसादृश्यत्वं दधतोऽस्य हि भवति तेऽञ्जसा दृश्यत्वम्।**
**शान्तो यो योग्यास्ते ये तु न पश्यन्ति हतधियोऽयोग्यास्ते॥ ५३॥**

**अनितरे**ति। **यः**पुरुषः, **शान्तः** विषयेभ्य उपरतमनाः, अत एव **योगी** योगश्चित्तवृत्तिनिरोधः तद्वान्, **आस्ते** तिष्ठति। **अस्य** पुरुषस्य, **ते** तव, **अञ्जसा** तिरोधानमन्तरेण **दृश्यत्वं** दर्शनयोग्यत्वं, **भवति**। **हि**शब्दः प्रसिद्धौ। द्विविधं हि प्रत्यक्षम्। योगिप्रत्यक्षमयोगिप्रत्यक्षं च। तत्रेश्वरो योगिप्रत्यक्षगम्य इत्यर्थः। योगिनोऽपि किमिति चक्षुर्भ्यां न पश्यन्तीत्याशङ्कायां ते इति षष्ठ्यन्तनिर्दिष्टम् ईश्वरं विशिंषन्ति - **अनितरे**ति। स्वव्यतिरिक्ता इतरेऽस्मदादयो देहिनः तैस्सादृश्यमितरसादृश्यम् अविद्यमानमितरसादृश्यं यस्यास्मदादिवद्देहग्रहणायोगात् तस्य भावोऽनितरसादृश्यत्वं तद्**दधतः** बिभ्राणस्य। चिन्मात्रविग्रहः कथं चक्षुर्भ्यां गृह्यत इति भावः। तर्ह्ययोगिनः किमिति न पश्यन्तीत्यत्राहुः—**ये त्वि**ति। **तु**रवधारणे भिन्नक्रमश्च। **ये** ज(नताः?नाः)**न पश्यन्ति**। त्वामिति शेषः। **ते अयोग्यास्तु** अनर्हा एव। तत्र हेतुः **हतधिय** इति। नष्टबुद्धयः।

निश्च्योतन्निर्झराम्भश्शिशिरतरतटीनित्यनृत्यन्मयूर-
स्वेच्छोद्यच्छत्कलापावलिशबलरुचिव्यक्तवृत्रारिचापः।
शुभ्राश्लिष्टसानुः शुचिपटरुचिरैः शारदैर्वारिवाहै-[1]
रुत्तुङ्गैरेष शृङ्गैरपिहितगगनो दृश्यतामृश्यमूकः॥ १५॥

लक्ष्मणः — (सकौतुकम्) आर्य! पश्य पश्य —

पशव्यानामस्मिन्नतिघनवनालीनिचुलिते
तृणानामश्नन्तः परिलघु पिबन्तश्च सलिलम्।
प्रभावान्निश्शङ्कं विदधति मतङ्गस्य तपसो
विमर्दं शार्दूलीनखकुलिशधारासु पशवः॥ १६॥

रामः — (मनः संस्तभ्य) वत्स! किमत्राश्चर्यम्। पश्य —

रागद्वेषविपाकदर्पसुखिनो दुःखितमुख्यान्यपि
द्वन्द्वानि स्वयमान्तराणि वशितानिघ्ना[2] विनिघ्नन्ति ये।
तेषामस्तरजस्तमस्कमनसामस्तोकसत्त्वश्रियां
धीराणामिह बाह्यसत्त्वकलहप्रध्वंसने कः श्रमः॥ १७॥

सुग्रीवः — देव! एकमपि वस्तु विषयभेदाद् भिन्नफलमिवोपलभ्यते[3]। तथा हि—

क्षिप्तस्तेन पुरा मतङ्गमुनिना मत्पूर्वजं बालिनं
यो दुःखाकृत माल्यवत्क्षितिभृतो दुर्लङ्घतापाततः।
सोऽयं प्रत्युत मामनुग्रहपदे तिष्ठन् प्रतिष्ठार्पणा-
दस्मिन्नेव सुखाकरोच्चिरतरं शापोऽपि लाभोत्तरः॥ १८॥

---

१. शारदाभ्रैरदभ्रैरु. ग.
२. निघ्नानि निघ्नन्ति. घ.
३. ते। क्षिप्तस्तेन. ख. ग. घ. ङ.

लक्ष्मणः[1] — सखे सुग्रीव ! किं कारणमनेन मतङ्गमुनिना तथा प्रशप्तः

सुग्रीवः — नन्वमुना देवेन तदा पादाङ्गुष्ठेन यः परिवर्तितो[2] दुन्दुभेः
कङ्कालकूटः स एव प्रथममस्य शापस्य कारणमासीत् ।

रामः — कुमार ! किं विस्मृतमिदं यत् पम्पामुल्लङ्घ्य माल्यवत्प्रस्थे
चरन्तावावां प्रति भिक्षुवेषेण हनूमता निवेदितोऽयमपि प्रस्तावः ।

लक्ष्मणः — आं[3] एवमेतत् । स्मृतमिदानीं किन्तु सुग्रीवपक्षपातिनि
दये वालिविषयो वृत्तान्तः शिथिलमेव मे लग्न आसीत् ।

रामः — वत्स ! किमुच्यते सुग्रीवपक्षपात इति, यदायत्तेन हि मया —

कक्षोपारुद्धरक्षोधिपभुजपटलीदुर्गतो निर्गताया
येन स्वस्मिन् द्विबाहावपि वसति मुदः पूरिता वीरलक्ष्म्याः ।
सोऽपि त्रैलोक्यहेलाविजयपटुमहाविक्रमः शक्रसूनु-
र्नीतो धिग् छद्मवृत्त्या निधनमधरितस्फारवीरव्रतेन ॥ १९ ॥

लक्ष्मणः — आर्य ! नैष दोषः । कुतः —

छद्मना न किमरण्यगोचरान् वागुरादिषु निपातितान् मृगान् ।
मारयन्ति मृगयासु धन्विनो येषु यो विधिरदोष एव सः ॥ २० ॥

सुग्रीवः — सत्यमाह कुमारः ।

शस्त्राशस्त्रिप्रथनकथनेऽप्यप्रगल्भाः प्रकृत्या
कृत्याकृत्यद्वितयभिदया कष्टमस्पृष्टचित्ताः ।
एते केचिद् वयमपि मृगाः किन्तु शाखामृगाख्याः
कोऽन्यो हिंसाविधिरनुपधिस्तावदेतादृशां नः ॥ २१ ॥

---

१. णः-किं कारणमनेन मुनिना. ग.
२. तः स दुन्दुभेः कङ्कालकूट एव.
३. आर्य. घ.

(नैपथ्ये)

सुग्रीवपक्षपातं वालिक्षपणं च निष्फलीकुर्वन्।
वामो राम! विधिस्ते वज्रानलदुस्सहोऽभ्येति ॥ २२ ॥

(सर्वे श्रुत्वा विषादं रूपयन्ति।) (ततः प्रविशति मायावसुः।)

मायावसुः — (सशोकम्) हा आचार्य!

मृत्युं मर्त्यशरादपि स्म लभते मायामृगीभूय यः
सोऽपि श्लाघ्यतमो भवानधिगतः स्वार्थो यतः स्वामिना।
प्रारम्भे घटिताः फले विघटिता यस्य प्रयत्ना इमे
तस्यैतस्य निरर्थकं मम परं मायावसोर्जीवितम् ॥ २३ ॥

(सावष्टम्भम्) अयमारिप्सितस्तु प्रयत्नो[1] न तथा भविष्यति।

रामलक्ष्मणसुग्रीवान् कर्तुमत्र स्थितानिमान्।
स्वयमेवोज्झितप्राणान् करिष्याम्येष[2] साम्प्रतम् ॥ २४ ॥

यावज्जानकीवार्ताहरो[3] न हनूमानागमिष्यति[4] तावच्चारणवेषमवलम्ब्य प्रस्तुतं प्रयोक्ष्ये[5] (इति तथा कृत्वोपसर्पति।)

सुग्रीवः — अये! अयं कोऽपि दिव्यः स्वस्तलादितोऽवतरति।

(सर्वे उत्तिष्ठन्ति। मायावसुः सुग्रीवपक्षपातमिति पूर्वोक्तमेव पठति।)

रामः — (सविषादं) भो महाभाग! अत्रोपविश्य ब्रूहि किमेतदिति।

मायावसुः — (उपविश्य) ननु भवन्तोऽप्युपविशन्तु। सर्वं कथयिष्यामि वज्रहृदयः[6]। (सर्वे उपविशन्ति।)

---

१. त्नः फलिष्यत्येव. ख. ग. घ. ङ.
२. व. घ.
३. रो हनू. ग. ङ.
४. नागमिष्य. ख. ग. घ. ङ.
५. इति कृत्वैव लङ्कानगरात् सत्वरमागतोऽस्मि। (इति चारणवेषो भूत्वोपसर्पति।) ख. ग. घ. ङ.
६. वज्रमयः. क.

सुग्रीवः — महाभाग ! त्वरितमाचक्ष्व, पर्याकुला वयम् ।

मायावसुः — अहं[1] तावद्वज्राङ्कुरो नाम चारणो भगवता पुत्रविपत्तिमाकर्ण्य दीर्णहृदयेनेव विमुक्तकण्ठमाक्रन्दता संक्रन्दनेन समादिष्टोऽस्मि।

सुग्रीवः — किमिति ।

मायावसुः — भद्र वज्राङ्कुर !

अस्मद्द्रोहिनिशाचरक्षपणतः क्षेमंकरो नश्चिरं
रामः काममिदन्तु[2] कर्म नितरां निर्माति मर्मव्यथाम् ।
दाराणां हरणादरिः स्फुटमनेनापेक्षितो रावण-
स्तं जित्वात्मसुहृद् भवन्नपि हतो वालीति कोऽयं क्रमः[3] ॥ २५ ॥

तन्नियतमाधुनिकैः[4] कैश्चन कूटसुहृद्भिः प्रतारितेन प्रकृतिसरलचेतसा तेनेदमाचरितं स्यात् । भवत्वधीमनसुहृदं महाराजदशरथमपेक्ष्यैतदस्य साहसं[5] सहिष्यामहे । किञ्च —

पितृव्यपरिलालितो विहितयौवराज्यच्छलात्
पितृव्ययशुचं जहद्वसति मे स नप्ताङ्गदः ।
न वेद नवधीरसौ निभृतवैरमेषां मनो
मनागपि पितृद्रुहां दहनगर्भभस्मोपमम् ॥ २६ ॥

सुग्रीवः — (स्वगतम्) ह ह ह ! दारुणोऽयं मर्मणि प्रहारः ।

लक्ष्मणः — (स्वगतम्) नियतमेष कश्चिन्मायावी प्रलपति । कथन्नाम तादृग्गम्भीरस्तत्रभवान् अखिलकर्मसाक्षी भगवान्महेन्द्रः ईदृशमतिप्रलघुकं[6] वचनमभिधत्ताम् । भवतु सर्वमग्रे स्फुटीभविष्यति । (प्रकाशम्) ततस्ततः ।

१. सुः श्रूयताम् अहं. ख. ग. घ. ङ.
२. न्तु नाम नितरां. घ.
३. मः । नियत.
४. तरळ. ग.
५. सहामहे. ग.
६. दृगति. ग.

मायावसुः — तद्गत्वा कुमारमङ्गदमविलम्बितमस्मत्सन्निधिमुपानय[1] । अत्र हि—

गाङ्गे गाङ्गेयपद्मच्युतमधुमधुरे स्वैरपेयेऽपि तोये
स्वेच्छाभोग्येऽपि कल्पद्रुमफल[2]निकरे निष्फलं दुष्प्रभूणाम् ।
अल्पग्रामाधिपत्यादवनिपरिवृढम्मन्यमन्योन्यक्लिष्टि-[3]
क्लिष्टश्रीकं किमर्थं कुलमनुवलते बालिशो बालिसूनुः ॥ २७ ॥

इति ।

सुग्रीवः — (लक्ष्मणं प्रति जनान्तिकम्) कुमार ! भगवता पुरन्दरेण नितरामुपालब्धाः स्मः ।

लक्ष्मणः — (जनान्तिकम्) नैतदुपपद्यते । पश्य —

परस्त्रीपुत्रस्य स्थितिमनुजदाराभिगमनात्[4]
सतां भिन्दानस्य क्षितिपकुलदम्यस्य दमनात् ।
स्वयं धर्माध्वन्यः स खलु भगवानध्वरभुजा-
मधीशः शक्रोऽपि व्यथत इति सम्भावयति कः ॥ २८ ॥

भवतु सर्वथा श्रोष्यामस्तावत्[5] ।

सुग्रीवः — भद्र वज्राङ्गद ! ततस्ततः ।

मायावसुः — ततोऽहं तथेत्यभिधाय किष्किन्धामनुप्राप्य कुमारमङ्गदं विचिन्वानस्तत्रभवत्या तारयाभिहितोऽस्मि ।

वञ्चितां दशमुखेन विचेतुं वल्लभां रघुपतेः किल सीताम् ।
नन्दनो मम पितृव्यनिदेशाद्[6]दक्षिणां दिशमगात् कपिसैन्यैः ॥ २९ ॥

---

१. दमस्मत्सन्निधि. ग.
२. मतल.
३. न्यमानोऽन्यक्लिष्टि. ग.
४. हरणात् ख. घ.
५. त् । (प्रकाशम्) भद्र ! ततस्ततः. क.
६. नियोगाद्दक्षिणां. ग.

इति[1]। तदीरितोऽहं दक्षिणां दिशं गच्छन् मध्येमार्गं स्वयम्प्रभाख्यया कयापि दिव्यगुहासीनया दिव्ययोगिन्या कथितोऽस्मि ।

सुग्रीवः — किमिति ।

मायावसुः —

अत्रागतो हनुमदादिभिरन्वितोऽसौ
नत्वा हरेरथ मया शमिताध्वखेदः ।
मद्दर्शितेन च[2] पथा जलधेरवाच-
स्तीरं गतः परमतस्तु परोक्षमेव ॥ ३० ॥

इति । ततो दक्षिणाम्बुधितीरं प्राप्तेन च मया दृष्टः पृष्टवार्तश्च युवराजो मामेवमवादीत् —

सम्पातिर्नाम योऽसौ रविकरनिकरैर्विक्षताः पक्षपालीः
श्रीमद्रामायणस्य श्रवणमनु पुनर्लब्धवान् गृध्रराजः ।
उत्तीर्णार्णोधिमुच्चैर्जवपवनपरिक्षिप्तमैनाकशैलं
लङ्कां प्राप्तं स पश्चादगमदुपकृतिं व्यञ्जयन्नाञ्जनेयम् ॥३१॥

स खलु पक्षिराजो हनुमन्तं सीतादेवीञ्च पृष्ठे वहन्नद्य श्वो वा समागमिष्यतीति

सुग्रीवः — (सहर्षं) देव ! दिष्ट्या वर्धसे ।

तिस्रो दिशः प्रतिगतेषु कपिप्रवीरे-[3]
ष्वभ्यागतेष्वनवलोक्य विदेहकन्याम् ।
अस्माकमेकमनुषज्जति यं किलाशा
सोऽयं समेष्यति कृतार्थतया हनूमान् ॥ ३२ ॥

---

१. इत्युदीरितोऽहं. क.
२. चं तीरं. क.
३. हरिप्र. ख. ग. घ. ङ

रामः — सखे! नायमाश्वासकालः। यदत्याहितस्य[1] तावदुपरि प्रतिपादयिष्यमाणस्य पूर्वकथाशरीरमेतदुपवर्ण्यते ।

सुग्रीवः — उपपन्नमिदम् । वत्साङ्गद! ततस्ततः ।

मायावसुः — ततश्च,

तत्राङ्गदादिषु बलेषु वलीमुखानां
प्रत्यागमं हनुमतः प्रतिपालयत्सु ।
सम्पातिराव्रतदरातिपुरादजस्र-
सम्पातिनेत्रजलपूरितवारिराशिः ॥ ३३ ॥

सर्वे — (सविषादं) नियतं तत्र केनचिदत्याहितेन भवितव्यम् । ततस्ततः ।

मायावसुः — (स्वगतम्) किमत्र कालक्षेपेण ।

तदेव दुस्सहं किञ्चिदाख्यास्याम्यनृतं वचः ।
यदेव श्रुतमात्रेण त्रीनिमान् मूर्च्छयिष्यति ॥ ३४ ॥

(प्रकाशं सबाष्पगद्गदम्) कथमतः परं निवेदयिष्यति वज्रहृदयो वत्साङ्गदः । तथापि सम्पातिना कथितं किलेदं निवेद्यते । स तत्रभवान् सम्पातिरतिचिरं रुदितमाङ्गदादिभिर्निर्बध्यमानः सास्रमिदमवादीत्[2] ।

पश्यत्येवाञ्जनेये कनकमणिमयप्राभृतद्रव्यहारी
सीतां प्रीतां विधातुं बहुतरमकरोत् सान्त्वनं पङ्क्तिकण्ठः ।
कुर्वन् पादप्रणामं मुहुरपि स यदा तत्प्रसादं न लेभे
रोषाक्रान्तस्तदैनामकरुणमसिना हा ततः किं ब्रवीमि ॥ ३५ ॥

---

१. स्य प्रतिपादयिष्यमाणस्य. क.
२. स्नमवादीत्. ख. ग. घ. ङ.

(सर्वे मूर्च्छिताः पतन्ति।)

मायावसुः — (सहर्षं स्वगतम्) हन्त फलितप्रायो मे मनोरथः (प्रकाशम्) भो रामभद्र! समाश्वसिहि समाश्वसिहि। सौमित्रे! समाश्वसिहि। प्लवगपते! समाश्वसिहि।

रामः — (किञ्चिदाश्वस्य) हा देवि देवयजनसंभवे! हा मदनुगमनैकतानतापास्तसमस्तबान्धवे! हा महारण्यवासप्रियसखि! क्व गतासि! देहि मे प्रतिवचनम् (इति मूर्च्छति।)

लक्ष्मणः — (आश्वस्य)[1] आर्य! समाश्वसिहि समाश्वसिहि। सखे सुग्रीव! समाश्वस्य समाश्वासयात्यन्तमापन्नमार्यम्।

सुग्रीवः — (आश्वस्य) हा देवि विश्वम्भरासंभवे!

छायाप्युज्झति मूर्च्छितान्धतमसं नीरन्ध्रवीरुद्द्रुम-
व्रातापास्तगभस्तिमालिकिरणं कान्तारमाप्तं जनम्।
देवि! त्वं तु कदापि तादृशमपि त्यक्तुं न जानासि यत्
प्रेयांसं तदहो सतीव्रतमिदं तीव्रं तवैव[2] ध्रुवम्॥ ३६॥

देव! समाश्वसिहि समाश्वसिहि।

रामः — (आश्वस्य) अयि प्रेयसि!

क्लान्तौ यौ मणिकुट्टिमेऽपि वलने[3] पादौ तवादौ मया
तावेवोत्कटकण्टकाश्मनि वने पापेन विन्यासितौ।
तेनैवालमतृप्यता विसलतामृद्वी तवेयं तनुः
प्रक्षिप्ता शिखिनीव पुष्पकलिका रक्षोसिधारामुखे॥ ३७॥

(इति मुह्यति।)

१. स्य) समा. घ.
२. 'तदेव' ख.
३. खलने. ग. ङ.

लक्ष्मणः — भोः कष्टम् ।

श्रवणकटु यदुक्तं देवि! मारीचमाया-
हरिणहरणलोभप्रापितापत्प्रवृत्तौ ।
तदपि विदिततत्त्वस्याशु मे जीर्णमन्त-
र्भृशमयमभितापः कुत्र जीर्येन्ममार्ये! ॥ ३८ ॥

मायावसुः — (स्वगतम्) अस्मद्द्रोहिणस्तवायमभितापः शरीरेण सह तरसा जीर्यतीति सौमित्रे! विदाङ्कुरु ।

सुग्रीवः — भद्र वज्राङ्गद! तदवस्थान्तरमवलोकयता हनूमता किमनुष्ठितम् ।

मायावसुः — तदेवानुष्ठितं किल महावीरेण ।

सुग्रीवः — किन्तदेवेति ।

मायावसुः — यदात्मयशसोऽनुरूपम् ।

सुग्रीवः — व्यक्तमभिधेहि ।

मायावसुः —

उद्यानानि विमर्दयन् मणिगृहद्वास्तोरणान् दारयन्
भञ्जन् कुञ्जशतानि कुञ्जरबलान् निघ्नन् निशाचारिणः ।
क्रुध्यन्निद्ध[1]मदोद्धतः स हनुमानित्थं प्रवृद्धे[2] रणे
वीरेणेन्द्रजिता कृतः कृतधिया सद्यः कृतान्तातिथिः ॥ ३९ ॥

सुग्रीवः — हा हतोऽस्मि । अथवा —

---

१. महोद्ध. ख.

२. वृत्ते. ख. ग. ङ. वृत्तो. घ.

प्रभञ्जनेनोपहितोऽञ्जनायां प्रभावतोऽधःकृतसर्वदैवतः ।
अनागतातीतसमस्तवस्तुविद्विनाशमायातु कथं स मारुतिः ॥ ४० ॥

कुमार ! नैतदुपपद्यते ।

लक्ष्मणः — भो वज्राङ्गद ! अङ्गदादिभिः पुनरिदमाकर्ण्य किं प्रतिपन्नम् ।

मायावसुः —

प्रायोपवेशनेन प्राणानजहुर्महानुभावास्ते ।
स्वजनविनाशे को वा जीवितुमीष्टे भवन्त इव ॥ ४१ ॥

(प्रविश्यापटाक्षेपेण संभ्रान्तो दधिमुखः)

वत्स भागिनेय सुग्रीव !

दृष्ट्वा सीतां प्रहृष्टो रजनिचरपुरं भस्मसात्कृत्य सद्य-
स्तीर्त्वा वारान्निधानं सकलकपिबलैः संगतः सोऽङ्गदाद्यैः ।
सम्प्राप्तोऽसौ हनूमांस्तव तु मधुवनं निर्दयं मर्दयन्ति
प्रौढाहङ्कारभाजो ह ह ह जनमिमं त्वज्जनास्तर्जयन्ति ॥ ४२ ॥

मायावसुः — (सखेदमात्मगतम्) हा कष्टमग्निसाद्भूता किल सा महाराजनगरी ।

अमरावति ! साम्प्रतं त्वमुच्चैरलके ! त्वं च विवृद्धिमश्नुवाथे ।
अतिवेलममंस्त या तृणं वां कपिना सा किल दह्यते[1] स्म लङ्का ॥४३॥

(विमृश्य) मया तु तदानीमेवेदमुत्प्रेक्षितं यदा किलाविमृश्यकारिभिर्नक्तञ्चरैरस्य हनुमतो लाङ्गूलमादीपयितुं प्रक्रान्तम् ।

रामः — (सहर्षमुत्थाय)

---

१. ल हन्यते स्म. घ.

क्वासौ भासामधीशाधिगतवितनव्याकुदम्भोनिधानः
क्वासावुत्कण्ठितान्तःपुरविरहशिखिप्रावृषेण्याम्बुवाहः ।
क्वासावस्माकमन्तर्निविडतम[1]तमोमण्डलीचण्डभानुः
क्वासावासन्नदासो मम विजितपुरस्त्रोपरुद्रो हनूमान् ॥ ४४ ॥

दधिमुखः — (प्रणम्य) अयमयमागच्छति जाम्बवदङ्गदनीलगवयगवाक्षप्रमुखवलीमुखबलपरिवारो मारुतिर्वैदेह्या प्रतिप्रेषितं प्रत्यभिज्ञानचूडामणिं प्राभृतीकृत्य भवन्तं प्रणन्तुकामः ।

मायावसुः—(सोद्वेगं स्वगतम्) कष्टमिहापि निष्फलो मे प्रयत्नः । तत्सत्वर-[2]मितः प्र[3]द्रवामि (इति तिरोभूय निष्क्रान्तः ।)

सुग्रीवः — कुमार !

तिरोभूतो भीतो धृतकपटदिव्याकृतिरसौ
दुरात्मा येनामी वयमधिकमाधिं प्रगमिताः ।

लक्ष्मणः —

असौ मन्ये मायावसुरसुहृदाराधनपरः
पुरा मद्बाणेन प्रधनभुवि नीतो विघसताम् ॥ ४५ ॥

सुग्रीवः — भवतु प्रत्यासन्नो हि सर्वरक्षोविक्षोदमहोत्सवः, तावदवधि जीवतु तपस्वी मायावसुः ।

रामः — सखे सुग्रीव !

आयान्तमेन[4]मनपायभुजावलेप-
प्रध्वंसिताशरपुरश्रियमाञ्जनेयम् ।

---

१. 'तर' ग.
२. रमतः ख.
३. मि (निष्क्रान्तः।) क.
४. मभिजातभुजापदान. ख. ग. घ. ङ.

सम्प्राप्य साम्प्रतमितः कतिचित्पदानि
सम्भावयाम समयोचितमाचराम ॥ ४६ ॥

(इति निष्क्रान्तास्सर्वे ।)

पञ्चमोऽङ्कः ।

---

## अथ षष्ठोऽङ्कः ।

(नैपथ्ये)

स्वागतमागन्तुकायाः ।

(ततः प्रविशति वनदेवता ।)

**वनदेवता** — (सविस्मयमग्रतोऽवलोक्य)[1]

उत्तप्तस्वर्णभित्तिस्फुटघटितमहेन्द्राश्मनो[2] वेश्मपङ्क्ते-
रुद्योतैः पीतनीलैः स्थिरचपलघनभ्रान्तिमभ्रे दिशन्ती ।
संक्रीडत्किङ्किणीकध्वजपटपटलीवातधूतोडुसङ्घा
लङ्का मे काममक्ष्णोरियममरपुरप्रेक्षणे विक्षिणोति ॥ १ ॥

(पुनर्नैपथ्ये)

स्वागतमागन्तुकायाः । (वनदेवता अनाकर्णितकेन)

स्वर्वन्दीमुखचन्द्रकान्तिकलितक्रीडाचकोराङ्गना-
व्यामोहेषु गृहेषु चन्द्रमणयस्तद्बाष्पतोयाप्लुताः ।
दृश्यन्ते मणिवेदिकासु नितरां निष्यन्दमाना इव
व्यक्तं वक्ति भुजाविजृम्भितमियं लङ्कैव लङ्कापतेः ॥ २ ॥

---

१. सस्मितमग्र. ग.　　२. श्मना. ख.

(नैपथ्ये)

स्वागतमागन्तुकायाः ।

वनदेवता—(आकर्ण्य[1])अये को नु खल्वयमदृश्यमूर्तिर्मां प्रति समुदाचरति ।

(नैपथ्ये)

इयमहं लङ्कापुराधिदेवता निर्दग्धलङ्कापुरेण तत्रभवता हनुमता निशिचरेन्द्र-निकेतनान्निर्वासितापि सम्प्रति रामभद्रमाश्रितवतः कुमारविभीषणस्योदय-माशासाना तिरस्कृतमूर्ति[2]श्चिरपरिचितामिमां पुरीमुज्झितुमक्षमत्वाच्च निभृतमिहैव पर्यटामि । लङ्कालक्ष्मीरिति च[3] जना मां व्याहरन्ति ।

वनदेवता— (सकौतुकम्) सखि लङ्कालक्ष्मि ! विस्रब्धं प्रकाशयात्मानम् । सगन्धा खलु तवाहं वनदेवता ।

(प्रविश्य)

लङ्कालक्ष्मीः — किन्नामधेयामत्रभवतीमवगच्छामि ।

वनदेवता — भद्रे ! मन्दारवत्यस्मि ।

लङ्कालक्ष्मीः — सखि मन्दारवति ! कुतस्तावदागम्यते किंप्रयोजनो वा तव लङ्काद्वीपप्रवेशः[4] ।

वनदेवता — सखि ! सर्वमावेदयिष्यामि । किन्त्विदमेव प्रथममव-गन्तुमिच्छामि । इयं हि राक्षसराजधानी—

तुङ्गप्रासादशृङ्गस्खलितजलधरोत्सङ्गनिस्सङ्गनिर्य-
द्धारावारां प्रवाहैरविरतमनदीमातृकारामभूमिः ।
लङ्कालङ्कार एको मणिकनकमयो मध्यमाया जगत्या
दग्धा दग्धेति केन स्फुटमुपघटितः कोऽपि मिथ्याप्रवादः ॥ ३ ॥

लङ्कालक्ष्मीः — सखि ! नायं मिथ्याप्रवादः । कुतः —

---

१. र्ण्य. को वा नु खल्वदृश्य. ग.
२. श्चिरंपरि. ग.
३. च जानीहि मां व्याहरन्तीम्. ग.
४. ङ्कापुरप्रवेशः. ख.

निर्दग्धानि गृहाणि यानि हरिणा भग्नाश्च ये पादपा
ये वा कृत्रिमपर्वता विगलिता वाप्यश्च याः पूरिताः ।
सर्वं पूर्वमिवेन तद्दशमुखो वन्द्यारुभिः कारुभिः
सद्यः कारयति स्म किं पुनरसौ दुस्साधमुत्साहिभिः ॥ ४ ॥

वनदेवता — अहो सर्वातिशायिनी खलु शक्तिसामग्री दशग्रीवस्य ।
'अथवा किमद्भुतमद्भुतपराक्रमधुरन्धरे दशकन्धरे । कुतः—'

यद्बाणावलिरोहणद्रुमजुपस्तम्ताः समस्ताहित-
प्राणाविष्कृतसंसरत्पक्षपातात् कृपाणोरगान् ।
मन्त्रज्ञा अपि मण्डलस्थितिनिषिद्धाऽप्यक्षामरक्षाभृतो-
ऽप्यन्तस्संप्रसृतानि विजृम्भितानि भिषजाश्चक्रुर्न शक्रादयः ॥ ५ ॥

लङ्कालक्ष्मीः — सखि ! कियच्चिरमधमर्णतामात्मनो नापहरतयसि ।

वनदेवता — अयि ! का ममाधमर्णता ।

लङ्कालक्ष्मीः — ननु पूर्वप्रश्नस्य मह्यमुत्तरं धारयसि ।

वनदेवता — (सस्मितम्) सखि ! तर्हि श्रूयताम् । अहं खलु भगवत्या भगवतः प्रथमचुलुकाचान्तचतुस्समुद्रस्य विन्ध्याचलशिखरव्यथथुशोषणभिषजः कुम्भसम्भवस्य मुनेः सहधर्मचारिण्या निजतनयनिर्विशेषोपलालितरामभद्रया लोपामुद्रया जनस्थाननिवासेषु जनकजायाः प्रियसखीति विस्रम्भादिद-मभिहितास्मि ।

लङ्कालक्ष्मीः — किमिति ।

वनदेवता — भद्रे मन्दारवति !

सख्यास्ते जनकाधिराजदुहितुस्तत्तादृशं वैशसं
शृण्वत्या मम दीर्णसन्धि हृदयं नाद्यापि संरोहति ।
वत्सो मे रघुनन्दनः प्रियसुतो धर्मेण सा च स्नुषा
विश्लेषादनयोर्मिथः कथमहं खिन्दे न मन्देतरम् ॥ ६ ॥

तदिदञ्च विदाङ्कुरु —

कुवलयदामभ्रान्त्या कालव्यालीव मानुषीबुद्ध्या ।
आत्मविनाशाय ध्रुवमब्धिसुता रावणेन हृता ॥ ७ ॥

लङ्कालक्ष्मीः — सत्यमाह त्रैकाल्यवेदिनी तत्रभवती लोपामुद्रा । ततस्ततः ।

वनदेवता — तदिदानीं प्रोषितभर्तृकाया वत्सायाः —

कियत् कार्श्यं धत्ते प्रकृतिसुकुमारा तनुलता
कियद्दीर्घास्तप्ताधरकिसलयाः श्वासपवनाः ।
दिवा किंव्यापारा निशि च किमवस्था पुनरसा-
विति ज्ञातव्यं नो भवति भवती तत्र घटताम् ॥ ८ ॥

लङ्कालक्ष्मीः — अहो सर्वसाधारणबुद्धेरपि मुनिपत्न्याः तस्यामसाधारणो वात्सल्यातिशयः । ततस्ततः ।

वनदेवता — तत् त्वमितो गगनाध्वना लङ्काद्वीपमधिगम्य तत्रस्थाया वत्साया वैदेह्या वार्तामवगम्यागच्छ । किञ्च, अत्रिमुनेर्गृहिण्यानसूयया वत्सायै पातिव्रत्यस्य[1] दार्ढ्योपपत्तये तपस्तेजसा निर्मितं दिव्यं यत्किञ्चिद्वस्त्वनुप्रेपितं[2] तदिदमपि तस्यै प्रतिपादयेति ।

लङ्कालक्ष्मीः — (सकौतुकम्) सखि मन्दारवति ! तत्किन्नाम ।

वनदेवता — (पटान्तादुद्धृत्य दर्शयित्वा) सखि लङ्कालक्ष्मि ! अयं हि—

अत्रेरुदारतपसस्तपसो विवर्तः
कोऽप्येष मङ्गलमहानिधिरङ्गरागः ।
संवर्धयत्यति हि यः कुलपालिकाना-
मन्तर्बहिश्च दृढतीव्रसतीव्रतेन ॥ ९ ॥

---

१ त्वदार्ढ्योपपत्तये. ग. ङ  २ नुप्रहितम्. । ख. ग. ङ.

लङ्कालक्ष्मीः — साध्विदानीमिदमीदृगवस्थायाः सीतायाः ।

वनदेवता — तद् भद्रे! कुत्र प्रतिवसति तत्रभवती वैदेही ।

लङ्कालक्ष्मीः — सखि ! इतस्तावत् ।

(उभे परिक्रामतः । )

लङ्कालक्ष्मीः — (अङ्गुल्या निर्दिश्य)

शोकाग्निग्नामशोकद्रुमविपिनतले शिंशपावृक्षमूले
पश्यैनां भूपरागैरिव भृशमरुणैराचितां भूपरागैः ।
कामं न स्नाति किन्तु स्नपयति गलितैरश्रुभिर्गात्रमुष्णैः
प्राचीमूले कलेव स्वयममृतरुचेः कार्श्यमेषा बिभर्ति ॥ १० ॥

वनदेवता — (दृष्ट्वा सकरुणास्रम्[1]) हा कथमेवमवस्था मे प्रियसखी वैदेही ।
अथवा –

मत्वा तृणाय गृहबन्धुसखीकदम्बं
दुस्सञ्चरे वनपथेऽपि यमन्वयासीत् ।
प्राणादपि प्रियहितेन हि तेन साध्वी
पत्या विना श्वसिति यत्तदिदं गरीयः ॥ ११ ॥

सखि ! के इमे सौम्यदर्शने स्त्रियौ जानकीमन्वासाते ।

लङ्कालक्ष्मीः — (अङ्गुल्या निर्दिश्य) एषा खलु कुमारविभीषणस्य धात्री त्रिजटा नाम अन्या पुनरस्य गृहिणी सरमा नाम ।

आनर्तितभ्रुकुटिभीषणभाषणानां
मध्येऽपि काममुषिता रजनीचरीणाम् ।
नातीव भीतिमुपयात्यनयोर्वचोभि-
राश्वासिता सुमधुरैर्जनकेन्द्रपुत्री ॥ १२ ॥

---

1. रुणम्. ख. ग. क.

॥ श्री ॥

# होराभिप्रायनिर्णयः ।

**मूर्तित्वे परिकल्पितः शशिभृतो[1] वर्त्मापुनर्जन्मना-**
**मात्मेत्यात्मविदां क्रतुश्च यजतां भर्ता परं ज्योतिषाम्[2] ।**
**लोकानां प्रलयोदयस्थितिविभुश्चानेकधा यः श्रुतौ**
**वाचं नः स दधातु नैककिरणस्त्रैलोक्यदीपो रविः ॥ १ ॥**

अर्केन्द्वारज्ञवागीशशुक्रमन्दतमोद्विजान् ।
प्रणम्य क्रियते स्पष्टो होराभिप्रायनिर्णयः ॥

**मूर्तित्वे** इति । **रविः नो वाचं दधात्विति** वाक्यार्थः । रावयतीति रविः । **मूर्त्तित्वे** शरीरत्वे **परिकल्पितः** परितः कल्पितः, सर्वैः कल्पितः, परीक्ष्य वा कल्पितः प्रामाणिकैः । **शशिभृतः** महेश्वरस्य । ज्ञानस्वरूपत्वमस्यैवेत्यर्थः । **वर्त्म** मार्गः । **अपुनर्जन्मनां** विनष्ट-बन्धकर्मणां संप्राप्तसम्यग्ज्ञानानाम् अन्तरालवर्तिनां मोक्षमिच्छतामित्यर्थः । **आत्मेत्यात्म-विदाम्** । अनेककालसाङ्गाभ्यस्तयोगविमृदितकषायाणां कपिलपतञ्जलिप्रभृतीनां पक्षे अयमेव आत्मा "सूर्य आत्मे"त्यादिश्रुत्यर्थोऽभिहितः । **क्रतुश्च यजताम्** याज्ञिकानाम् उद्देश्योपादानाद्यनेककारकसमुदायात्मकक्रतुरपि रविरेव "अग्नौ प्रास्ताहुतिः" इत्यादि श्रुत्यर्थोऽभिप्रेतः । **भर्ता परं ज्योतिषाम्** केवलम् चन्द्रादीनाम् । जलमये चन्द्रे प्रतिफलिताः सूर्यरश्मय एव चन्द्रत्वेन तमः क्षपयन्ति । उक्तवांश्च –

"सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् ।
क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः" ॥

इति । "सुषुम्न" इत्यादिश्रुतिः स्वीकृता । **लोकानां प्रलयोदयस्थितिविभुः** **लोकानां** भूम्यन्तरिक्षस्वर्गाणां नाशोत्पत्तिस्थितिहेतुः । चशब्देन नित्यन्नित्यमपि नाशोत्पत्ति-

१. शशभृतः,     २. अमरज्योतिषाम् इति इतरव्याख्यानुसारी पाठः.

स्थितिप्रसुरिति। अस्तमाश्रिते अकर्मण्यो मृतकल्पो भवति जीवलोक इति, उदिते कर्मण्यश्च, मध्याह्ने स्थितिरित्यादि द्रष्टव्यम्। **अनेकधा यः श्रुतौ** परिकल्पित इति "इन्द्रं मित्र"मित्यादिश्रुत्यर्थ उररीकृतः। **नैककिरणः** तेजोराशिः। **त्रैलोक्यदीपो** जगन्मङ्गलमुक्तः। एवंभूतो रविः नो मादृशां वागुत्पत्तिं वाक्पुष्टिं च दधातु करोत्वित्यर्थः।

वाचं नः स दधात्विति वदन् भगवन्तं भास्वन्तमुद्दिश्य नमस्कारं कृतवानिति गम्यते। कथम्। नमस्कारप्रसन्नायाः देवताया वरप्रार्थनोपपत्तेः। एवमनुश्रूयते च—द्वादशादित्यस्थानस्थं भानुमुद्दिश्य 'द्वादशसमास्तपः कृत्वा भगवन्तं प्रत्यक्षीचकार। तस्मात् प्रणतिप्रसन्नाद् भास्करात् स्वाभिप्रेतं वरमयाचिष्ट वाचमस्मभ्यं प्रयच्छेति। वक्ष्यति च "आदित्यदासतनयस्तदवाप्तबोधः कापिष्ठलस्सवितृलब्धवरप्रसादः" इति। नन्वनेकेष्वभीष्टेषु अर्थेषु सत्सु किमर्थं वाचमेवाभ्यर्थयत्। उच्यते। वागुपचारेण आत्मनो निःश्रेयसप्राप्तेः। अथ बहुषु चन्द्रादिषु अन्येषु ग्रहेषु सत्सु कस्मादेतस्मादेव वरम् अजिघृक्षदिति चेद् भास्करनमस्कारादेव सर्वग्रहोपग्रहणं कृतं स्यात् तेषां तदन्तर्भावादिति।

आचार्यपरो वायं श्लोकः। मूर्तित्वे परिकल्पितः शशिभृतः ज्ञानातिशययोगादीश्वरः। अपुनर्जन्मनां वर्त्म मोक्षोपायोपदेशद्वारेण। आत्मविदां परोक्ष अयमेव आत्मा परमेश्वर इति परिकल्पितः। क्रतोः अतिशयोपकरणत्वात् क्रतुरित्युपचारवृत्तिः। भर्ता परं ज्योतिषाम् ज्ञानानां भरणाद् भर्ता। कुपितः प्रणाशयति, प्रसन्नः समुत्पादयति, रक्षति च लोकं तपोवीर्यादिवैभवादिति लोकानां प्रलयोदयस्थितिविभुः। इत्यनेकधा यः श्रुताविति विध्यर्थवादतन्त्रनामधेयात्मिकायां श्रुतौ बहुप्रभेदानर्थान् वेत्तीति स गुरुस्त्रैलोक्यदीप इति द्वितीयनामा आदित्यदासो वाणीं पुष्णातु। नैककिरण इति, अस्मात् ज्ञानस्वरूपं तेज आदाय सर्वत्र किरन्तीति किरणाः शास्त्राणि। आदित्यस्य तेजः किरणः किरणा इव ते अनेके तस्मान्नैककिरणः रञ्जनादाविति नैरुक्तविधानात्।

प्रमेयपरो वा। शशिभृतः कालस्वरूपस्य राशिचक्रस्य शरीरत्वे परिकल्प्यमाने शरीरी रविः। रविरिति प्रदर्शनं सर्वेषां ग्रहाणाम्। वर्त्मापुनर्जन्मनाम् अनेन प्रमेयेण त्रिकालज्ञानं भवति। पुनःअस्मात् त्रिकालज्ञानात् असारसंसारनिरासप्रतिपत्तिः ततो

मुमुक्षा तस्या उपायभूतत्वाद् अस्य वर्त्मेति। अपुनर्जन्मानो मुमुक्षवः। आत्मेत्यात्मविदां आत्मेति कालः सर्वस्य कारणभूतत्वात्। उक्तं च – "कालः सृजती"त्यादि। प्रलयोदय-स्थितिविभुः इत्यस्मिन्नर्थे

"अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते।
अव्युच्छिन्नाः ततस्त्वेते सर्गस्थित्यन्तसंयमाः॥"

इति अनेकधा यः श्रुतौ सिद्धः। श्रुतिरेव प्रमाणं कालसद्भाव इति। नैक-किरण इति विचारप्रकाराणां अनेकत्वात्। त्रैलोक्यदीप इति त्रैलोक्यान्तर्भूतं वस्तुजातम् इदं प्रमेयं दर्शयति। यथा कुटीरोदरविवरविस्तृतं विविधं भावजातं प्रदीपः प्रकाशयतीति। एकस्य श्लोकस्यार्थत्रयव्याख्या किमर्थमितिचेदुच्यते। जातकप्रश्नकर्महोराशास्त्रत्रये विस्तृतं समस्तं वस्तुजातम् अस्मिन्नेव दर्शयिष्यामीति शास्त्रकारस्याकूतम्। संबन्धाभि-धेयप्रयोजनान्यप्यनेनैव सिद्धानीति नोच्यन्ते॥ १॥

अथ शास्त्रस्य सविषयत्वं स्वरूपं चाह –

**भूयोभिः पटुबुद्धिभिः पटुधियां होराफलज्ञप्तये**
**शब्दन्यायसमन्वितेषु बहुशः शास्त्रेषु दृष्टेष्वपि।**
**होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानामहं**
**स्वल्पं वृत्तविचित्रमर्थबहुलं शास्त्रप्लवं प्रारभे॥ २॥**

**भूयोभिरिति**। होराशास्त्रार्थसंबोधनाय। **शब्दन्यायसमन्वितेषु** साधुशब्द-निष्ठितेषु न्यायसहितेषु च होराशास्त्रेषु **दृष्टेषु** रचितेषु **स्वल्पग्रन्थं वृत्तविचित्रं** मालिन्या-दिबहुवृत्तसमन्वितम्। **अर्थबहुलं** एकस्य श्लोकस्य बहवोऽर्थाः। **शास्त्रप्लवं** तरणोपायः। **प्रारभ** इति। अनेन निर्विषयत्वमाशङ्क्य सविषयत्वादारम्भणीयमिति कथयति। होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानाम् **अहं** अपारत्वाद् अपायबहुलत्वाद् गम्भीरत्वादर्णव इवेति रूपकम्। शकमयमणिन्थादिविरचितेषु बहुषु तन्त्रेषु सत्स्वपि किमर्थं मयापि शास्त्रमारभ्यत इत्याशङ्कां परिहरन्नाह– **"होरातन्त्रमहार्णवप्रतरणे**

भग्नोद्यमानामिति। अस्मद्विपर्ययेष्वेतेषु बहुषु अनर्थेषु शास्त्रेषु कृतश्रमाणां अज्ञातानिर्णीत-होरार्थानां शिष्याणां बोधार्थेदम् उपदेशरूपं शास्त्रं आरभ्यत इति ॥ २ ॥

होरास्वरूपमाह –

**होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति पूर्वापरवर्णलोपात् ।**
**कर्मार्जितं पूर्वभवे सदादि यत् तस्य पक्तिं समभिव्यनक्ति ॥ ३ ॥**

**होरेत्यहोरात्र** इति । अहो रात्रेश्च विविधं कल्पनं यत्तदिह होराशब्दास्पदम् । अह्नो रात्रेश्च अहोरात्रस्य च मेषादीनां राशीनां तद्भेदानां सप्तांशकनवांशकद्वादशांशक-त्रिंशांशकादीनां प्राणपर्यन्तानां होरेति संज्ञा । कथमहोरात्रस्य होराशब्दो वाचक इत्याह – **पूर्वापरवर्णलोपा**दिति । पूर्ववर्णस्याकारस्य अन्त्यवर्णस्य त्रकारस्य निरुक्त-विधिना लोपे कृते होरेति रूपं भवति । उक्तं च –

"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योऽशस्तदुच्यते पञ्चविधं निरुक्तम् " ॥

इति । **एके** प्रधानाः **वाञ्छन्ति** । प्रधानानामाचार्याणाम् अभिमतत्वात्, सर्वत्र होराशब्दस्य निरङ्कुशप्रवृत्तिमभ्युपेत्य होरास्वरूपे ज्ञाते तत्फलमाह–**कर्मार्जित**मिति। **आर्जितं** कृतम् । **पूर्वभवे** अतीतजन्मनि। **सदादि** सदसन्मिश्रं च। तादृशस्य कर्मणः फलं **यत्तदभिव्यनक्ति** होरा अभिव्यञ्जयति । अस्यां होरायां जातस्य एवंविधं कर्म फलतीति फलादेशः कर्तव्य इति वदता आचार्येण होरायाश्च ग्रहाणां च ज्ञापकत्वकारकत्वप्रतिपत्तिः व्युदस्ता भवति फलं ज्ञापयति होरा फलं कुर्वन्ति ग्रहा इति॥ ३ ॥

होराफलग्रहणोपायमाह –

**कालाङ्गानि वराङ्गमाननमुरो हृत्क्रोडवासोभृतो**
**वस्तिर्व्यञ्जनमूरुजानुयुगले जङ्घे ततोऽङ्घ्रिद्वयम् ।**
**मेषाश्विप्रथमा नवर्क्षचरणाश्चक्रस्थिता राशयो**
**राशिक्षेत्रगृहर्क्षभानि भवनं चैकार्थसम्प्रत्यये ॥ ४ ॥**

**कालाङ्गानीति** । कालाख्यस्य पुरुषस्य इमे राशयोऽङ्गत्वेन कल्प्याः । मेषो राशिः **वरांगः**, वृषः **आननं, उरो** मिथुनं,**हृद्‌यं** कुलीरः,**क्रोडः** उदरं सिंहः,**वासो भृज्ज**घनं कन्या, **वस्तिः** मूत्राशयस्तुलाधरः, **व्यञ्जनं** चिह्नं वृश्चिकः, **ऊरुयुगलं** धनुः, **जानुयुगलं** मकरः, **जङ्घाद्वयं** कुंभः, **अंघ्रिद्वयं** मीनः । अनुक्तानाम् अङ्गानां कथं राशिसंबन्ध इति चेत् तत्राह— यावच्छिरः प्रतीतः (?) तत आरभ्य आननं त(तो?त उ)र इत्यादि । वरांगमाननमित्यसमास-निर्देशेन ऊर्ध्वाङ्गसत्त्वयोः संबन्ध उक्तः । **हृत्क्रोड**वासोभृत इति समासेनानेन सम्बन्धवता रजसोऽन्तराधेः संबन्धोऽभिहितः । वस्तिर्व्यञ्जनमित्याद्यसमासनिर्देशेन बहुरूपस्य तमसो-ऽधकायसंबन्धोऽभिहितः । अधोभागावयवानां द्वयोर्द्वयोः समुदितयोरेव कार्यकरत्वमिति ज्ञापनार्थं द्वन्द्वैकवद्भावग्रहणम् । वस्तिर्व्यञ्जनमित्याद्युक्तानां राशीनां मस्तिष्कामाशया-दिभिः आन्तरैः उक्तैश्च बा(हिरैःह्यैः) संबन्धः समानः इति । विन्यासक्रमम् आह **मेषाश्विप्रथमा इति** । मेषो राशीनामादिः अश्विनी नक्षत्राणाम् । राशिसमानतानयनोपाय-माह—**नवर्क्षचरणा** इति । नव नव नक्षत्रपादाः एकैको राशिः । अश्विनी भरणी कृत्तिकापादश्च मेष इत्यादि । **चक्रस्थिता** इति । चक्ररूपेण स्थिता राशयः क्षेत्रकर्मणि । स्थितग्रहणेन राशयः स्थिराः ग्रहाश्चरा इति ज्ञापयति । व्यवहारार्थं पर्यायानाह — **राशिक्षेत्रगृहर्क्षभानि भवनं चेति** । **एकार्थसंप्रत्यये** एकार्थबोधने । पर्याया इति यावत् । राशिग्रहणे समूहबल-मवलोक्य फलं वाच्यम् । क्षेत्रग्रहणेऽधिपतिबलं, गृहाभिधाने राशिस्वरूपबलं, ऋक्षग्रहणे राशिदौर्बल्यं, भमित्येप्यद्बलं, भवनमिति सञ्जातबलमालोक्य फलमादेश्यम् अस्मिञ्छास्त्र इत्यर्थः । अनेकेषु पर्यायेषु सत्सु षण्णामेव ग्रहणं सृष्टिस्थितिसंहारवास्तु(ति?)नक्षत्र-चक्रषट्कास्तित्वद्योतनार्थम् ॥ ४ ॥

राशिफलनिरूपणक्रमोपायमाह —

**मत्स्यौ घटी नृमिथुनं सगदं सवीणं**
**चापी नरोऽश्वजघनो मकरो मृगास्यः ।**
**तौलिः ससस्यदहना प्लवगा च कन्या**
**शेषाः स्वनामसदृशाः स्वचराश्च सर्वे ॥ ५ ॥**

**मत्स्यौ घटीति**। अस्य राशिस्वरूपपरत्वे समानतन्त्रविरोधः स्वोक्तक्रमभङ्गश्च भवति। तथाहि –

"कुम्भः कुम्भधरो नरोऽथ मिथुनो वीणागदाभृन्नरो
मीनो मीनयुगं धनुश्च सधनुः पश्चाच्छरीरे हयः।
एणास्यो मकरः प्रदीपसहिता कन्या च नौसंस्थिता
शेषो राशिगणः स्वनामसदृशो धत्ते तुलाग्रं तुला ॥"

इति समानतन्त्रविरोधः। स्वोक्तक्रमेऽपि मेषो राशिः मीनयुगं भवति। त(द्व?)द्विरुध्यते। अतः फलनिरूपणार्थोऽयं श्लोकः **मत्स्याविति**। शास्त्रान्तरसिद्धमनूद्य फलनिरूपणक्रमो विधीयते। तत्र मेषाश्विप्रथमा इति प्रस्तुतस्य मेषलग्नस्याश्विनीजातस्य जातकफलक्रमोऽभिधीयते। बहु वै फलदानां ग्रहाणां पुण्यापुण्यकर्मानुरूपेणोद्देश्यम्। पुण्यापुण्यसंबन्धश्च पूर्वजन्मलग्नश्चेदानींतनलग्नद्वादशो राशिः। अतो मेषजातस्य मीनराशिः पूर्वजन्मलग्नम्। एवमन्यत्रापि पूर्वजन्मलग्नं ज्ञात्वा पुण्यापुण्यफलविपाको वाच्यः। एवमतीतजन्मलग्नेन पुण्यापुण्यत्वे ज्ञाते ते पुण्यापुण्ये इह जन्मनि लभ्येते उतान्यजन्मनीति सन्देहे निर्णयो लाभस्थानेनेति मत्वा **घटी**त्याह। लाभालाभे ज्ञाते भ्रात्रादिसहायबलेन स्वजातिदेशाद्यनुरूपं फलं वाच्यमित्याह **नृमिथुन**मिति। एतदेव फलं सुखेन वा दुःखेन वा भवतीति ज्ञातुम् अदृष्टस्थानमाह। **चापी नरोऽश्वजघन** इति। उक्तफलसाधनप्रवृत्तिः कीदृशीति ज्ञातुं प्रवृत्तिस्थानमाह **मकरो मृगास्य** इति। ईदृग्विधस्य फलस्य कलत्रबलादन्यथा(त्वं) सम्भविष्यति वा नवेति ज्ञातुं कलत्रस्थानमाह **तौलि**रिति। एवं ज्ञाते सप्रतिबन्धकान्वयादन्यथातो भवतीति तज्ज्ञानार्थं शत्रुस्थानं षष्ठमाह **ससस्यदहना प्लवगा च कन्ये**ति। चशब्देनानुक्तानां मूर्तिधनबन्धुसुतायुषां शेषैरनुक्तैः फलमादेश्यम्। एतेषाम् उक्तानामनुक्तानां च राशीनां स्वरूपमपि तन्त्रेणाह–**स्वनामसदृशाः स्वचराश्च सर्वे** इति। तथा स्वजात्यनुरूपगतिभक्षणाः। तथाहि। अन्योन्यपुच्छाभिमुखं मत्स्यद्वयम्। अर्णवमध्यचरमत्स्यखळरागषाडवादिभक्षणश्च मीनो राशिः। जानुदघ्नजले स्थितो जलाहरणोद्युक्तो रिक्तघटहस्तः पानीयपानपरः पुरुषो घटी कुम्भः। गदाहस्तः पुरुषो वीणाहस्ता च

स्त्री वाह्योद्यानं गतं कलगेयवाद्यनृत्तरतितत्परं स्त्रीपुंसोः मिथुनं मिथुनम् । पूर्वकाये नर-तुरगश्चापहस्तः इतरेणाश्वतुल्यजवनो राजगृहचरो राजार्हभक्ष्यभोज्यचरो धनुराशिः । नदी-समुद्रसंगमस्थो मकरमुख एणपृष्ठो मत्स्यमांसतृणपर्णादिभक्षणो मकरास्यो मृग इति गुरूपदेशः । वीथ्यां तु वा पण्यधरो मनुष्यशुल्कार्थं वीथ्यापणपत्तनाधिपः सशुल्कादि-संस्कृतान्नचरस्तुलाराशिः । ग्रामद्वयान्तरालवर्तिन्या नद्याः जले नौस्था शालिस्तम्बदहन-धारिणी कन्या कन्याराशिः । मेषो मेषाकृतिः जाङ्गलदेशचरः कटुकतिक्त-शाकद्रव्यचरः । वृषभो ग्रामचरः सस्यादिचरो विलंबिताशी बहुभुक् च । कुलीरो जल-वस्तुचरोऽनवरतगतिः आनूपदेशचारी (कुलीरः?) । सिंहः सिंहाकृतिः मांसप्रियो वनचरः स्वार्जितमधुरकटुकद्रव्यप्रियः । संकरकूटावटाटनः तीक्ष्णस्वभावकीटादिपरो वृश्चिकः । अत्र जातकप्रश्नकर्महोरा निर्दिश्यन्त इति पूर्वमुक्तम् । अस्य श्लोकस्य जातकपरत्व-मभिहितम् । तत्कथमितरपरत्वमिति चेद् इतरपरत्वमप्याचार्यस्याभिप्रेतमेव । प्रश्नपरता तावत् प्रदर्श्यते । तस्य नष्टप्रश्नस्य दुरधिगमत्वात् तत्परत्वेन व्याख्येयम् । पूर्ववत् मेष आरूढ इति कृत्वा चिन्त्यम् । मत्स्यौ घटीति । मत्स्य इति द्वादशो राशिः, तेन नष्टद्रव्यस्य स्थिरास्थिरत्वस्वभावादीन् अवबुद्ध्य घटभृदुपलक्षितेन लाभस्थानेन लाभालाभे निश्चित्य, नृ-मिथुनलक्षितेन तृतीयराशिना दूतस्थानेन दौत्यविशेषान् परिकल्प्य, चापलक्षितेन नवमराशिना दृष्टप्रावीण्यादीनवबुद्ध्य प्रवृत्तिः कीदृशी विहितेति दशमराशिनावधार्य तौल्युपलक्षितेन सप्तमस्थानेन कथं तद् दृश्यते क्व वेत्यादिदर्शनप्रकारानवगम्य कन्येति षष्ठस्थानेन शत्रुभूतेन चोरस्वभावजात्यादीन् अवबुद्ध्य अनुक्तैः स्थानैरपि तांस्तान् भावविशेषान् सञ्चिन्त्य नष्टाधि-गमो वाच्यः । तत्रानुक्तानां अष्टमेनायुः, विलग्नेन देहः, चतुर्थविलग्नेन चिन्तितं, द्वितीयविलग्नेन धनम् आरूढं शास्त्रान्तरादेवावगन्तव्यं इत्येषा दिक् । तथा प्लवगा च कन्येति चकारात् कर्महोरापरतापि सूत्रिता । तत्र तावद्वैदिककर्मानुष्ठानाद्याश्रमाणामन्य-तममाश्रयणीयं भवति । तत्रापि प्रवरो गृहस्थाश्रमविधिरिति मकरस्य उद्वाहस्य कन्याराशि र्मुख्यत्वेन ग्राह्यः । कन्याराशेः नरराशित्वं सात्त्विकत्वं बुधक्षेत्रत्वं शीर्षोदयत्वमित्यादि गुणा विद्यन्ते । अन्यस्यापि यस्यैते गुणाः प्राचुर्येण दृश्यन्ते स ग्राह्यः । यस्यैषामेकोऽपि गुणो न विद्यते स त्याज्यः । मकरस्य युग्मत्वं शीर्षोदयत्वं च विना साद्गुण्यं, तुलाधरस्य

(बुध?शुक्र)क्षेत्रत्वं युग्मत्वं(?)सात्त्विकत्वं च विना शोभनत्वम् इत्यादि चिन्त्यम् । मेषस्यैकोऽपि गुणो न विद्यत इति निश्चयः । एवं प्रथमवधूगमने मिथुनराशिर्मुख्यत्वेन ग्राह्यः । गजकर्मणि कन्याराशिः, अश्वकर्मणि चापराशिः, गोकर्मणि वृष इत्यादि परिकल्पनीयम् । एतदुक्तं भवति – यस्य यस्य राशेः येन येन जात्यादिना साधारण्यं तत्तद्राश्युदये तत्तज्जात्यादिविहितं कर्म कुर्यादिति, उक्तस्वरूपाणां राशीनां अचेतनानाम् सचेतनग्रहाधिष्ठितानामेव कार्यकरत्वमिति ॥ ५ ॥

राशीनाम् अंशकानां ग्रहाणां च भेदं दर्शयितुमाह –

**क्षितिजसितज्ञचन्द्ररविसौम्यसितावनिजाः**
**सुरगुरुसौरिमन्दगुरवश्च गृहांशकपाः ।**
**अजमृगतौलिचन्द्रभवनादि नवांशविधि-**
**र्भवनसमांशकाधिपतयः स्वगृहात् क्रमशः ॥ ६ ॥**

**क्षितिजसितज्ञेति** । मेषराशेः तदंशकानां च अधिपतिः **क्षितिज** आरः । वृषस्य तदंशकानां च **सितः** शुक्रोऽधिपतिः । मिथुनस्य तदंशकानां चाधिपतिः **ज्ञो** बुधः । कर्कटकस्य तदंशकानां चाधिपतिः **चन्द्रः** । सिंहस्य तदंशकानां च **रविः** । कन्यायास्तदंशकानां **बुधः** । तुलाधरस्य तदंशकानां **शुक्रः** । वृश्चिकस्य तदंशकानां **कुजः** । धनुषस्तदंशकानां **गुरुः** । मकरस्य तदंशकानां **शनिः** । कुंभस्य तदंशकानां **मन्दः** । मीनस्य तदंशकानां **जीवः** । एते ग्रहाः एतेषां राशीनां च अधिपतयः । तत्र मेषे मेषादिचापान्ता नवांशकाः । क्षितिजादिसुरगुर्वन्ताश्चाधिपतयः । वृषे तु चापानन्तरराशिः मकर इति मकरादिकन्यान्ता नवांशकाः । सौर्यादिसौम्यान्ताश्चाधिपतयः । मिथुने तु कन्यानन्तरराशिः तुलाधर इति । तुलाधरादिमिथुनान्ता अंशकाः । सितादिज्ञान्ताश्चाधिपतयः । कर्कटके कर्कटादिमीनान्ताश्चांशकाः । चन्द्रादिगुर्वन्ताश्चेशाः । एवमेव सिंहचापादिष्विति ज्ञेयम् । **भवनसमांशकाधिपतयः स्वगृहात् क्रमशः** इति मेषे मेषादिमीनान्ता द्वादशांशकाः क्षितिजादिसुरगुर्वन्ताश्चाधिपतयः । वृषे तु कुत्रचित् विषये वृषाद्या द्वादशांशका ग्राह्याः । कुत्रचिद्विषये मेषाद्याश्च द्वादशांशकाः ग्राह्याः ।

इति ज्ञेयम् । तथा भवनसमांशकशब्देन भवनाधिपग्रहसमांशकाः तेषाम् अधिपतयः उक्तक्रमेणैवेति सूचितम् । तत्र मेषे मेषादितुलाराश्यन्ताः सप्तांशाः कुजादिसितान्ताश्च अधिपतयः । वृषे वृश्चिकादिवृषान्ताश्चांशकाः क्षितिजादिसितान्ताश्चैवाधिपतयः । मिथुनादिष्वप्येवमेव योज्यम् । क्षितिजसितज्ञचन्द्ररविसौम्यसितावनिजा इत्यष्टानां समासः सुरगुरुमन्दसौरिगुरवश्चेति चतुर्णां समासः । तेनायमर्थः सूचितः – मूर्त्यादीनाम् आयुःपर्यन्तानां धर्मादिसापेक्षत्वं न विपरीतम् इति ॥ ६ ॥

त्रिंशदंशकाधिपत्यप्रदर्शनार्थमाह –

**कुजरविजगुरुज्ञशुक्रभागाः**
**पवनसमीरणकौर्पिजूकलेयाः ।**
**अयुजि, युजि तु ते विपर्ययस्थाः**
**शशिभवनालिझषान्तमृक्षसन्धिः ॥ ७ ॥**

**कुजरविजे**ति । मेषमिथुनादिष्वोजराशिषु कुजादीनां पवनादिभागाः त्रिंशदंशकाः । वृषकर्क्यादियुग्मराशिषु शुक्रज्ञगुरुरविजकुजानां लेयाद्या भागास्त्रिंशदंशकाः । प्रयोजनं यस्य ग्रहस्य त्रिंशदंशके शशिलग्ने ? तस्य ग्रहस्य प्राबल्ये सति तद्ग्रहासाधारणभूतेन्द्रियवैशद्यम् इति । इतरथा वैकल्यमिति । **शशिभवनालिझषान्तमृक्षसंधिः** । कर्कटकवृश्चिकमीनेषु अन्त्यत्रिंशद्भाग ऋक्षसंधिरिति ज्ञेयम् । अन्तशब्दः साधारणोऽपि त्रिंशद्भागे प्रस्तावात् तमेव गमयति । अन्तशब्देन तस्याशुभत्वमपि सूचितम् ॥ ७ ॥

मेषादीनां संज्ञामाह –

**क्रियतावुरुजितुमकुलीरलेयपाथोनजूककौर्प्याख्याः ।**
**तौक्षिक आकोकेरो हृद्रोगश्चेत्थसिः क्रमशः ॥ ८ ॥**

**क्रियतावुरु** इति । तत्राप्यष्टानां समासः । चत्वारः पृथङ्निर्दिष्टाः । तेन धर्मादयो मूर्त्यादिभिः एकैकं संबध्यन्ते न समुदिता इत्ययमर्थो विज्ञेयः ॥ ८ ॥

वर्गसंज्ञार्थमाह –

**द्रेक्काणहोरानवभागसंज्ञास्त्रिंशांशका द्वादशसंज्ञिताश्च ।**
**क्षेत्रं च यद्यस्य स तस्य वर्गो होरेति लग्नं भवनस्य चार्धम् ॥ ९ ॥**

द्रेकाणहोरेति। शुक्रशोणितसंसर्गे तत्र आणवसंज्ञा (स)मुत्पद्यते। तदेवोत्तरत्र कलत्रशब्देनोच्यते। उक्तवांश्च —

"नक्षत्रग्रहपञ्जरमहर्निशं लोककर्मविक्षिप्तम्।
भ्रमति शुभाशुभमखिलं प्रकाशयत् पूर्वकर्मकृतम्॥"

इति। तदसाधारण्यं द्रेक्काणस्य। होरायाः त्वचासाधारण्यम्। नवांशकस्य सूक्ष्मशरीरेणाभेदः। त्रिंशदंशकानाम् इन्द्रियाभेदः। द्वादशांशकानां क्षेत्रज्ञाभेदः। चकारेण मुमुक्षुत्वं, संसारित्वं, संसारित्वेऽपि सुखित्वदुःखित्वादयो नियमेन भवन्तीति द्योतयति। क्षेत्रमिति स्थूलदेहः। चकारेण द्रेक्काणादिभ्यः पञ्चभ्योऽपि क्षेत्रप्राबल्यं सूचयति। एते द्रेक्काणादयो यस्य ग्रहस्य तस्य ग्रहस्य ते वर्गसंज्ञा वेदितव्याः। लग्नस्य स्वरूपमाह — **होरे**ति। लग्नं होरेत्युदयस्याख्या। उदयमिति ध्वजदिगाद्यं वारदिगाद्यं च द्विविधं यामचारं यत् तयोः आख्येति बोद्धव्यम्॥ ९॥

निशादिनसंज्ञार्थमाह —

**गोजाश्विकर्किमिथुनाः समृगा निशाख्याः**
**पृष्ठोदया विमिथुनाः कथितास्त एव।**
**शीर्षोदया दिनबलाश्च भवन्ति शेषा**
**लग्नं समेत्युभयतः पृथुरोमयुग्मम्॥ १०॥**

**गोजाश्विकर्की**ति। ननु च अत्र वाक्यभेदोऽस्ति। अस्त्येवेति ब्रूमः। तत्र जातकहोरायाम् अन्यद्विधीयते प्रश्ने त्वितरत्। अपरिपूर्णश्चेद्वाक्यार्थोऽन्यस्माद् इतरत्र आदिश्यते। तेनायमर्थः — गोजाद्याद्या निशासंज्ञा रात्रिबलाः। शेषाः दिनसंज्ञा दिवसबलाः। गोजाश्वादयश्च विमिथुनाः पृष्ठोदयाः। शेषाः शीर्षोदयाः स्वतः शुभमेव कुर्वन्ति। अशुभग्रहसंबन्धे सत्यशुभाः। पृष्ठोदयाः स्वतश्चाशुभकराः शुभसंबन्धे सति शुभदाः। उभयोदये मिश्रं फलमिति। उभयोदयो मीनः मीनराशिः मुखपुच्छाभ्यामुदेति॥ १०॥

राशिप्रभेदमाह —

**क्रूरः सौम्यः पुरुषवनिते ते चरागद्विदेहाः**
**प्रागादीशाः क्रियवृषनृयुक्कर्कटाः सत्रिकोणाः।**

**मार्तण्डेन्द्वोरयुजि समभे चन्द्रभान्वोश्च होरे**
**द्रेक्काणाः स्युः स्वभवनसुतत्रित्रिकोणाधिपानाम् ॥ ११ ॥**

**क्रूरेति** । मेषमिथुनाद्योजराशयः क्रूरसंज्ञाः, वृषकर्क्याद्याः समराशयः सौम्याः । तथा ओजाः पुरुषसंज्ञाः, इतरे स्त्रीसंज्ञाः । तथा मेषादय एव क्रमेण चरस्थिरोभयात्मानः । तथा प्रागादीनां दिशाम् ईशास्त्वजादयः प्रादक्षिण्येन प्रथमपञ्चमनवमाः । तत्र पूर्वाद्या दिशः त्रिधा कृत्वा त्रिभिरेव प्रथमपञ्चमनवमराशिभिः क्रमाद् व्याप्ता इति बोद्धव्याः । भवनार्धञ्च होरेत्युक्तम् । तत्रैकैकस्मिन् राशौ द्वे द्वे होरे । तत्र मेषमिथुनादिविषमराशौ क्रमाद्रवेः चन्द्रस्य चाधिपत्यं, समराशौ विपरीतं चन्द्रस्य रवेश्चेति । चकारेणायमर्थः सूचितः- सिंहादयो मकरान्ता रविणा साग्नेयाः । कुम्भधरादयः कर्कटकान्ताः चान्द्रत्वात् सौम्याः । तेन तयोः षट्कयोः दहनप्लवनप्रसंगे तन्निरोधार्थम् एकैकस्मिन् राशौ तयोः चन्द्रार्कयो- रसाधारण्यं कृतम् । एकैकहोरायामपि तद्वत्सौम्याग्नेयत्वं निरूप्यम् । मेषस्य प्रथमे भागे सन्देहः । राशिस्तावदाग्नेयः क्रूरत्वात् कुजक्षेत्रत्वाच्च । होरापि भानोः । द्रेक्काणो भौमस्य । त्रिंशदंशकोऽपि रविजस्य । एवमपि नवांशको बुधस्य द्वादशांशकश्चन्द्रस्य इति प्रथमे द्रेक्काणस्यापि सौम्यत्वम् अप्यस्त्येवेति न च क्वचिदेकस्वभावत्वमिति । **द्रेक्काणाःस्युः** इति ग्रहाणां तदाधिपत्यमाह । प्रथमद्रेक्काणः प्रथमराश्यधिपतेः, द्वितीयः पञ्चमराश्यधि- पतेः, तृतीयो नवमराश्यधिपस्य । स्युरिति फलदातृत्वमेवोक्तम् । तस्य आधिपत्यविधानेन प्रोक्तत्वाद् द्रेक्काणानामधिपतिसंवन्धे सत्येव फलदत्वम् अन्यथा विफलत्वम् । नवांशकादीनाम् अन्यथापि किञ्चित् फलदत्वम् इत्यवगन्तव्यम् ॥ ११ ॥

आचार्यान्तरमतेनापि होराद्रेक्काणयोराधिपत्यमाह —

**केचित्तु होरां प्रथमां भपस्य**
**वाञ्छन्ति लाभाधिपतेर्द्वितीयाम् ।**
**द्रेक्काणसंज्ञामपि वर्णयन्ति**
**स्वद्वादशैकादशराशिपानाम् ॥ १२ ॥**

**केचित्त्विति** । प्रथमराश्यधिपतेः प्रथमा होरा । द्वितीया लाभाधिपतेः । एवं सर्व- राशिषु । द्रेक्काणा अपि प्रथमद्वादशैकादशराश्यधिपतीनामिति । एतदाचार्यस्य नाभिप्रेतम् ।

केचित् शुक्रविषयोऽयं प्रकारो ग्राह्य इति। केचित्त्विति तुकारेण नष्टप्रश्नादावयं विधिः ग्राह्य इति शकाचार्याः मन्यन्ते इति सूचितम् ॥ १२ ॥

उच्चनीचप्रदर्शनार्थमाह —

**अजवृषभमृगाङ्गनाकुलीरा**
**झषवणिजौ च दिवाकरादितुङ्गाः।**
**दशशिखिमनुयुक्तिथीन्द्रियांशै-**
**स्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ॥ १३ ॥**

**अजवृषभेति**। अजादयो दिनकरादीनां क्रमेण तुङ्गाः। ततो दशशिखीत्यादि-भागाः अतिशयेन तुङ्गाः। त एव राशयोऽस्तनीचाः। तेष्वपि तत्संबन्धात् ते भागाः अतिनीचाः इति। अत्र समागाः नीचा एवोक्ताः। तेनायमर्थो गम्यते — मेषादीनां स्थूलानां तुङ्गफलदत्वं, तुलादिनीचानां दशमादिभागेष्वेव नीचफलपरिपूर्त्तिरिति। अंश-ग्रहणं प्रदर्शनार्थम्। नवांशकादीनामपि नीचांशानामेव नोच्चांशानाम्। अस्मिञ्छ्लोके वृत्तान्तरग्रहणेनायमर्थो गम्यते। इन्द्रदेवत्यञ्छन्दः। तेन चक्रवर्तित्वम् अत्रोच्यमानं गम्यते। तच्चापि कथं भवतीत्याकाङ्क्षायां पञ्चसङ्ख्याकास्तुंगाः अजवृषभेत्यादिनैकैकेन पदेनोक्ताः। तेन पञ्चसु तुङ्गग्रहेषु अपार्थिवकुलजोऽपि चक्रवर्त्ती भविष्यतीति वेदितव्यम्। किमजादि-ष्वेव प्रोक्तेषु तद् भवतीत्याह — **झषवणिजौ चेति**। येषु केषुचितुङ्गेषु भवतीत्यर्थः। तथा चक्रवर्तिवंशजोऽपि पञ्चसु नीचस्थितेषु न राज्यं लभते इति एतदपि गम्यते दशशिखीति पञ्चानां समासेन। तेषामप्यनियममाह — **त्रिनवकविंशतिभिश्चेति** ॥ १३ ॥

वर्गोत्तमादिप्रदर्शनार्थमाह—

**वर्गोत्तमाश्चरगृहादिषु पूर्वमध्य-**
**पर्यन्ततः सुशुभदा नवभागसंज्ञाः।**
**सिंहो वृषः प्रथमषष्ठहयाङ्गतौलि-**
**कुम्भास्त्रिकोणभवनानि भवन्ति सूर्यात् ॥ १४ ॥**

**वर्गोत्तमा** इति । चरादिराशित्रयेषु क्रमात् प्रथमपञ्चमनवमा नवांशा वर्गोत्तमसंज्ञाः । चरराशौ प्रथमो नवांशः स्वाख्यः । स्थिरराशौ पञ्चमः । उभये नवमः । एते वर्गोत्तम-संज्ञाः । द्वादशांशेषु स्वाख्या येंऽशाः ते वर्गोत्तमा एव । तत्र नवांशकवर्गोत्तमाः सुशुभदाः, द्वादशांशकवर्गोत्तमाः शुभदाः, सप्तांशकवर्गोत्तमाः अल्पशुभदा इति ज्ञेयम् । अत्र संज्ञाध्याये सुशुभदा इति फलप्रदर्शनस्यायम् अभिप्रायः । वर्गोत्तमफलस्योत्पत्तिहेतुरपार इति फलाख्य अप्यपार एवेति सूचितम् । शेषं सुगमम् ॥ १४ ॥

संज्ञान्तरविधानार्थमाह –

**होरादयस्तनुकुटुम्बसहोत्थबन्धु-**
**पुत्रारिपत्निमरणानि शुभास्पदायाः ।**
**रिःफाख्यमित्युपचयान्यरिकर्मलाभ-**
**दुश्चित्कसंज्ञितगृहाणि न नित्यमेके ॥ १५ ॥**

**होरादय** इति । अत्राप्यष्टानां त्रयाणां च समासः । एकस्य रिःफस्य पृथङ्निर्देशः कृतः । तेन शुभास्पदायानां तन्वादिभिः संबन्धोऽनुग्राहकत्वेन । रिःफस्य अन्यथेति प्रकारभेदप्रदर्शनार्थम् । षष्ठदशम(लाभ)भ्रातृस्थानान्युपचयानि । शेषाण्यपचयानि । इय-मुपचयसंज्ञा न नित्या । राजयोगे दशमस्थानस्योपचयशब्देनानभिधानात् । अथवा क्रूर-ग्रहाक्रान्ता उपचयराशयः अपि नोपचयं कुर्वन्तीति न नित्यमित्युक्तम् ॥ १५ ॥

**कल्यस्वविक्रमगृहप्रतिभाक्षतानि**
**चित्तोत्थरन्ध्रगुरुमानभवव्ययानि ।**
**लग्नाच्चतुर्थनिधने चतुरस्रसंज्ञे**
**द्यूनं च सप्तमगृहं दशमर्क्षमाज्ञा ॥ १६ ॥**

**कल्यस्वेति** । अत्र षण्णां षण्णां पदानां समासो दृश्यादृश्यविभागप्रदर्शनार्थः । लग्नात्तदधिपग्रहो दृश्यार्धगश्चेत् लाभप्रश्ने लाभो वाच्यः । रोगप्रश्ने रोगशमनम् । नष्टप्रश्ने नाशस्याभावः । दृश्यार्धश्चाचिरकालफलप्रदः, अदृश्यार्धश्च चिरकालफलप्रद इति सर्वत्र ग्राह्यम् ॥ १६ ॥

कण्टकादिसंज्ञामाह –

**कण्टककेन्द्रचतुष्टयसंज्ञाः सप्तमलग्नचतुर्थखभानाम् ।**
**तेषु यथाभिहितेषु बलाढ्याः कीटनराम्बुचराः पशवश्च ॥ १७ ॥**

**कण्टकेति** । दिग्बलमाह – तेष्विति । सप्तमराशावधःप्रविशन्तः कीटराशयो बलिनः । कुलीरवृश्चिकमृगपूर्वार्धाः कीटाख्याः । लग्नराशावूर्ध्वं गच्छ(न्तः) प्रविशन्तो नरा बलिनः । चतुर्थराशौ जलान्तःस्था अम्बुचरा बलवन्तः । दशमराशौ पशवो बलिनः इति ॥ १७ ॥

**केन्द्रात् परं पणपरं परतश्च तद्व-**
**दापोक्लिमं हिबुकमम्बु सुखं च वेश्म ।**
**जामित्रमस्तभवनं सुतभं त्रिकोणं**
**मेषूरणं दशममत्र च कर्म विद्यात् ॥ १८ ॥**

**केन्द्रात् परमिति** । केन्द्रानन्तरं पणपरम् । तदनन्तरम् आपोक्लिमम् । तत्र केन्द्रेण वर्तमानजन्मनि फलपक्तिर्वाच्या । पणपरेणैष्यज्जन्मनि । आपोक्लिमेनातीतजन्मनि । तथैवोदयेन वर्तमानवर्षमासदिनेषु फलपक्तिर्वाच्या । पणपरेणैष्यद्वर्षमासदिनेषु । तस्य पणपरे तदेष्यद्वर्षमासदिनेषु । तस्य पणपरे तदेष्यद्वर्षादिषु । अतीतराशिनातीतजन्मवर्षादिषु । तस्याप्यतीतराशिना तस्मादप्यतीतवर्षमासादिष्विति विभागः । अत्र च कर्म विद्यादिति दशमेन जीवनोपायलक्षणा वृत्तिरीदृशीति ज्ञेया । चकारेणार्थासौ सहायजातिदिग्देशादयो विज्ञेया इति सूचितम् ॥ १८ ॥

राशीनां प्राबल्यमाह –

**होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटा**
**केन्द्रस्था द्विपदादयोऽह्नि निशि च प्राप्ते च सन्ध्याद्वये ।**
**पूर्वार्धे विषयादयः कृतगुणा मानं प्रतीपं ततो**
**दुश्चिक्यं सहजं तपश्च नवमं त्र्याद्यं त्रिकोणं च तत् ॥ १९ ॥**

**होरा स्वामीति** । अधिपतिना गुरुणा वा बुधेन वा दृष्टा युता वा होरा प्रबला । अचेतना होरा चैतन्यभूतेन दृष्टा युता वा बलवती । तथा गुरुणा जीवसंज्ञितेन युता दृष्टा वीर्यवती । बुधसंबन्धेन तथा राशीनां प्राबल्यम् । जीवग्रहत्वात् । तस्यापि जीवसंज्ञा वेद्येति ब्रूमः । अन्यैः शुभैः अपि युते वीक्षिते तु न प्राबल्यम् इति । तथा केन्द्रपणपरापोक्लिमस्थाः क्रमेणोत्तममध्यमाधमबला राशयो ज्ञेयाः । अह्नि निशि च प्राप्ते च संध्याद्वये तथा । द्विपाद्राशिः दिवसबलः । अम्बुचरो रात्रौ । पूर्वसन्ध्यायां पशवः अपरसंध्यायां कीटराशयः । पूर्वार्धे विषयादय इति । मेषाद्याः कन्यान्ताः पूर्वार्धे षड्राशयः । तेषाम् एवं मानम् । विषयादयः पञ्चषट्सप्ताष्टनवदशकाः कृतगुणाः चतुर्गुणाः, षण्णां राशीनां प्रस्तावात् षड्भिः हृताः परिमाणं भवति । स्याद्यं त्रिकोणं त्रित्रिकोणमिति । शेषं सुगमम् ॥ १९. ॥

राशीनां वर्णानाह –

**रक्तः श्वेतः शुकतनुनिभः पाटलो धूम्रपाण्डु-**
**श्चित्रः कृष्णः कनकसदृशः पिङ्गलः कर्बुरश्च ।**
**बभ्रुः स्वच्छः प्रथमभवनाद्येषु वर्णाः प्लवत्वं**
**स्वेशाशाख्यं दिनकरयुताद् भाद् द्वितीयं च वेसिं ॥ २० ॥**

**रक्तः श्वेत** इति । **रक्तः** सिन्दूरनिभो मेषः । **श्वेतो** नालिकेरान्तर्निभो वृषः । शुकश्यामलो मिथुनराशिः । पाटलपुष्पनिभः कुलीरः । पालालधूम्रनिभः सिंहः । नन्द्यावर्तपाण्डुः कन्या । नानावर्णः तुलाधरः। अलिनिभो वृश्चिकः। हेमनिभश्चापः । मार्जारदृक्पिङ्गलो मकरः । शुष्ककदलीपत्रनिभः कुम्भः । श्वेतो नालिकेरान्तर्निभो मीन इति । अधिपतिदिक्समानं प्लवत्वम् । यथा सिंहस्य प्राक्प्लवत्वं, मेषस्य दक्षिणप्लवत्वं, मकरस्य पश्चिमप्लवत्वं, मिथुनस्योत्तरप्लवत्वम् । चेष्टाबलं तदधिपतिसमानम् अधिपतेः चेष्टाबले सति राशेरपि भवतीति । दिनकराद् द्वितीयो राशिः वेसिसंज्ञः । चकाराद् द्वादशोऽपि वासिसंज्ञ इति ज्ञेयम् ॥ २० ॥

इति होराविवृतौ पारमेश्वर्यां प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

शरीरभूतस्य राशिवर्गस्य भेदं दर्शयित्वा आत्मभूतग्रहभेदं दर्शयितुं द्वितीयाध्याय आरभ्यते —

**कालात्मा दिनकृन्मनस्तुहिनगुः सत्त्वं कुजो ज्ञो वचो**
**जीवो ज्ञानसुखे सितश्च मदनो दुःखं दिनेशात्मजः ।**
**राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः**
**सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः ॥ १ ॥**

**कालात्मा दिनकृदिति** । कालाख्यपुरुषस्य राशयः शरीरम् । आन्तरा भावा ग्रहाः । तत्र **दिनकृदात्मा** चेतनः क्षेत्रज्ञः परमात्मा च रविरेवेति यावत् । **मनः तुहिनगुः** । उपलक्षणमेतत् चित्ताहंकारावपि चन्द्र एव । **सत्त्वं** धैर्यम् आरः । **ज्ञो वचो** बुद्धिश्च **ज्ञानं सुखं च जीवः** । चकारेण शुक्रस्यापि ज्ञानसुखसंबन्धः सूत्रितः । तत्रायं विभागः — काव्यकलादिविज्ञानं वैषयिकसुखं च **मदनश्च** शुक्रः । एते च ज्ञान-सुखे स्वच्छे च गुरुः । सौरिः **दुःखं** दुःखाभावोऽपवर्गश्च । एतेषां ग्रहाणां प्राबल्ये स्वकीयानां वैशद्यम् । अन्यथा न्यूनत्वम् । शनेस्तु विपरीतम् । प्राबल्ये दुःखाभावः । अत्र चन्द्रस्य जलात्मकप्रकृतिभूतान्तःकरणाभेदोक्त्या न्यक्कारमाशङ्क्य रविणा साम्यमाह — राजानाविति । रविचन्द्रौ राशिषट्कद्वयस्याधीशौ । तत्र तयोः परस्परसंघर्षपरिहारार्थमुभयत्रैकमेव कुमारं युवराजमेतौ कृतवन्तौ । तत्र तीक्ष्णत्वात् सूर्यस्य युवराजस्यापि तैक्ष्ण्यमिति सौम्यस्य कन्याराशेः ईशत्वं कल्पितम् । चन्द्रस्य शान्तत्वात् क्रूरराशेः मिथुनस्येशत्वम् । तथा पराक्रमसचिवस्य शुक्रस्य भानुना दत्तस्तुलाधरः । चन्द्रेणापि तस्यैव वृषः । तथा बन्धुभूतस्य सेनापतेः भौमस्याभ्यां मेषवृश्चिकौ दत्तौ । तथा बुद्धिसचिवस्य गुरोर्धनुर्मीनौ दत्तौ । तथा प्रेष्याणामुपचयोऽपेक्षित इति सौरस्योपचयात्मकौ मृगघटौ दत्तौ । एतेषां प्राबल्येन दौर्बल्येन च तेषामुत्कर्षापकर्षौ ज्ञेयौ ॥ १ ॥

**हेलिः सूर्यश्चन्द्रमाः शीतरश्मि-**
**र्हेमा विद् ज्ञो बोधनश्चेन्दुपुत्रः ।**
**आरो वक्रः क्रूरदृक् चावनेयः**
**कोणो मन्दः सूर्यपुत्रोऽसितश्च ॥ २ ॥**

॥ श्रीः ॥

# ॥ उषापरिणयप्रबन्धः ॥

यद्रूपबोधसमये त्रिजगच्चरित्रं
स्वप्नोपभोगसदृशं प्रतिभाति कृत्स्नम् ।
स्पृष्टं न यन्मुनिमनोवचनैः प्रवृत्तै-
रिष्टं ददातु शिवनिर्गुणरूपि तन्नः ॥ १ ॥

यामाहुर्गिरिजा मुकुन्दसहजा पद्मा शताक्ष्यम्बिका
दुर्गा कासरवाहना[1] भवसुता भीमेति वाचंयमाः ।
भक्तध्यानसमाकृतिं त्रिजगतः सर्गादिहेतुं परां
वाणीमाश्रितकामकल्पलतिकां तां योगनिद्रां भजे ॥ २ ॥

उमेशं वैदर्भीरमणमपि दाक्षीसुतमुनिं
गुरून् वेदव्यासं शुकमपि च सन्नम्य सरसम् ।
उषायास्साश्चर्यां परिणयकथां श्रोतृसुखदां
ब्रुवे गद्यैः पद्यैः सहृदयमनोमोदनकृते ॥ ३ ॥

भूभारसंहरणकर्म स केलिभेदैः
स्वाभाविकं प्रकटयन् दनुजौघकालः ।
शोभातिरस्कृतफणीशफणौघसौध-
सौभाग्यवत् स्वपुरमध्यवसन्मुकुन्दः ॥ ४ ॥

पूर्वावतारनिकरेषु गतेषु तेषु
नैवं परां मुदमवाप स कामतातः ।
जायासहायगुरुसेवकबन्धुपुत्र-
पौत्रैर्यथा यदुपुरे निवसन् मुरारिः ॥ ५ ॥

---

१. केसरिवाहना. ख.

तत्कालेऽतिप्रशस्तस्थिरतरहरसेवातघोरप्रतापः
पुत्रो वैरोचनेः स त्रुटितरिपुबलः पूर्वदेशाधिनाथः ।
मध्याह्नातिप्रदीप्तप्रतिभयदिनकृन्मण्डलक्रान्तिदायी
सोष्मा बाणाभिधानो दनुजकुलपुरे शोणिताख्ये रराज ॥ ६ ॥

स च सकलदनुजकुलकलशजलधिशिशिरकरः परतरवरत्रितरणचतुरपुरमथनचरणकमलपरिचरणतत्परः सुरनरमुखनिखिलजननिषेव्यमाणप्रशस्ततरप्रदोपताण्डवकुण्डलिगणमण्डितखण्डपरशुपरिसरपरिलसितवरमृदङ्गसन्ताडनजनितघननिनदसन्तानतनिशमनतोतुष्यमाणसुरासुरसिद्धविद्याधरगन्धर्वभूतमातृमुखनिखिलपुररिपुपार्षदपरिषदाननगलितवचनलालितयशोनिकरः वरप्रतिग्रहप्रचोदनकरपुररिपुकारितनिजपुरगोपुरपरिपालनानन्यासीकृताखिलरिपुनिकरः सन्ततगण्डतलवान्तमदजलासिक्तधरान्तरालदिगन्तदन्तावळकुन्तपरीक्षितबलनिरतिशयशयप्रकरः हरवरप्राप्तिप्रवृद्धदुर्वारगर्वः विमानचारिणो विमानयन् पुरन्दरस्यापि पुरं दारयन् यममपि नियमयन् प्रचेतसमपि विचेतसं कुर्वन् समीरणस्यापि दुरीरणतामारचयन् मनुष्यधर्माणमनुज्झितस्वनामार्थं समर्थयन् पुरमथनमपि पुरपालमाकलयन् सहस्रकरमपि स्वकरसहस्रैर्निरस्तोस्रनिकरं विरचयन् अतिप्रवृद्धप्रबलतरभुजमण्डलकण्डूयनासहतया गिरिवरानपि करनिहननिभिः सञ्चूर्णयन् कदाचन कुमतिततिशेखरः कुटिलशशिकलाशेखरं निटिलनयनदहननिर्दग्धपुरत्रितयं त्रिलोचनमासाद्य मणिप्रकरप्रदीप्तमकुटतटसंस्पृष्टतदीयचरणतरुणाम्बुजः प्रकृष्टभक्तिभूमा निस्तुलहस्तबलधिकृतचक्रधरादिलोकचक्रः स्वभुजबलमदभञ्जनचतुराम् अतिजृम्भितडम्भसंभृतां सकलसज्जननिन्दनीयां वाचमभाषिष्ट –

चन्द्रार्धशेखर! सरोजभवाम्बुजाक्ष-
संक्रन्दनादिसुरवन्दितपुण्यकीर्ते ! ।
पुंसामभीष्टफलदे चरणाम्बुजे ते
वन्दे गिरीन्द्रतनयाकरलाळनीये ॥ ७ ॥

---

१. तोतुष्यमाणनिखिलसुरासुर ब.

दोर्दण्डैर्भवतार्पितैः पुररिपो! योद्धुं मया त्वां विना
नो पश्यामि कमप्यमर्त्यदनुजप्रष्ठ प्रथिष्ठे जने।
अद्यास्मद्भुजकाळनागनिसरच्छौण्डीर्यहालाहले-
शानस्त्वच्छ्रवणातिथिः किमु जगच्चक्रे पुमान् वर्तते ॥ ८ ॥

इति ॥

श्रुत्वातिडम्भमलिनं दनुजेश्वरस्य
भक्तस्य चापि वचनं कुपितः पिनाकी ।
ध्यात्वावलेपशमकालममुष्य भूयो
वाणीं ददौ स मददानमहाकृपाणीम् ॥ ९ ॥

दैत्येन्द्राज्ञ! भवन्मदध्वजभुजस्तम्भाः प्रकामोन्नता
वर्तन्ते सममेव ते च नमनं नीता भवेयुर्ध्रुवम् ।
तस्मै कोऽपि सुमानुपोऽतिबलवानस्मत्सदक्षो रणा-
यागन्तातिजळाननं च नमितं तच्चापवत् ते भवेत् ॥ १० ॥

इत्यपेतकपटं शिवोदितं नित्यमेव कलयन् सुनिर्वृतः ।
दैत्यलोकतिलको जगत्त्रयीं भीत्यपेतविबुधामशासयत् ॥ ११ ॥

तदनु गिरिशकारुण्यामृतासारसिन्धो-
रपरसरसिजाक्षप्राणनाथासमाना ।
सुममृदुतरगात्री पश्यदानन्ददात्री
समजनि दनुजेन्द्रात् सा ह्युषा नाम कन्या ॥ १२ ॥

यस्या गतीक्षणविलोलमना विचार्य
स्रष्टा स्वयानमकरोत् किल राजहंसम् ।
कृष्णोऽपि यत्कचसमानतनुं कलापं
धत्ते सदैव शिरसा कुतुकाकुलात्मा ॥ १३ ॥

भक्तानुकम्पिमनसा शशिशेखरेण
दत्तां च या शशिकलामळिकच्छलेन ।

धत्ते तदन्तिकनिवासविलोलमेत-
दक्ष्णोर्युगं मृगशिशोर्नयनीचकार ॥ १४ ॥

इत्यादिसुन्दरतराङ्गविभूषिता सा
नित्यं प्रमोदजननी सुकृतीक्षणानाम् ।
अत्यादृता मकरकेतनतारकाभिः
प्रत्यङ्गमाश्रितवती नवयौवनेन ॥ १५ ॥

सा च बलिसुतबहुलतरसुकृतपरिणतिर्वा समुदञ्चितपञ्चशरवञ्चनाप्रपञ्चिका वा गिरितनयादयितवरकरुणा वा पुरन्दरपुरसुन्दरीवृन्दनिन्दाकन्दली वा प्राज्यतरासुरराजराज्यश्रीर्वा कमलभवसर्गचतुरता वा गीर्वाणगणगर्वापहरणनिरतदितितनयाहृतकल्पलतिका वेति समस्तजनचित्तसन्दत्तसन्देहा चतुरतरवयस्याभिः सह निखिलजननयनानन्दनिपुणलीलालोलहृदया शृङ्गाररसाञ्चितसङ्गीतसाहित्यादिसकलकलासङ्केतभूमिः कुहचन निशायां चतुरतरसखीजनैः सह बहुतरलीलां विधाय मृदुलतरशय्याशया हृदयविशेषसुखदात्रीं निद्राभिधां सखीमसेवत ॥

वक्ष्यामि किं नियतिचित्रविधिं स यस्मात्
कन्दर्पदर्पहरसंहननोऽनिरुद्धः ।
तद्यौवनं सफलयन्नरुणाधरायाः
स्वप्ने बभूव किल सम्मिलितो निशीथे ॥ १६ ॥

विश्वास्य तां स सुहृदं स्वमतश्च हृत्वा
विश्वेप्सितं तदधरामृतमाशयंश्च ।
भृङ्गो यथा मधु सुमान्नवमालिकाया-
स्तन्व्याः स चोर इव हृद्यसुहृत्तिरोभूत् ॥ १७ ॥

मनोहराकारममुं युवानं मनोहरं स्वस्य मनोजतुल्यम् ।
मनोगतं सा ह्यवगम्य नूनं मनोऽतिशोकाभिमुखीचकार ॥ १८ ॥

तदनु सा च इतरसखीजनादप्यात्मन्यतितरस्थेमप्रेमलाभाभिलाषेणेव अतिसुन्दरकान्तिकन्दलीसन्दोहसमाहितसम्मोहनशरवरनिरीक्षणाश्लेषादिनिरतिशय-

परमानन्दसन्दायिन्यां मनोहितायां तेन सहैव तिरोहितायां निद्रायां जगत्त्रितय-विजयलब्धवर्णेक्षुचापविक्षिप्तदक्षिणतरशरनिकरैरतितराममिहन्यमाना विविक्तसं-वृत्तनरतल्लजहृद्यवल्लभगाढालिङ्गनविघटनसमुद्भतस्वेदमृदुतरतनुवल्ली तल्पदेशाद् अनल्पतरशोकभारमथिततयानुत्थायिनी निरर्गलसमुद्गलत्कज्जलमलिननयन-सलिलमेचकीकृतातिकोमळारुणतरकरारविन्दा 'हा जीवनाथ! त्वद्गतां मां निर्गतकरुणो विहाय मा निर्गच्छ, अयि मङ्गळकरनिपुणे भद्रे निद्रे! अनुद्रुतदुःखा-नलविद्रुतां मां सुद्रुतमागत्य विद्रुतदुःखां विधेहि' इत्यादि बहुतरनिरर्थकवचनानि प्रलपन्ती निजविधुरतामितरसखीभ्यो निह्नोतुमपारयन्तीं वयस्याजनेष्वप्यतिदुःखं कारयन्ती विचित्रतरचित्रलेखनाद्यतिनिपुणया स्वप्राणतुल्यया कुतूहलितचित्तया चित्रलेखाख्ययात्या सख्या सदयमेवमभापि –

दितिसुतपतिनन्दनेऽतिधन्ये !
किमिति मनो विदयं विषादवह्नौ ।
ग्लपयसि वद यत्तदप्यलभ्यं
सखि! तव हस्तगतं च विद्धि कामम् ॥ १९ ॥

करोपि यत् कामुकमार्गणं त्वं
न चोचितं सुन्दरि! तत्त्विदानीम् ।
तथापि ते वाञ्छितदानदक्षा-
मवेहि मां सन्त्यज शोकभारम् ॥ २० ॥

निर्व्याजमेतदुदितं निशमय्य सख्या
मन्देतरं स्मरशरैरभिहन्यमाना ।
स्मृत्वा तमेव शयनीयतले शयाना
लज्जाकुला निजसखीमिदमाह बाला ॥ २१ ॥

मान्याशये! सखि मनोभवसुन्दराङ्गः
श्यामो युवाम्रुतकरोपमचारुवक्त्रः ।
कश्चित्तदीक्षकवधूजनपुण्यपूरः
स्वप्ने मदीयनयनातिथितां प्रपन्नः ॥ २२ ॥

दत्त्वा स्वकीयमधरामृतमेव मह्यं
हृत्वास्मदीयहृदयं नवकेलिभेदैः ।
त्यक्त्वाद्य मां विरहरूपमहार्णवेऽसौ
क्षिप्त्वा क्षणेन विदयं च तिरोहितोऽभूत् ॥ २३ ॥

चित्रमस्य चरितं मम चित्ते
चित्रकोविदतरे! सखि भाति ।
आद्यदर्शनकलामृतदाता
सोऽद्य हृद्युषित एव च दूरात् ॥ २४ ॥

इत्यादिदुस्सहहृदयनिहितदयितविरहहालाहलज्वालाकल्लोहलविषमितामितसुषमाभरकलेवरां स्वान्तरान्निविष्टकान्तप्रतीकसन्तापपरिहरणायेव प्रतिक्षणविमुच्यमानरूक्षतराशुशुक्षणिसमाक्षेपनिष्णातोष्णळतरदीर्घनिश्वासां जगत्त्रितयविजयविज्ञतरनिजापघनबाधकपुष्पशरखचरसम्प्रीणनायेव स्वप्रेमसागरमध्यवर्तिनं सूनशरसूनुमणिमादाय हृदये गाधयन्तीम् अनिरुद्धवशंवदां निरुद्धेतरविषयमनस्सञ्चारां प्राणनाथालाभात् प्राणानपि निरर्थकान् समर्थयन्तीं रमणमरणयोरन्यतरलाभमेव मान्यं मन्वानां विलापानिव प्रलापानपि वितन्वतीं तन्वङ्गीम् उषां सा चित्रलेखा विरहविषामृतधारायमाणाभिर्मृदुतरबहुविधगीर्भिः समाश्वास्य तन्मनोगतपुरुषजिज्ञासया 'अयि! प्रियसखि! तावकीनमनोनिलीनं पुरुषमद्यैवानेतुं तम् आदिशे' त्युक्त्वा कमलविष्टरसृष्टिसंस्थितसुरासुरयक्षगन्धर्वविद्याधरकिन्नरोरश्वरनरादीन् यथावच्चित्रपटगतान् तस्यै दर्शयामास ॥

शूरसेनवसुदेवरौहिणेयाच्युतेक्षणवशात् सकौतुका ।
कृष्णसूनुमथ काममङ्गना वीक्ष्य लज्जितवती च साभवत् ॥ २५ ॥

तद्भावदर्शनमुदाकुलिता तदानीं
तस्यात्मजं च सुकुमारतराङ्गमेषा ।
सख्याशयात्तमिव चित्रपटावतीर्णं
चक्रेऽनिरुद्धमथ सा खलु चित्रलेखा ॥ २६ ॥

चित्रं विचित्रतरचित्रपटोदितेऽस्या
हस्तैरवापधिपतौ यदुपुङ्गवेऽस्मिन् ।
तस्या मुखादयमयं कमिनेति वाणी-
रूपामृतं समजनि स्मितकौमुदी च ॥ २७ ॥

तदैव जातश्शीतोष्णगुणतन्नेत्रजन्मनाम् ।
बहिरन्तर्वियियासूनामश्रूणां सङ्गरो महान् ॥ २८ ॥

यद्दर्शनात्ययविषादभरेण पूर्वं
तस्या नतं सरसिजोपममाननं तत् ।
लज्जाभरेण खलु नम्रमभूदुषाया-
श्चित्रेक्षितेऽपि रमणे वदनं तदेव ॥ २९ ॥

स्वप्नोपलब्ध[1]धरमणानुपलब्धिखिन्ना
चित्रोपलब्धदयिता सुखिनेति युक्तम् ।
युक्तं न तद् भुवनसुन्दरमात्मनाथं
तुष्टेन नावहदसौ हृदयेन बाला ॥ ३० ॥

चित्रगोऽपि दयितः स्मरबाणाद्रक्षितुं स्वरमणीमिव चक्रे ।
उच्चलत्पुळकवर्मनिगूढामुच्चकैः प्रकटयन् दयितत्वम् ॥ ३१ ॥

ततश्च उत्तरसमयसम्भाव्यमानचित्तमहोत्सवकरचित्तजसङ्गरचिततरनव-नाटकप्रयोगोचितरङ्गालङ्कारकरसूत्रधार[2] इव उपाहृदयलेपथ्यात् चित्रलेखाविरचित-तत्समुचितमण्डनमण्डिते चित्रपटरङ्गमण्डपाहिण्डिते भुवनैकसुन्दरे कन्दर्प-नन्दने अनन्यजवेषभूषादेदीप्यमाननायकालोकनाभिलाषातिशयविवशीभूतसुर-रिपुनायकनन्दिनीसुन्दरनयनपरिषत्समादिष्टा नेदीयसो दवीयसोऽन्यथाविरचितु-मपि विदग्धा योगिनी सा चित्रलेखा तत्प्रसञ्जनमिव[3] 'अयि सुन्दरीबृन्दकुन्तळ-

---

१. स्वप्नोपभुक्त. २. निपुणसूत्रधार. ३. तत्प्रसञ्जनपद्यपठनमिव- घ..

जगतामिति । हे **देवाः! जगतां** लोकानां, **पाता** रक्षिता **शिवः, त्रिपुरवासिपाताय** त्रिपुरवासिनां तारकाक्षादीनां पाताय, **प्रसादनं** प्रसादं, **यातः** । त्रिपुरवासिनोऽसुरानहं वधिष्यामीति प्रतिज्ञातवानित्यर्थः । **अत** एतस्मात् प्रसादप्राप्तेर्हेतोः, **तस्य** जगत्पातुः, **वाहे** अश्वे, **धनुषि** चापे, **शरे** इषौ, **च उद्यमं** उद्योगं, कुरुत । वाहधनुश्शरादीनां साधारणं विशेषणमाह— **अमन्द** इति । **अमन्दे** अनल्पे ॥ १२ ॥

सम्पादितसाधनानामस्माकं यत्नमन्तरेणान्यत् किञ्चित् न फलति इति न शङ्कनीयमित्याह—

**सत्सु शरासज्येषुप्रभृतिषु करणेषु हरकरासज्येषु ।**
**दानवराजानीतः स्वक्लेशो नष्ट इति सुराः! जानीत ॥ १३ ॥**

सत्स्विति । हे **सुराः** देवाः, **हरकरासज्येषु** हरकरग्रहणयोग्येषु, **शरासज्येषुप्रभृतिषु** शरासो धनुः ज्या गुणः, इषुः शरः तत्प्रभृतिषु तदाद्येषु, **करणेषु** युद्धोपकरणेषु, **सत्सु** भवत्सु, **दानवराजानीतः** दानवराजैस्तारकाक्षादिभिरानीतः, आसादितः । सम्पादित एवेत्यर्थः । **स्वक्लेशः** स्वेषां देवानां युष्माकं क्लेशः पीडा, **नष्टः** अदर्शनं कृतमिति **जानीत** बुध्यध्वम् ॥ १३ ॥

अथ देवाः किं कृतवन्त इत्यत्राह—

**इति ते शैलादिवचः श्रुत्वा शोकाद् व्यपेत्य शैलादिव च ।**
**त्वष्टुः सदनं तरसा ययुस्तिरोगे भवे च सदनन्तरसाः ॥ १४ ॥**

इतीति । **ते** देवाः, (शिवे भवे) रुद्रे, **तिरोगे** तिरोधानं गते, **इति** उक्तप्रकारेण, **शैलादिवचः** शिलादस्यापत्यं शैलादिः नन्दीश्वरः तस्य वचः, **श्रुत्वा** अत एव **शैलादिव** स्थिरत्वमहत्त्वादिना पर्वतसदृशात्, **शोकात्** असुरपीडाहेतोः शुचः, **व्यपेत्य** अपेता भूत्वा, **च तरसा** वेगेन, **त्वष्टुर्देवशिल्पिनो** विश्वकर्मणः, **सदनं** भवनं, **ययुः** गतवन्तश्च । कीदृशाः । **सदनन्तरसाः** सद् विशिष्टः अनन्तो निरवसानो रसः सुखं येषां ते तथा ॥ १४ ॥

देवाः रथनिर्माणे त्वष्टारं नियुक्तवन्त इत्याह—

**द्विषतां तोदे शम्भो रतस्य तेषां यियासतो देशं भोः ।**
**कुरु रथमस्य त्वष्टः श्रेष्ठं काष्ठाश्च कृच्छ्रमस्यत्वष्ट ॥ १५ ॥**

द्विषतामिति । भो त्वष्टः! विश्वकर्मन्! **अस्य** प्रकृतस्य, **शम्भोः** सुख-कारणस्य, **रथं** स्यन्दनं, **कुरु** सम्पादय । कीदृशस्य । **द्विषतां** जगदपकारिणाम् असुराणां, **तोदे** वधे, **रतस्य** अभिनिविष्टबुद्धेः, अत एव **तेषां** द्विषतां, **देशं** पुरत्रयसमागमस्थानं, **यियासतः** गन्तुमिच्छतः । कीदृशं रथम् । **श्रेष्ठमुत्कृष्टम्** । शम्भोरारोहणक्षममित्यर्थः । एतत्तु न केवलमस्मदुपकारकमपि तु सर्वेषामप्यु-पकारकमित्याहुः— **काष्ठा** इति । **कृच्छ्रं** दुःखं कर्तृभूतम् **अष्ट काष्ठाः** अष्ट-संख्याका दिशः, **अस्यतु** त्यजतु । रथादिकरणस्यासुरवधोपायभूतत्वेन निखिलस्यापि दुःखस्य निवर्तकत्वादिति भावः ॥ १५ ॥

त्वष्टा च देवनियोगमङ्गीचकारेत्याह—

**इति भासुरया च नतः शिल्पिक्रियया जगत्सु सुरयाचनतः ।**
**रणभूमिष्वासाद्यं यद्वस्त्वकरोत् स सर्वमिष्वासाद्यम् ॥ १६ ॥**

**इतीति** । **इति** उक्तप्रकारेण, **सुरयाचनतः** सुराणां याचनात् प्रार्थना-द्धेतोः । देवनियोगादिति यावत् । (**सः** त्वष्टा) **यद् रणभूमिषु युद्धप्रदेशेषु, आसाद्यं** प्राप्यं, **वस्तु इष्वासाद्यं** धनुरादिकं, **तत् सर्वमकरोत्** उत्पादितवान् । त्वष्टारं विशिनष्टि – **भासुरेति** । **भासुरया** शोभनशीलया, **शिल्पिक्रियया** शिल्पिनां तक्ष्णां क्रियया कौशलेन, **नतः** शिल्प्यन्तरेण प्रणतः । शिल्पक्रिययेति वा पाठः । लोकोत्तरवस्तुरचनाचतुरयेत्यर्थः ॥ १६ ॥

अथ चतुर्भिः श्लोकैः त्वष्टा रथादिरचनायां लोकविलक्षणं वस्तूपादत्त-वानित्याह—

**वेदांश्चक्रे चतुरः सोऽश्वान् शशिभास्करौ च चक्रे चतुरः ।**
**रथमकृतावन्यायं योगिजनस्यावलम्ब्य तावन्न्यायम् ॥ १७ ॥**

**वेदानिति** । **सोऽयं** देवनियोगाद् रथादिरचनामारभमाणः त्वष्टा, **योगिजनस्य** योगश्चित्तवृत्तिनिरोधः तद्वतो जनस्य, **न्यायं** नीतिम् आलम्ब्य, **तावदाश्रित्यैव** । तावच्छब्दोऽवधारणे । **चतुरः** चतुस्संख्याकान्, **वेदान्** ऋग्यजुस्सामाथर्वलक्षणान्, **अश्वान्** हयान्, **चक्रे** कृतवान् । वेदानश्वतया परिणमितवानित्यर्थः । **शशिभास्करौ** चन्द्रादित्यौ, **चक्रे** रथाङ्गे । चक्रे इत्यनुषज्यते । **अवन्या** भूम्या, **रथं** स्यन्दनम्, **अकृत** । रथत्वे भूमिं कल्पितवानित्यर्थः । कीदृशः । **चतुरः** विदग्धः । तस्य किं न शक्यमिति भावः । यथा अणिमादिसिद्धिमन्तो योगिनः सङ्कल्पमात्रेणाभिमतं साधयन्ति तथा त्वष्ट्रापि सङ्कल्पमात्रेणैव वेदादिभिरश्वादिकं निरमायीत्यर्थः ॥ १७ ॥

**स ज्ञानी चापाय स्मृतवानद्रीन्द्रमिष्टनीचापायः ।**
**अकृत तदासज्या या स्थाने संवत्सरं तदा स ज्यायाः ॥ १८ ॥**

**स इति** । (स) त्वष्टा **चापाय** चापं कर्तुम्, **अद्रीन्द्रं** हिमवन्तं, **स्मृतवान्** । कीदृशः । **ज्ञानी** सारासारवस्तुपरिज्ञानी । **स तदा** तस्मिन्काले, **या तदासज्या** तस्मिन् धनुषि आसज्या संसर्गयोग्या तस्याः **ज्यायाः** मौर्व्याः, **स्थाने**ऽवकाशे, **संवत्सरम**होरात्राभ्याम् अवयवोपेतं कालम्, **अकृत** **कृतवान्** । संवत्सरात्मकं कालं गुणत्वेन कल्पितवानित्यर्थः ।

"स्थानं क्लीबे नरेऽप्यन्ये प्राहुर्गेहावकाशयोः ।
सम्बन्धभेदे जन्तूनां स्यान्निवृत्तिप्रसङ्गयोः ॥

अपकर्षे च सादृश्ये क्लीबं तु स्थितिकर्मणि ।
एकारान्तं पुनः केचित् स्थाने इत्यव्ययं विदुः ॥

युक्तार्थे कारणार्थे च तन्नेह ब्रूमहे वयम् ।
शब्दभेदादवस्थाय स्थाने ना भुवि ॥"

इति **केशवः** । अत्र रात्र्या त्र्यंशात्मको हि संवत्सरः (?) । तत्र रात्र्यंशं ज्यात्वेन कल्पितवानित्यवगन्तव्यम् । कीदृशः । **इष्टनीचापायः** इष्टः

अभिमतः नीचानां दुष्टानामपायो नाशो यस्य स तथा । न केवलं देवाङ्गैवास्य रथादिनिर्माणे प्रयोजिका अपि तु सुरपीडायाः स्वेनाप्यनुभूयमानत्वात् स्वेच्छापि प्रयोजिकेति भावः । ननु भुजङ्गराजो हि भगवद्धनुषो ज्यात्वमुपगतवानिति केचित् कथयन्ति । उक्तं च लैङ्गे—

'शैलेन्द्रं कार्मुकं चक्रे ज्या भुजङ्गाधिपः स्वयम् ।'

इति । तत्कथमत्र संवत्सरस्य ज्यात्वमुक्तम् । उच्यते— संवत्सरस्यापि ज्यात्वमस्त्येव । तदपि लैङ्ग एवोक्तम्—

'काळरात्र्या तथैवेह तथेन्द्रधनुषा पुनः ।'

इति । तत्र काळरात्रिरिति रात्र्यंश उच्यते । तदनुसारेणेदं ज्याकथनम् ॥ १८ ॥

**जगदहितोदग्राहङ्कृतिकृत्यै पद्मजं प्रतोदग्राहम् ।**
**तोत्रं समतनुतारं तस्यैव तटिद्गुणेन समतनुतारम् ॥ १९ ॥**

**जगदि**ति । अत्र प्रकृतत्वात् त्वष्टेति कर्ता सिध्यति त्वष्टा **जगदहितोदग्राहङ्कृतिकृत्यै** जगतो लोकस्य, येऽहिताः शत्रवः असुराः तेषां उदग्राया जगत्पीडाहेतुत्वात क्रूरायाः अहङ्कृतेर्गर्वस्य कृत्यै छेदनाय । असुरवधायेति यावत् । **पद्मजं** ब्रह्माणं, **प्रतोदग्राहं समतनुत** अकरोत् । प्रतोदं तोत्रं गृह्णातीति प्रतोदग्राहः । ब्रह्माणं सारथिं कल्पितवानित्यर्थः । **तस्यैव** पद्मजस्यैव । एवकारः पौनर्वचनिकः । **तारं** प्रणवम्, **तोत्रं** प्रतोदं, समतनुत । च शब्दोऽर्थाक्षिप्तो वेदितव्यः । तोत्रस्थाने प्रणवं कल्पितवानित्यर्थः । कीदृशं तारम् । अरमत्यर्थं, **तटिद्गुणेन** विद्युद्दाम्ना, **समतनु** तुल्याकारं वेदसारत्वेनोज्ज्वलरूपत्वात् ॥ १९ ॥

**परमं धामानन्तं यः खल्वकरोच्छरं त्रिधामानं तम् ।**
**शम्भुकराक्षेपं के विषहेरन्नसति पुष्कराक्षेऽपङ्के ॥ २० ॥**

**परम**मिति । स तं **त्रिधामानं** विष्णुं, शरमिषुमकरोत् । त्रिधामानं विशिनष्टि— **परम**मिति । **यः** त्रिधामा **परमं** विश्वाभासकानां सूर्यादीनामप्याभासकत्वादुत्कृष्टं, **धाम** परब्रह्मादिशब्दाभिधेयं तेजः, (**अनन्तम्** अन्त-

रहितम्,) खलु । प्रसिद्धौ खलुशब्दः । अतः परं कः शरस्योत्कर्ष इति भावः । नन्वन्येषु विद्यमानेष्वखिलेश्वरं विष्णुं कुतोऽसौ शरत्वेनाकल्पयदित्यत्राह— **शम्भुकरे**ति । पुष्कराक्षे विष्णौ, असति शरत्वेनाविद्यमाने, **के** शरत्वेन कल्पिता, **शम्भुकराक्षेपं** शम्भोश्शिवस्य करेण य आक्षेपः पीडनं तं विषहेरन् । न केऽपि । शम्भुकराक्षेपं सोढुं सर्वेऽप्यसमर्था एव । तत्र विष्णुरेव समर्थ इत्यर्थः । तत्र हेतुरपङ्क इति । अपङ्के दोषरहिते ॥ २० ॥

अथ देवाः किं कृतवन्त इत्यत्राह—

**तस्यैवं धन्यस्य त्वष्टृकृतस्यायुधप्रबन्धं न्यस्य ।**
**नमनमधुर्धूरन्ते रथस्य विबुधा विकीर्य धुर्धूरं ते ॥ २१ ॥**

**तस्ये**ति । ते निर्मापितयुद्धोपकरणाः, **विबुधाः** देवाः, **आयुधप्रबन्धं** आयुधानां धनुरादीनां प्रबन्धं परम्परां, **न्यस्य** रथे स्थापयित्वा, **एव**मुक्तप्रकारेण, **त्वष्टृकृतस्य** विश्वकर्मनिर्मितस्य, **धन्यस्या**वन्यादेरुपादानत्वादुत्कृष्टस्य, **तस्य** शिवारोहणक्षमतया निर्मापितस्य **रथस्य**, **धूरन्ते** धुरः यानमुखाख्यो रथावयवविशेषस्तस्य अन्ते समीपे । रथपुरोभाग इति यावत् । धुर्धूरमुन्मत्ताख्यं पुष्पविशेषं, **विकीर्य** विक्षिप्य, **नमनं** नमस्कारं, **अधुः** कृतवन्तः । रुद्रायेति शेषः । ननु व्याङ्पूर्वत्वाभावे कथं दधातेः करणार्थत्वम् । उच्यते—

धारणवत् करणमपि दधातेरेवार्थः । उपसर्गास्तु धातुलीनमर्थं द्योतयन्त्येव न तु धात्वर्थात् पृथक् कञ्चिदर्थमभिदधति । न चात्र द्योतकाभावे कथं द्योत्यार्थप्रतीतिरिति वाच्यम्, उपपत्तिवशादेव तत्प्रतीतेः ।

'धूः स्त्री क्लीबे यानमुखं स्याद्रथाङ्गमपस्करः ।'

इत्य**मरः** ।

ततः किमासीदित्यत्राह—

**अघशतघस्मरहासस्फुरितमुखाम्भोरुहोऽनघः स्मरहा सः ।**
**ददृशे पुरतोदेऽवास्थितधीरिथ सुरगणेन पुरतो देवः ॥ २२ ॥**

**अघशतेति** । अथ नमस्कारानन्तरं, **सुरगणेन** देवसमूहेन, यत्प्रत्यक्षीकरणाय देवा नमश्चक्रुः स **देवः** शिवः, **पुरतो**ऽग्रभागे, **ददृशे दृष्टः** । कीदृशः । **अनघो** निष्पापः निखिलद्वैतातीतत्वात् । अत एवा**घशतघस्मरहासस्फुरितमुखाम्भोरुहः** भक्तजनानां यदघशतं अघानां पापानां शतमनेकं तस्य कर्मभूतस्य घस्मरेणादनशीलेन हासेन देवान् प्रति प्रसादचिह्नेन मन्दहासेन स्फुरितं शोभितं मुखाम्भोरुहं पद्ममिव मुखं यस्य स तथा । हासस्फुरितत्वं मुखधर्मत्वात् रूपकपरिग्रहे बाधकतां प्रतिपादयति । **पुरतोदे** पुरत्रयमर्दनेऽ**वस्थितधीः** निगूढबुद्धिः । मुखप्रसादेनानुमेयमिति भावः । **स्मरहा** स्मरं कामं हतवान् इति । ब्रह्मादिमशकान्तैरखिलैरपि प्राणिभिरजयः कामः तस्यापि जेतुः शिवस्य पुरत्रयविजये कियती दुष्करतेति भावः ॥ २२ ॥

अथ हरः कर्तव्यतान्तरे देवान् नियुक्तवानित्याह—

**मनसा सुरसमुदायं नतमीशानः समीक्ष्य सुरसमुदा यम् ।**
**अवदत् पूरन्तरतः पशवो मे भवत वैरिपूरं तरतः ॥ २३ ॥**

**मनसेति** । **पूरन्तरतः** पुरामन्ते नाशे रतः सक्तचित्तो, **यं** प्रत्यक्षीभूतम्, **ईशानः** शिवः, **मनसा** हृदयेन, **समीक्ष्य** सर्वप्राणिसाधारणोऽहं देवप्रियार्थं कथमसुरान्निगृह्णीयामिति निरूप्य, **नतं** प्रणतं, **सुरसमुदायं** देवसमूहम्, **अवददुक्तवान्**। मनो विशिनष्टि—**सुरसमुदे**ति । शोभनो रसोऽतिशयो यस्या सा सुरसा, सुरसा मुद् प्रीतिः यस्य तत्तथा । देवेष्वत्यर्थं प्रसन्नेनेत्यर्थः । उक्तिप्रकारं दर्शयति— यूयं **वैरिपूरं** पूरशब्दस्य नद्या जलवृंहणं मुख्योऽर्थः । स च समूहविशेषः समूहसामान्यं लक्षयति । मुख्यार्थबाधः स्फुट एव । सामान्यविशेषभावः सम्बन्धः । लक्ष्यार्थस्य दुर्निवारप्रसरत्वप्रतीतिः प्रयोजनम् ।

"अथ पूरो ना नद्याः सलिलवृंहणे ।
पुनर्नवायां नृ स्त्री तु पूर्वौ पूरी तु सा स्त्रियाम् ।

अथ युवतिभिराशीर्वर्धितायाः सुताया
यदुनरपतिकेतोरिष्टलब्ध्यै बियासोः ।
नृपतिशतसहस्रे तत्र धात्री पुरस्ता-
दजनि सपदि काचित् कीर्तिवद्राजलक्ष्म्याः ॥ ६६ ॥

॥ इति शिवविलासे षष्ठः सर्गः ॥

---

## ॥ अथ सप्तमः सर्गः ॥

सा तां पुरस्कृत्य शनैः प्रगल्भां कादम्बिनीयुक्तशतह्रदाभा ।
व्यालोकयत् तां समितिं नृपाणां व्याख्यां यथा शास्त्रगतिं गभीराम् ॥१॥

वीर्यं तपो देशमपि द्विजानां राज्ञां च विद्याभिजनादिकं च ।
बाला पृथक् तद्वदनान्निशम्य व्यावर्तितास्या विचचार रङ्गे ॥ २ ॥

दृष्ट्वैव तां भूमिभृतोऽभिमानं सन्तत्यजुः सर्वगुणोपपन्नाम् ।
ये ये निरस्तास्त्वनया पुनस्ते वैलक्ष्यशोकान्धधियो बभूवुः ॥ ३ ॥

कामः शरानेष्वपि शातधारानन्येष्विवाकर्णततान् मुमोच ।
किन्नाम भोः कर्कशमानसानां पुण्योज्झितानां भुवनेष्वकार्यम् ॥ ४ ॥

रूपेण लक्ष्म्या विभुलीलया च तस्या जिताश्चाप्यवनीभृतोऽन्ये ।
कर्माणि चक्रुः प्रविलोभनानि रागार्दिता राजवरात्मजायाः ॥ ५ ॥

उच्छोटिकेनैककरेण भृत्यात् सङ्गृह्य ताम्बूलमथापरेण ।
सन्ताड्य सन्ताड्य सलीलमंसे सम्भावयामास वयस्यमेकः ॥ ६ ॥

भद्रेन्द्रनीलाश्ममहासमुद्रात् कर्पूरखण्डान्यसकृत् प्रकाश्य ।
सक्ताङ्गुलीयौघमणिद्युतीनि चिक्षेप मन्दं प्रमुराननेऽन्यः ॥ ७ ॥

काञ्चीं श्लथां वेष्टनपट्टगूढां प्रौढां कटीतः कटकोत्कटेन ।
हस्तेन मध्यावधि रत्नदीप्तामुद्धृत्य कश्चिन्मुहुरुज्जजृम्भे ॥ ८ ॥

अङ्के वितन्वन्नपरः शिरस्त्रं हिन्तालसान्द्रस्तबकोपमानान् ।
पीनायताभ्यां दुधुवे भुजाभ्यां केशान् पिनद्धोद्रुरुगङ्गदाभ्याम् ॥ ९ ॥

निस्त्रिंशमुद्यम्य शुभं सकोशं चर्माथ निर्माय च वामबाहुम् ।
आकाशमेकः प्रजहार शत्रुमावार्य तच्छस्त्रधिया तदेव ॥ १० ॥

वेत्रासिमेको विदधत् प्रवाळं व्यापारयन् वाममथोर्ध्वमाशु ।
अन्येन दोष्णा शयकम्पितायां तन्त्र्यां ततानाङ्गुलिघट्टनानि ॥ ११ ॥

सूक्तान्यपास्तार्गळमीरितानि गान्धर्विणा कश्चन सेवकेन ।
मूर्धानमाकम्प्य मुहुर्मुहुः स्वमास्वादयत् सस्मितमात्तलीलः ॥ १२ ॥

सख्युर्दधद् दक्षिणबाहुमंसे सव्यं तथापाश्रयमूर्ध्नि भव्यम् ।
ऊरुं स्वमन्यो मृदु मुष्टिपातैरुद्घोषयामास निषेवकेण ॥ १३ ॥

संशिक्षयन् व्यग्रमनाः करेण चेलाञ्चलश्मश्रुमुखान्यजस्रम् ।
अन्यः समालोकयदात्मदर्शमाकेकरालोकितदृष्टलोकः ॥ १४ ॥

एकः स्मरातङ्कमपह्नुवानः सञ्चारयन्नङ्गुलियुग्ममग्रे ।
सम्मन्त्रयामास किल स्वकार्यं गाम्भीर्यशाली सचिवोत्तमेन ॥ १५ ॥

कश्चित् स्वकक्ष्याधृतयोगपट्टः स्पष्टं कराभ्यां विरचय्य ताळम् ।
अन्वीक्ष्य वक्षोसमनेकशः स्वं कन्यामुदासीनवदभ्यपश्यत् ॥ १६ ॥

कृत्वा सखायं प्रतियोगिभावे प्रक्रान्तकेळीचतुरङ्गयुद्धः ।
वक्रं पदव्यां नृपनन्दनाया दृष्टिं ददौ कश्चिदनङ्गदीनः ॥ १७ ॥

जम्बीरकेरक्रमुकप्रसूनपत्रादिभिः स्वं पटिमानमन्ये ।
सन्दर्शयामासुरुपान्तसंस्थैर्धूर्तैः स्तुताः केलिकलाभियुक्तैः ॥ १८ ॥

इत्यादिनानाविधचेष्टितौघैः अख्यापयत्स्वेषु धृतेर्विधूतिम् ।
विद्या विनीत्येव रमेव नीत्या धात्र्या कुमारी तमियाय देशम् ॥ १९ ॥

सा त्वर्धमात्रोदित एव तेषां धात्र्या स्वरूपे सदने गुणानाम् ।
आस्थां विनालोक्य सकृत् प्रभूंस्तान् गच्छेति नीचैः समचोदयत्ताम् ॥२०॥

पर्युत्सुका या गगनस्रवन्त्या दीप्रेण माणिक्यसरोरुहेण ।
सा राजहंसी किमुपैति तृप्तिं सामान्यसौगन्धिककैरवाद्यैः ॥ २१ ॥

तद्वाचमाकर्ण्य ततोऽधरीणान् धात्री प्रभून् पर्यहरत् समांश्च ।
उत्कर्षभाजस्त्वथ सङ्ग्रहोक्त्या विज्ञापयामास मुखं निरीक्ष्य ॥ २२ ॥

दोषान् न साकीर्तयदत्र कस्याप्यूचे गुणान् सारवतो बहूंश्च ।
द्वित्रांस्तु पूर्वांस्तुतिगर्भलीनांस्तत्राखिलेष्वध्वनयच्च सत्यान् ॥ २३ ॥

दोषास्तयोक्ता यदि तैर्गुणोऽद्वयः प्रासावि तीक्ष्णैर्मणिवत् फणीन्द्रैः ।
दोषो गुणस्तद्वदिते ततोऽन्यो दोषो गुणो वेति विचारणीयः ॥ २४ ॥

श्लोकैरुपेता नरपालनद्धैः शृङ्गारवीराद्भुतसन्तता च ।
सद्वृत्तरम्योरुतरार्थसर्गा सत्काव्यवद् वाग् विबभौ तदीया ॥ २५ ॥

तेषां गुणान् कोशबलादिकं वा धात्रीं नृपाणां विनिवेदयन्तीम् ।
कोऽसौ महस्वीति शनैः प्रसन्ना पप्रच्छ कन्यान्यतमं नरेन्द्रम् ॥ २६ ॥

पृष्टोऽनयायं किमिति क्षितीशो यः सम्भ्रमात् प्रैक्षि तदा तदानीम् ।
तेजो महत् तस्य मृगेक्षणाया दृष्टिश्च तन्निर्णयहेतुरासीत् ॥ २७ ॥

स्तम्भस्य हैमस्य तटित्प्रभस्य मूले मृगेन्द्रासनसन्निविष्टम् ।
तं राजसिंहं यदुराजपुत्र्यै धात्री ततः सादरमाचचक्षे ॥ २८ ॥

स्थाने तवैतत् कुतुकं मृगाक्षि! भूयोऽपि मे त्वं नुतिपात्रमासीः ।
बीजं यदुप्तं फलमप्यमुष्य शीलं भजेन्नो विचिकित्सनीयम् ॥ २९ ॥

आकर्णयोच्चैः प्रविवृत्य कर्णौ भूपं भुवो मण्डनभूतमेनम् ।
आदित्यधाम्नोऽप्रघनेऽस्य लीना विश्वे गुणा नैव दृशैव दृश्याः ॥ ३० ॥

अध्यासते केरळभूभृतो यां यस्या यथार्थैव महोदयाख्या ।
रामावनौ मुख्यतमा पुरी या तामावसत्येष दिवं वृषेव ॥ ३१ ॥

मन्ये स रामोऽप्ययमेव रामवर्माह्वयः क्षत्रमहोनिधानम् ।
आज्ञाकृतामप्यमितत्विषोऽस्य भ्रूक्षेपवश्यैव पुरन्दरश्रीः ॥ ३२ ॥

निस्सीममाहोदयसद्मनोऽस्य दक्षोत्तरोद्देशविसारि तेजः ।
नान्योऽत्र हेतुस्तत एतदीयः ख्यातो बहुव्याप्तितयान्ववायः ॥ ३३ ॥

शस्त्रास्त्रशास्त्रातिशयादशेषक्षत्रश्रियः क्षेत्रवदीक्षितस्य ।
यस्योचितैः सृष्टिमुखैस्त्रपेरन् व्यस्ताक्रिया ब्रह्ममुखा जनेषु ॥ ३४ ॥

उत्साहतः शश्वदुदस्तशत्रोस्त्यागाधिकत्वाच्च समस्तपात्रे ।
विश्वोत्तरं यं कथयन्ति वीरोदाराख्ययाराध्यमतिं कवीन्द्राः ॥ ३५ ॥

न्यक्षेण संलक्षितलक्षणौघलक्ष्यः क्षमी रक्षितसंश्रितश्रीः ।
लक्ष्म्याः सुतः पश्य स रामवर्मा लक्ष्मीवतोऽमुष्य तु भागिनेयः ॥ ३६ ॥

आधावतानेन धुतासिचर्मभीमोरुबाहायुगळार्गळेन ।
शूरा निकृत्ता युधि शत्रुवीरा नाशेऽप्यशेषा द्विगुणीभवन्ति ॥ ३७ ॥

मत्तेभकुम्भप्रविदारणोत्थैर्मुक्ताफलैरस्य रणे रिपूणाम् ।
चित्रा सरक्ता प्रतिभाति भूर्द्यौः पृक्तेव तारौघपितृप्रसूभ्याम् ॥ ३८ ॥

औदार्यकल्पद्रुमकीर्तिपुष्पसौरभ्यधाराजुषि सर्वतोऽस्य ।
वैरिक्षमाभृन्मलिनायशांसि भृङ्गा इवोत्का भुवि सञ्चरन्ति ॥ ३९ ॥

अर्थित्वमेतेन धनैर्मृगाक्षि! सन्तर्पितानां भुवि दुर्विधानाम् ।
जानामि नैसर्गिकमस्य भूयोऽप्यायूंषि भूयांसि यदर्थयन्ते ॥ ४० ॥

नामन्त्रमुद्योगमसौ वृणीते तन्मन्त्रकर्माप्यतिगूढमेव ।
विज्ञायते तत् स्वपरात्मदृष्टैः कार्यैः सुखैः प्राक्सुकृतं यथैव ॥ ४१ ॥

सम्पन्निधेरस्य समग्रबन्धोर्दुर्लङ्घभावाद् धुतविन्ध्यसिन्धोः ।
सन्ध्येकसन्धैर्विमतैर्व्यधायि वन्ध्यैव धीर्विग्रहनीतिशास्त्रे ॥ ४२ ॥

शस्त्राद्धि शास्त्राण्यधिकानि शब्दाच्छस्त्रक्रिया यत्खलु शास्त्रमूलाः ।
अर्थाधिकत्वं च ततस्ततोऽसौ क्लिश्यत्यहो शास्त्रकुले ततोऽपि ॥ ४३ ॥

यावत् खरत्वं विमतेषु नास्य सौम्यत्वमेतेष्वपि तावदेव ।
कर्षेदसून् गर्वजुषाममीषामेभ्योऽर्पयेत् स्वैः सह तान् नतेभ्यः ॥ ४४ ॥

कीर्त्यैव मूर्त्यास्य न मर्त्यलोको द्वाभ्यां सुखी दिव्यजनोऽभविष्यत् ।
दत्ताभयेऽनेन दयाधनेन वार्ता पदं चेद् विपदां व्यधास्यत् ॥ ४५ ॥

शक्तिः क्षमाशौर्यवती निसर्गा ज्ञानञ्च वाग्मित्वदयानुविद्धम् ।
अश्लाघितास्तिक्ययुतञ्च दानं त्रैगुण्यमेकैकगुणे ततोऽस्य ॥ ४६ ॥

भूरिश्रुतोपात्तविनीत्यदीननानागुणोत्कर्षभुवा परेण ।
लोकानुरागेण च विक्रमेणाप्यापादितश्रीरयमेव लोके ॥ ४७ ॥

किं चित्रमस्मिन्नतिगौरवेऽस्य संक्षिप्तनिश्शेषपितामहाण्डम् ।
अन्तर्निवेश्यैव परेशरूपं संविन्मयं संसृतिमश्नुतेऽसौ ॥ ४८ ॥

सेनातपत्रादि विभोरमुष्य सङ्ग्रामधूर्धूतकलाविनोदः ।
वीर्याम्बुधेरस्य मृधे विरोधी को नाम भिष्येत् क्षुभिताशयस्य॥ ४९ ॥

दृष्ट्या दहेद्देवचमूं प्ररुष्टः प्रस्फोटयेन्मुष्टिभिरद्रिकूटान् ।
कल्पाम्बुधेरादिवराहवच्च प्रक्षोभयेत् तोयमयन्त्रितोऽयम् ॥ ५० ॥

अज्ञानवृक्षाशनिसन्निपातः प्रख्यातिवल्लीमणिकल्पशाखी ।
कस्यैष पश्यादरभून्न लोके शस्त्रोपजीविव्रजचक्रवर्ती ॥ ५१ ॥

स्तोष्यामि भद्रे! कियदुक्तिमार्गैर्व्यस्तैरलं नात्र विकल्पलेशः ।
स्वप्राभवाक्रान्तविधातृविष्णोस्तस्यैष पुंसः कलये कलैका ॥ ५२ ॥

यादृक् स्त्रियो रूपमिदं तवास्य तादृक् च पश्यामि नृपस्य पुंसः ।
ज्योत्स्ना यदि त्वं विधुरेष नूनं भास्वानथो चेद्भवती दिनश्रीः ॥५३ ॥

नायं महात्मा कृतवान् विवाहमालोहिताक्षः सुमुखः सुवक्षाः ।
त्वं कन्यका सर्वगुणप्रकाशा श्रीमानसौ पञ्चकपञ्चकायुः ॥ ५४ ॥

आयुष्मतोऽप्यस्य तवापि वत्से! दूरस्थितिर्नाभिमता ममेयम् ।
हेमस्य वा चारुविभूषणस्य माणिक्यमुख्यस्य च कः समोऽन्यः॥ ५५ ॥

नैतादृशः सुन्दरि! मर्त्यलोके भूतो न भावी न पुमान् भवन् वा ।
मुञ्चेदमुं चेद् भवती भवित्री लक्ष्मीश्च साक्षात् पृथगम्बुजाक्षात् ॥ ५६ ॥

कामः प्रसूनं धनुषि प्रकामं सौरभ्यवत् सम्प्रति सन्दधीत ।
भूभृद्गणानिन्द्र इव प्रभिन्दंस्त्वामप्यसौ किञ्चन सन्धुनातु ॥ ५७ ॥

विरम विरम मुग्धे! लज्जितात् सज्जनाना-
मुपनतिषु सपर्यासाहसं नैव दोषः ।
अपितु स गुण एव स्यादिहामुत्र चापि
प्रथितपरमनिर्वाणाशिनिर्व्याजहेतुः ॥ ५८ ॥

सुतनु किल रसोऽसौ पश्य शृङ्गारनामा
मिथुनमपि लघीयः संश्रयन्नग्र्य एव ।
भुवनतिलकयोर्वा सङ्गमादङ्गजाद्राङ्
भवतु स रसचक्रे साम्प्रतं सार्वभौमः ॥ ५९ ॥

मतमिति मम भद्रे! विस्तरात् कीर्तितं ते
जनविविधरुचित्वान्नैतदेव प्रमाणम् ।
इह तु न यदि तृप्तिः साधु गच्छाव भूयो-
ऽप्यथ यदि शिवमस्तु प्राप्य सम्भावयेथाः ॥ ६० ।

इति परिषदि धात्र्यां सस्मितं व्याहरन्त्यां
यदुनृपतिकुमारी कातरा वेपमाना ।
विनमितमुखमस्याः पृष्ठतोऽङ्गुष्ठकोट्या-
प्यलिखदवनिमुद्यत्स्वेदरोमोद्गमाङ्गी ॥ ६१ ॥

अधरकरपदानल्पाक्षिवक्षोजयुग्मै-
रमितकलितकम्पैः सम्भृताक्षीणलक्ष्मीः ।
रतिमुपजनयन्ती राजहंसस्य तस्य
क्षणमनुविदधे सा पद्मिनीं वायुनुन्नाम् ॥ ६२ ॥

न नृपतिमुपसर्तुं नापसर्तुं च तस्माद्
वचनमशकदस्या नोत्तरं चाभिधातुम् ।
परमकिरदलक्ष्यैः पार्श्वयोः स्पष्टलज्जैः
प्रसरदकृतकोरुप्रेमगर्भैरपाङ्गैः ॥ ६३ ॥

नृपवरतनयायास्तां दशां प्रेक्ष्य धात्री
बलवदथ गृहीत्वा पाणिना पाणिपद्मम् ।
मुहुरित इत एहीत्यादराद् भाषमाणा
सविधमनयदेनां तस्य सौभाग्यसिन्धोः ॥ ६४ ॥

गिरिशभजनलब्धां कोमळैर्जाळ्ययुक्तैः
शुचिभिरवयवैस्तां शोभमानां नयन्ती ।
नृपतिमतिगभीरं रत्नभाजं बभौ सा
जनयितुरिव तस्या जङ्गमोत्साहशक्तिः ॥ ६५ ॥

अनुपमकनकस्थाल्यर्पितामन्यकन्या-
तिलकपरिगृहीतां मालिकामाकुलायाः ।
इतरवरवधूनां पाणिसंस्पर्शपुण्यां
न्यधित करपुटेऽसावुन्मनाः कन्यकायाः ॥ ६६ ॥

सविनयमथ पीने स्कन्धपीठे घनेऽस्य
क्षितिकमितृदुहित्रा भूभृतस्तां निधाप्य ।
पृथगसृजदुभाभ्यां व्यक्तमाशीर्वचांसि
प्रतिदि'गुलुलु'नादाबद्धकोलाहलानि ॥ ६७ ॥

अमितकुतुकभारादन्तरे तारिताभि-
र्नयनरुचिभिरस्या मालया चावभासे ।
नृपतिरुपचितांसः प्रोन्नतो धातुभेदैः
शिखरभृदिव विन्ध्यो नर्मदास्रोतसा च ॥ ६८ ॥

शब्दा निष्पेतुरुच्चैरथ मथितपयस्सिन्धुनिध्वानधीरा
दिक्पालानां जयोक्त्या दिशि दिशि विशदादम्बराद् दुन्दुभीनाम् ।
सुप्रौढा पुष्पवृष्टिः सुरभिरभिपपातावनौ मेनकाद्या
विद्याधृग्गुह्यकैर्या व्यधुरतिचतुरारब्धनृत्तादिहृद्याम् ॥ ६९ ॥

सद्यो नेदुर्यदूनामपि पटुपटहाः सज्जिता रङ्गवाद्ये
क्षत्रार्धीशस्य शङ्खोऽप्यधरजलधरः शुश्रुवे पूर्यमाणः ।
उत्पेतुर्नेदुरूचुः प्रजहसुरसिचर्माददुः सञ्जगर्जुः
सद्योधा बभ्रमुश्चाप्यनिशवरवधूपक्षरक्षात्तकक्ष्याः ॥ ७० ॥

एह्येहि ब्रूहि याहि प्रजहि भयमपेह्यास्व कोशे निधेहि
क्षेपीयोऽसिं न युद्धं क इह रिपुरयं तस्य मूर्द्धा मुमूर्षोः ।
सेनां व्यूढां विधेहीत्यपि विमतलया भूभृतोऽन्यान् विशङ्क्य
प्रोत्तस्थौ क्षत्रनाथानुगसुभटवचोऽप्यत्र तीक्ष्णं विशेषात् ॥ ७१ ॥

मा कार्षीः साहसं मा प्रतिवद मुदितास्ते प्रनृत्यन्तु कामं
को वा हेतुर्विरोधे क इव परिभवः कन्यकाकामकारे ।
दर्पोऽथैषामनल्पो बहिरमुमसुतः साधु पश्याम गत्वे-
त्यभ्यावृत्त्या परेषामपि कलुषधियां पार्श्वयोः शुश्रुवे गीः ॥ ७२ ॥

यूयं यूयं च नान्ये वयमपि सुभटाः यादवेन्द्रप्रियार्थं
प्राप्ता राज्यं यदेतद्यदि रिपुरिह वः सोऽङ्गसाधारणो नः ।
स्वे स्वे स्वच्छन्दचारं वितनुत विषये नात्र शक्यः स कस्मा-
प्येकस्यैवैष देशस्त्विति यदुसचिवा वारयामासुरेतान् ॥ ७३ ॥

उत्तस्थावथ सदसः स्मयी नरेन्द्रो
भर्तास्या ध्रुव इव राजकन्यकायाः ।
उच्चांसस्थलनिहितस्रगप्रसिन्धो-
र्मत्ताभ्रद्विरद इवोढकण्ठकक्ष्यः ॥ ७४ ॥

तत्कालद्रुतचलितात्मपक्षभूक्षि-
च्छस्त्रादिप्रकरपरस्पराभिघट्टैः ।
झज्झाढान् धटधटहुम्भहुम्भशब्दान्
उद्दामानुदधिवदेधयन् समन्तात् ॥ ७५ ॥

हस्ताग्रं प्रियदुहितुः प्रभोर्यदूनां
दक्षेण प्रतिपरिगृह्य दोर्द्रुमेण ।
तत्पश्चात् करविधृतासि बद्धकक्ष्यं
पित्रास्या विपुलधियानुगम्यमानः ॥ ७६ ॥

अग्रे तत्प्रियसुहृदग्रगेण पुंसा-
मग्र्येण श्रितशुभकृष्णवीरनाम्ना ।
विप्रेण प्रकटितपद्धतिश्च बद्ध-
स्पर्धायाः सपदि विनिर्ययौ सभायाः ॥ ७७ ॥

अभ्येत्य प्रसृमरसैन्यहूतिसिंह-
प्रध्वानैर्बधिरितदिङ्मुखः क्षणेन ।
शच्येव त्रिदशपतिर्दिशागजेन्द्रं
वध्वामा करिवरमारुरोह हृष्टः ॥ ७८ ॥

विष्वक् कल्पाब्धिकल्पे चलति बलचये कातरां कन्यकां तां
कान्तामग्रे वितन्वन् द्रुतमवनिपतिस्तुङ्गदन्तावलेन ।
पौरैराकीर्यमाणः पथि नवसुमनोलाजमुक्ताप्रवालै-
र्दूरादालक्ष्य सौधं निलयमथ निजं वैरिदुर्गं विवेश ॥ ७९ ॥

अपरनृपतिवर्गोऽप्याशु तस्याः पतिः स्यात्
परमशिव इति प्राक् सिद्धलोकप्रवादम् ।
अवितथमवगम्य प्राज्यलिङ्गैः परिङ्ग-
स्थगितकलुषभावः स्वं स्वमायान्निकेतम् ॥ ८० ॥

प्रतिययुरपि राज्यं स्वं द्वितीये तृतीये-
ऽप्यहनि परमहैश्वर्यायन्विता नो चतुर्थे ।
कतिचन परिभूताः सेत्यमर्षात् तदैव
प्रभुजनहृदयानि प्रायशो राजसानि ॥ ८१ ॥

व्यधुर्जायापत्योरथ बहुविधानुत्सवमयान्
विवाहादिस्नानावधि विरचनीयाञ्छुभविधीन् ।
घटाबन्धैरन्तर्बहिरनुकलं खेलनकृतः
कलाकेळीहासद्युतिहसितहाराः कळगिरः ॥ ८२ ॥

मृदङ्गा निर्ह्रादैर्मुषिततनुमत्तान्द्रि शतशो
मृगाक्षीणां नृत्ते प्रविसरति रङ्गं दुधुविरे ।
ससम्बाधात् सभ्यैरशृुत इह तासां चरणयो .
रणन्मञ्जीराळेरपि रसमगाद् बाह्यजनता ॥ ८३ ॥

चरन् गर्वादन्तःपुरभुवि लळच्छैवलपुरी-
कुरङ्गापाङ्गीनां कुटिलचटुलालोकितशतैः ।
तरङ्गे सम्मूर्च्छत्यथ सरभसं सङ्गरकृते
निरङ्गोऽभूद् वैरी शिवनृपतिशय्यापरिसरे ॥ ८४ ॥

॥ इति शिवविलासे सप्तमः सर्गः ॥



## ॥ अथ अष्टमः सर्गः ॥

पाणिपीडनविधिं विधिनाथो भूपतिः परिसमाप्य मृगाक्ष्याः ।
तामुपेत्य यतते स्म नवोढां केळये कलितकैतवहासः ॥ १ ॥

तत्तदुक्तिषु सखीमुखदर्शिन्यात्मनीरितदृशं त्रपयार्ताम् ।
वीक्ष्य तां स विरराम न तासां वीक्षणादवसरं वितितीर्षुः ॥ २ ॥

बुद्धिपूर्वमनवेत्य हसन्तीं स्वप्रमादमथ केळिषु मुग्धाम् ।
अर्धदृक्प्रणिधिना स विदित्वा तत्सखीर्न विजहौ विहरन्तीः ॥ ३ ॥

वर्तितेषु चतुरङ्गविनोदाद्युत्सवेषु पुनरप्यभिभूतौ ।
युद्धमार्गमुपदिष्टवतीं तामभ्युपेत्य सहसा परिरेभे ॥ ४ ॥

वक्रनागलतिकादलमस्याः स्वप्रभुत्ववशतस्त्वनिरीक्ष्य ।
अर्पितं भृतकवद् विहरन्त्याः स प्रगृह्य विजहास निगूढः ॥५॥

दृक्परोक्षविनिगूहनकर्मण्यात्मनो भुजयुगं प्रमृशन्त्याः ।
सुभ्रुवो गुणकिणाद्यवबुद्धो लज्जितात् स जहृषे विजितोऽपि ॥ ६ ॥

अङ्घ्रिघट्टितनिजामलपादूवन्दनोद्यमनसम्भ्रमलोलाम् ।
उद्विजन्निव च तत्पतनार्तः सस्वजे सुचिरमम्बुरुहाक्षीम् ॥७॥

दीपिकास्ववसरज्ञतयालीकेळिकर्मसु हतासु कयाचित् ।
व्रीळितामपि तमःपरिरब्धां तामसावतनुत क्षणवश्याम् ॥ ८ ॥

छद्मसुप्तिषु रसाद् विजने तां तल्पमाश्रितवतीमुपगूह्य ।
स प्रसह्य कृतधीः तदसुभ्यः शापितः परिषदि प्रमुमोच ॥ ९ ॥

अल्पिकामुरसि वीक्ष्य खळूरीखड्गकेळिजनितां क्षतरेखाम् ।
रागवद्दृशममूमनुनिन्ये सत्यकीर्तनमिषात् स सखीभ्यः ॥ १० ॥

दर्पणे मुखदृशः सुदृशोऽस्याः पृष्ठसंस्थमुपगूहितुकामम् ।
स्वं विलोक्य तनुहासवतीं तां सोऽभ्यवैत् क्रमवशात् कृशलज्जाम्॥११॥

शीर्षरोगमभिनीय शयानः कोविदास्वपसृतासु सखीषु ।
बाष्पवद् स्ववदनानतमस्याः सम्ममार्ज स करेण मुखाब्जम् ॥ १२ ॥

नान्यभेषजवती रुगियं मे तावकस्तनतटैकचिकित्स्या ।
इत्युदीर्य परिरब्धवतीं तां वक्रधीरथ बलेन चुचुम्ब ॥ १३ ॥

सख्यसान्निधिषु तां स्मरनुन्नां नित्यमेव विविधैः समुपायैः ।
इत्यसावरमयद् विरहेषु स्वल्पकेष्वपि सुदुस्तरतापाम् ॥ १४ ॥

अत्ययं दिनततेरभियानं नक्तमप्यलमुपास्य रिरंस्वोः ।
अस्तरन्ध्रमनयोरिति मासाः पञ्चधा विहरतोः समतीयुः । १५ ॥

तदनु सपदि वर्षास्तस्य तस्यां रिरंसां
प्रसभमजडयन्त्यो रोदसोराविरासन् ।
जलदकुसुमजालैः कामिनः कामबाणैः
स्वगृहकुहरबाह्यान् कातरान् कारयन्त्यः ॥ १६ ॥

रजनिरजनि सर्वा भीमरूपा तमिस्रा
निखिलखलजनानां ज्योतिस्त्रिका सैव भूयः ।
रमणमभिसरन्तीर्भीषयन्त्यापि रामाः
सरणिमुपदिशन्त्या विद्युताशोभि रात्रौ ॥ १७ ॥

कुटचककुभवानीराङ्घ्रिपैः केतकैर्वा
विकचरुचिरपुष्पैरावृता भूः सनीपैः ।
अभवदमितशष्पा गोवृषोन्मेषशक्ता
सलिलभरितकेदारापगाकूपवापी ॥ १८ ॥

घनघनपटलान्धे व्योम्नि निस्सीम्नि धाम्नां
पतिरजनि निमग्नस्तोयराशौ यथा नौः ।
सरयमरुति हंसाः तत्र पोप्लूयमाना
वणिज इव विरेजुर्मानसौन्मुख्यभाजः ॥ १९ ॥

सवितुरिव विनाशाद् दुःखितान्यब्धिकल्पे
पयसि सरसिजानि प्राक्षिपन्नात्ममूर्तीः ।
निजसुहृदि विपन्ने रक्षणेष्वक्षमाणां
प्रकृतिरकुटिलानामीदृशी नाम लोके ॥ २० ॥

प्रतिनवजलशुद्धास्तीरपुष्पात्तभूषा
लघुमसृणविशालेनावृताश्चाम्बरेण ।
स्वतनुभवबलिष्ठग्राहसङ्घातवत्यः
कुलगिरिवरकन्याः सत्वरं सिन्धुमीयुः ॥ २१ ॥

मथितधृतिनभःश्रीमैथिलीमल्लिमाला-
गुण इव सुघनांसे श्यामळे व्योमरामे ।
बभुरुपरि वलाका हारकोदण्डखण्डे
नयनपथमनेन प्रापिते सत्ययत्नात् ॥ २२ ॥

मधुरपरुषभाषैः कोकिभिश्चातकैर-
प्यनवरतमधारैर्याचितो नीरवाहः ।
अमृतममुचदुर्व्योमानने चोभयेभ्यो
द्रवति हि महतां धीर्दक्षतो भक्तलोके ॥ २३ ॥

अतिशिशिरनभस्वत्यारणन्मत्तभृङ्गे
सुरभिनवकदम्बे माळनृत्यन्मयूरे ।
सुबहुभिरलमुक्तैः स्वप्नमूर्च्छे विनान्या
नभसि न गतिरासीद् बिभ्यतां पान्थयूनाम् ॥ २४ ॥

मधुकरकुलझङ्काराख्यशङ्खोरुघोषै-
स्त्रिभुवननरनारीस्त्रासयन् विग्रहैषी ।
पटुतरजवगौरस्त्याशुगाश्वाधिरूढो
मदनभट उदस्थाद् धूतविद्युल्लतासिः ॥ २५ ॥

उषसि जलदनिर्ह्रादार्तपान्थाश्रुपाथः-
स्रुतिविसरनिमग्नं बाह्यगेहं विलोक्य ।
सिषिचुरभिपरिष्वज्यारवैस्तस्य रात्रा-
वनुमिततदवस्थाः कामिनोऽन्योन्यमास्रैः ॥ २६ ॥

सरसि विरहशङ्काभेदनी यादसां गी-
रियमुदयति मा भैर्भेक भेकीत्युपान्ते ।
इति निगदितवाक्यो भूय एवात्ततृष्णं
सुरतविरतिकाले सस्वजे कामिलोकः ॥ २७ ॥

अविरतपतदभ्रोन्मुक्तधाराप्रपञ्चै-
रभिहततररम्भापत्रसम्भ्रोत्थनादैः ।
सुषुपुरपहताधि श्वेतपर्यङ्कलग्ना
मिथ उपचितवक्त्रामोदतृप्ता युवानः ॥ २८ ॥

नरपतिकुलनाथः सोऽप्यथावश्यकं स्वं
नियममुपसमाप्य प्रीणितोत्सृष्टपूज्यः ।
कतिपयपरिवारो याति पूर्वाह्णकाले
दयितजननिषेव्यं वेश्म भव्यं विवेश ॥ २९ ॥

शयनमधिरुरुक्षोस्तस्य पादं पदाब्जाद्
झटिति विजहतो यः काललेशः प्रियायाः ।
परिमृशति तदन्यः पारगां पङ्कजिन्याः
सुदृशमुपसरन् स्वां कोक एकोऽस्य दैर्घ्यम् ॥ ३० ॥

विरचयति सखीनां नोत्तरं चाटुवाचां
श्वसिति बहु सशङ्कास्तिर्यगालोक्य चेटीः ।
किमपि विमृशतीयं जिह्मदृग् व्यस्तमोदा
क्षणमिति स कृशाङ्गीं प्रेक्ष्य तां सम्प्रदध्यौ ॥ ३१ ॥

किमिदमिति विलोलः सुभ्रुवोऽदृष्टपूर्वां
मतिविकृतिमनल्पां तां विकल्पैर्विदित्वा ।
अशनिहत इवास्याः भ्रान्तधीः शान्त्युपायान्
व्यमृशदपि स तूष्णीं बाष्पसंरुद्धकण्ठः ॥ ३२ ॥

समयलवविलम्बात् किञ्चिदारेचितभ्रू-
शिखरकटुकटाक्षोद्वीक्षणास्त्रोद्गमाद्यैः ।
हृदयगतविकारानञ्जसा व्यञ्जयन्त्याः
पदभुवि स पपात भ्रश्यदुष्णीषबन्धः ॥ ३३ ॥

चलति परिजने च द्वारमारुध्य गेहा-
चलकुवलयदृष्टिं सान्त्वयामास भीतः ।
शपथपथसहस्रैर्मूर्ध्नि पादप्रहारैः
पुनरपगतकोपामाकलय्याननन्द ॥ ३४ ॥

उरसि रहसि कुर्वन्नीषदुत्तानशाया
सुरभिशिथिलधम्मिल्लाग‍ळत्सूनमालाम् ।
स मुहुरसुसमां तां गाढमालिङ्ग्य वक्त्रं
सुचिरमपि च जिघ्रन् नैव तृप्तिं प्रपेदे ॥ ३५ ॥

स्ववदनसतृषोऽस्यास्तद् बलात्कारपूर्वं
मुखसरसिजमाविर्भूतरोमाञ्चगण्डम् ।
अलसदृगभिपश्यन्नात्तसीत्कारनादं
सरसरुचिरताम्बूलाञ्चितं सञ्चुचुम्ब ॥ ३६ ॥

अथ शिथिलितनीवीबन्धनाभ्यन्तराळ-
प्रसृतममितरागोन्मुक्तशालीनतायाः ।
करमुरुनिबिडोरुस्तम्भमूले प्रहिण्वन्
क्वणितमधुभिरस्याः कूजितैरुन्ममाद ॥ ३७ ॥

सरभसमथ चोत्थायोन्मनाः क्षौममस्या
घनजघनतटान्ताद् दूरमुत्सार्य कामी ।
बलवदकृत बालां व्याकुलां स्वानुकूलाम्
उचितसुरतलीलाचेष्टितैर्धाष्ट्र्यैः ॥ ३८ ॥

करतलमुपधानं कल्पयित्वोत्क्षिपंस्तां
परभुजपरिवेण द्राक् परीरम्भकर्त्री ।
विनिहिततनुकान्ताजङ्घमात्मोरुकाण्डे
कमपि स तु वितेने विक्रमं कामिसम्राट् ॥ ३९ ॥

अथ गुणविभवं स्वं हृद्यसम्बुद्धिपूर्वं-
मुहुरकृतकवाक्यैर्मौग्ध्यतः कीर्तयन्त्याः ।
स कचपृथुलपूलीसङ्गृहीत्यास्यमस्या
व्यधित विविधमापीयात्मपुंस्त्वे विशेषान् ॥ ४० ॥

क्षणमथ च नृसिंहः प्रत्तगाढाङ्कपाळिः
स्तनगिरिभुवि शिश्ये स्रस्तमुक्तालतायाम् ।
विकृतिभिरकृतार्थां तामभिज्ञाय सद्यो
व्यतनुत विपरीतक्रीडितोपक्रमं च ॥ ४१ ॥

उपरि च पुनरुत्ताळर्द्धिताळध्वनिं तां
कनकवलयकाञ्चीशिञ्जितैश्चञ्चलाक्षीम् ।
नरपतिरधिरोप्य प्रौढनानाविलासां
चतुरमणितवाद्यैर्नर्तयामास चित्रम् ॥ ४२ ॥

सपदि च परिगृह्णन्निन्दुताम्बूलपूगं
तरुणहरिणनेत्रां चापि सञ्चर्वयित्वा ।
श्रमशमनमदत्त्वैवास्यगं तत् सुकेशीं
शशरुधिरनिभोष्ठीं साञ्जलिर्याचते स्म ॥ ४३ ॥

स्खलितविधिमथाशङ्क्यात्मगोत्रात् प्रियस्य
व्यतिकरसुरतेऽसौ हेतुलेशं विनापि ।
अहनदिह मृणालीच्छायया बाहया तं
पुनरनुमितसत्या तद्वचोभिर्ननन्द ॥ ४४ ॥

अविरतरसमङ्गान्यर्पयन्ती समस्ता-
न्यभिमतनृपकेतावात्मवाञ्छाविधेये ।
विसृतचिकुरपुष्पैराकिरन्ती च वक्षः
प्रणयगतिमशेषां तस्य साविश्चकार ॥ ४५ ॥

चलदलकमुदञ्चत्स्वेदमुल्लोलचिल्लि
प्रचितरुचिरकम्पोत्तुङ्गपीनस्तनान्तम् ।
चपलनयनमाविश्चातुरीमाधुरीकं
नृपतिहृदयमस्या नर्म तन्निर्ममन्थ ॥ ४६ ॥

अविनयमवनीशस्यालपन्त्यङ्गुलीनां
विकटकुचतटी सा रक्तरेखात्कराङ्का ।
व्रणकणधृतभूषश्चुम्बितश्चाधरोऽस्या
द्विगुणसुषममङ्गं निर्ममे निर्मलायाः ॥ ४७ ॥

शिथिलसुरततृष्णामेदसा चेतसा तौ
कथमपि गुरुसादौ सम्परिष्वज्य गाढम् ।
सुषुपतुरवबुद्धौ दत्तबाहूपधानौ
निभृततनु निमेषं निन्यतुः सङ्कथाभिः ॥ ४८ ॥

परिहसितसुधास्वादोपदंशोपगूढ-
प्रकटनिबिडभावान्योन्यनद्धोरुदण्डौ ।
रुचिरतरवचोभिर्भूय उद्बुद्धरागौ
कृतपरिकरबन्धौ क्रीडितोत्कावभूताम् ॥ ४९ ॥

वचनमशृणुतां नो बाह्यगानां स्ववाचा-
मपि च रसनिमग्नौ गुप्तये नालमास्ताम्।
रजनिमुखविरामस्नानवेलादिकं वा
न खलु पृथगवैतां द्वास्थवैतालिकोक्तेः ॥ ५० ॥

प्रणयकलहलीलाः कोटिशः सान्त्वकर्मा-
प्यनुकलमनयोस्तद्गोचराश्च प्रसादाः।
रतिविधिपरिणामान्ते पुनस्तेऽपि ते ते
परमसुखमुरन्योन्यार्पणाभ्यन्तमध्याः ॥ ५१ ॥

न खलु न खलु कोकौ भित्तिचित्रेऽप्यथो नो
न च परिमिलिते द्वे क्षीरनीरेऽप्यभेदात्।
मरुदमरपथौ वा मारनृत्तोत्सवे तौ
स्वयमिह शिवशक्ती एव साक्षादभूताम् ॥ ५२ ॥

इति निधुवनलीलालम्पटौ दम्पती तौ
सकलयुवजनानां सद्गुणैरग्र्यभूतौ।
घनसमयमुपेतं कामिसम्मोहनं तं
क्षणकणमिव धन्यौ निन्यतुः क्रीडितेन ॥ ५३ ॥

अथ शरदुपनत्यां साधु शैवालपुर्याः
सपदि नृपतिपुत्री पित्रनुज्ञावशेन।
अगमदमलमन्यत् क्षेत्रमीशस्य भर्त्रा
कामितुरुदयपुर्यां ख्यातिमद्वासभूतम् ॥ ५४ ॥

तस्मिन् विस्मापनश्रीः श्रुतनिधिरवधिः श्रेयसामूर्जितानां
विश्वाधीशेन पत्या किल भवजलधिश्रान्तधीर्विश्रमाय।
प्रस्तौत्यद्ध्यात्मविद्यापरिचयमधुना नित्यमुक्ता सती सा
कृत्याकृत्ये नियन्ता क इव बलजुषामीश्वरेच्छागतीनाम्॥५५॥

इति महितपदाब्जे रुद्रनारायणीये
मधुलिह इव वृत्तिं बिभ्रता चातकस्य ।
अलघु शिवविलासो नाम काव्यं बबन्धे
सुरभि भरतगोत्रीयेण दामोदरेण ॥ ५६ ॥

इति शिवविलासे अष्टमः सर्गः ॥

॥ समाप्तश्चेदं शिवविलासकाव्यम् ॥

———[०]———

जीवोऽङ्गिराः सुरगुरुर्वचसांपतिर्ज्योक्
शुक्रो भृगुर्भृगुसुतः सित आस्फुजिच्च ।
राहुस्तमोऽगुरसुरश्च शिखीति केतुः
पर्यायमन्यदुपलभ्य वदेच्च लोकात् ॥ ३ ॥

संज्ञाविधानार्थमाह । हेलिः सूर्य इत्यादिश्लोकद्वयम् जीवस्य केवलशुभत्वमेव निम्नेन वाक्येन सूत्रितम्? सर्वत्रैवमेव ग्राह्यम् । अन्यत् स्पष्टार्थम् ॥

वर्णानाह—

रक्तश्यामो भास्करो गौर इन्दु-
र्नात्युच्चाङ्गो रक्तगौरश्च वक्रः ।
दूर्वाश्यामो ज्ञो गुरुर्गौरगात्रः
श्यामः शुक्रो भास्करिः कृष्णदेहः ॥ ४ ॥

**रक्तश्याम** इति । **भास्करो** रक्तः श्यामश्च वेदितव्यः उच्चगो रक्तः, नीचगः श्याम इति । अन्तरेऽभ्यूह्यम् । एवमन्येषामप्युच्चनीचविभागोऽभ्यूह्यः । **गौरः** श्वेतः चन्द्रः । **नात्युच्चाङ्गो** नात्यन्तदीर्घः । रक्तो गौरश्च भौमः । तस्याप्युच्चे रक्तत्वं नीचे गौरत्वम् । दूर्वाश्यामलो बुधः । **गुरुर्गौरः** । **शुक्रः श्याम**वर्णः । शनिः **कृष्णदेहः** । देह एव कृष्णः अन्तस्स्वच्छ इत्यर्थः ॥ ४ ॥

वर्णान्तरानाह—

वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासिता
वह्न्यम्ब्वग्निजकेशवेन्द्रशचिकाः सूर्यादिनाथाः क्रमात् ।
प्रागाद्या रविशुक्रलोहिततमस्सौरेन्दुवित्सूरयः
क्षीणेन्द्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः ॥ ५ ॥

**वर्णास्ताम्रे**ति । **व्यापीतो**ऽतिशयेन पीतः । अत्रापि तुङ्गनीचविभागेन

वर्णतारतम्यमूह्यम् । वर्णा इति स्वाभिमता एत एव वर्णा इति सूचितम् । तेनैते जातकविषये वेदितव्याः । सूर्यादीनां नाथानाह— **वह्न्यम्ब्वाग्निजकेशवेन्द्रशचिका** इति । वह्निशब्देन रुद्रः कथितः । अग्निजः स्कन्दः । क इति प्रजापतिः । प्रागादीनां रव्यादयः स्वामिनो ज्ञेयाः । पापसंज्ञामाह— **क्षीणेन्द्वर्कमहीसुतार्कतनया** इति । तत्र क्षीणेन्दुः पापः । अर्कः तस्मात् पापतरः । तस्मात् महीसुतः । सर्वेभ्योऽर्कजः । बुधोऽपि तैस्त्रिभिः सहितः पापः । द्वाभ्यां पापित्वमपि न्यूनम् । एकेन ततोऽपि न्यूनमिति । क्षीणेन्द्वर्केति ग्रहाणां व्युत्क्रमोक्त्या अप्ययमर्थः सूचितः लग्नानां व्युत्क्रमेण चार इति ॥ ५ ॥

**बुधसूर्यसुतौ नपुंसकाख्यौ**
**शशिशुक्रौ युवती नरास्तु शेषाः ।**
**शिखिभूखपयोमरुद्गणानां**
**वशिनो भूमिसुतादयः क्रमेण ॥ ६ ॥**

**बुधसूर्येति** । बुधः स्त्रीनपुंसकः । शनिः पुन्नपुंसकः । शशी माता । शुक्रो भार्या । शेषाः पुमांसः । तेषामप्यर्कः पिता । भौमः सोदरः । जीवः पुत्रः । शशिसूर्यभौमादीनां (स्थानाः?) स्वोक्तेन स्वोक्तेन स्थानेन मातापितृसहजादीनां सम्पदसम्पदोः निर्णयः इति । तथा कुजादयः**शिखिभूखपयोमरुतां वशिनोऽधिपाः** । अत्र राहुः समीरणात्मकः । केतुसूर्यौ वह्न्यात्मकौ । जलात्मकश्चन्द्र इति । एतेषां ग्रहाणां दिवसे रात्रौ च षण्णाडिकामात्रं यथोक्तानि भूतानि । ततः परं षण्णाडिकामात्रं पृथिवी जलं भवति । ततः षण्णाडिकामात्रं पृथिवी कृशानुर्भवति । ततः षण्णाडिकामात्रं पृथिवी वायुर्भवति । ततः षण्णाडिकामात्रं पृथिव्येवाकाशं भवति । एवमेव जलादीनां द्रष्टव्यम् । उच्चनीचविभागेन अत्रापि भूतानाम् उत्कर्षापकर्षौ ज्ञेयौ । प्रश्ने तु— पृथिव्यधिपो गुरुः । जलाधिपौ शुक्रचन्द्रौ । अग्न्यधिपः कुजः । वाय्वधिपो बुधः । शनिसूर्यराहवो व्योमेशाः इति । पृथिव्यग्नी धातुः । जलवायू जीवः । आकाशं मूलमिति ॥ ६ ॥

जात्याद्याह—

**विप्रादितः शुक्रगुरू कुजार्कौ**
**शशी बुधश्चेत्यसितोऽन्तराणाम् ।**
**चन्द्रार्कजीवा ज्ञसितौ कुजार्की**
**यथाक्रमं सत्त्वरजस्तमांसि ॥ ७ ॥**

**विप्रादित** इति । **शुक्रगुरू** विप्रौ । कुजरवी नृपौ । शशिबुधौ वैश्यौ । शनिः शूद्रः प्रतिलोमश्च । तत्र गुरुरविशशिनः स्ववर्णोत्कृष्टाः । अन्येऽपकृष्टाः इति । प्रश्ने तु—

"राजस्री ब्राह्मणो वैश्यवैद्यशूद्राधमोऽधमः(?) ।
रव्यादीनां तु जातिः स्यात् साङ्कर्यं वितनोत्यहिः ॥"

इति । **चन्द्रार्कजीवाः** सात्त्विकाः । चन्द्रः सात्त्विकशिवो धवलः । अर्कः सात्त्विकविष्णुः पीतः । जीवोऽत्यन्तसात्त्विकः । **ज्ञसितौ** रजोगुणौ । बुधो राजसविष्णुः । शुक्रो राजसरुद्रः । **कुजार्की** तामसौ । कुजस्तामसरुद्रः । आर्किस्तामसविष्णुः । अनेन जातो नरः कां देवतां भजतीति सन्देहे तन्निर्णयः कार्यः । ग्रहयोगेक्षणे ताभ्यां निर्णयः । अन्यथा आंधिपवशात् । पुंस्त्रीविभागोऽपि देवतानां राश्यादिवशादभ्यूह्यः । प्रश्ने तु यामवशादेव पुंस्त्रीविभागोऽभ्यूह्यः । तथा राशिष्वपि शुभक्षेत्रत्वादिभिः । उभयराशयः सात्त्विकाः । तेषामपि धनुर्धरो जीवासाधारणत्वाच्छ्रेष्ठः । ततोऽपि मीनः, ततो मिथुनः, ततः कन्येति । चराः राजसाः । तेषामपि तुलाधरः श्रेष्ठः, ततः कुलीरः, ततो मेषः, ततो मकर इति । स्थिराः तामसाः । तेषु कुम्भः तामसतरः, ततो न्यूनो वृश्चिकः, ततः सिंहः, ततो वृष इति । एतत्सर्वं यथाक्रमशब्देन स्वधिया तर्कणीयम् ॥ ७ ॥

ग्रहाणां संस्थानान्याह—

**मधुपिङ्गलदृक् चतुरश्रतनुः**
**पित्तप्रकृतिः सविताल्पकचः ।**

**तनुवृत्ततनुर्बहुवातकफः**
**प्राज्ञश्च शशी मृदुवाक् शुभदृक् ॥ ८ ॥**

**मधुपिङ्गलेति । मधुपिङ्गलदृगिति ।** भास्करो मधुपिङ्गलदृक् वेदितव्यः । तत्राप्युच्चगो मधुदृक्, नीचगः पिङ्गलदृक् । विडालसदृशदृगित्यर्थः । उच्चगस्य दृष्टिः शुभा नीचगस्याशुभेति सूत्रितम् । **चतुरश्रतनुः** चतुरश्रा तनुः अस्येति चतुरश्रतनुः । तथा चतुरश्राकारद्रव्यान्तराभिन्नश्च । **अल्पकचः** ह्रस्वकचः **सविता** ज्ञेयः । **तनुवृत्ततनुः** चन्द्रः, तनुः अल्पः वृत्ततनुः वृत्तावयवः वृत्तद्रव्यान्तराभिन्नश्च । शुक्लपक्षे प्राज्ञः बहुलपक्षेऽप्राज्ञः । **शुभदृक्** सुलोचनः शुभद्रष्टा च ॥ ८ ॥

**क्रूरदृक् तरुणमूर्तिरुदारः**
**पैत्तिकः सुचपलः कृशमध्यः ।**
**श्लिष्टवाक् सततहास्यरुचिर्ज्ञः**
**पित्तमारुतकफप्रकृतिश्च ॥ ९ ॥**

**क्रूरदृगिति ।** आरः **क्रूरदृक्** क्रूरद्रष्टा च । **सुचपलः** क्षिप्रकारीति । बुधः **श्लिष्टवाक्** सम्बन्धवक्ता । **पित्तमारुतकफप्रकृतिश्च** पित्तञ्च मारुतश्च कफश्चास्य प्रकृतिः, तथा द्विप्रकृतित्वं त्रिप्रकृतित्वं च अभ्यूह्यम् ॥ ९ ॥

**बृहत्तनुः पिङ्गलमूर्धजेक्षणो**
**बृहस्पतिः श्रेष्ठमतिः कफात्मकः ।**
**भृगुः सुखी कान्तवपुः सुलोचनः**
**कफानिलात्मासितवक्रमूर्धजः ॥ १० ॥**

**मन्दोऽलसः कपिलदृक् कृशदीर्घगात्रः**
**स्थूलद्विजः परुषरोमकचोऽनिलात्मा ।**
**स्नाय्वस्थ्यसृक्त्वगथ शुक्लवसे च मज्जा**
**मन्दार्कचन्द्रबुधशुक्रसुरेज्यभौमाः ॥ ११ ॥**

**बृहत्तनुरिति** श्लोकद्वयम् । **कपिलदृक्** विलाळदृक् । **स्थूलद्विजः** स्थूलदन्तः । **कचाः** शिरसि भवाः, वैपरीत्येनापि योज्यम् । **स्नायुः** सिरा **मन्दः । अस्थि अर्कः । असृक् चन्द्रः । त्वक् बुधः । शुक्रं शुक्रः । वसा सुरेज्यः** (मेदः) । **मज्जा भौमः** (५८१) । अथशब्देनान्येषामप्यान्तराणाम् एष्वेवान्तर्भावोऽभ्यूह्य इति सूचितम् । शुक्रवसे चेति शुक्रवसयोः अत्यन्तान्तरत्वम् अन्येषां बाह्यत्वं च अभिहितम् । अत्रापि प्राबल्यदौर्बल्यकृतं तत्पुष्टत्वमपुष्टत्वं च तर्कणीयम् ॥ ११ ॥

ग्रहाणां प्रदेशाद्याह—

**देवाम्ब्वग्निविहारकोशशयनाक्षित्युत्कराः स्युः क्रमात्**
**वस्त्रं स्थूलमभुक्तमाग्निकहतं मध्यं दृढं पाटितम् ।**
**ताम्रं स्यान्मणिहेमशुक्तिरजतान्यर्कात्तु मुक्तायसी**
**द्रेक्काणैः शिशिरादयः शशुरुचज्ञग्वादिषूद्यत्सु वा ॥ १२ ॥**

**देवाम्ब्वग्नीति** । सूर्यादीनां देवकुलादयः स्थानानि । अत्राप्युच्चनीचविभागेन देवकुलादीनामुत्कृष्टत्वापकृष्टत्वे ज्ञेये । तथोच्चे पुरस्तात् प्रदेशः । नीचे पाश्चात्य इति । वस्त्रविशेषानाह—**वस्त्रं स्थूलमिति** । बृहत्तन्तवः स्थूलाः । **अभुक्तम्** अहतम् । **अग्निहतं** दग्धम् । **कहतं** जलसिक्तम् । मध्यं नातिस्थूलम् । **दृढं** सुस्थिरम् । **पाटितं** जीर्णम् । उच्चविशेषोऽत्राभ्यूह्यः । अथार्कादीनां ताम्रादयो ज्ञेयाः । तथा शनिशुक्ररुधिरचन्द्रज्ञगुरुषूद्यत्सु तद् द्रेक्काणेषु च उद्यत्सु शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ताख्या ऋतवो ज्ञेयाः ॥ १२ ॥

दृष्टिविशेषप्रदर्शनार्थमाह—

**त्रिदशत्रिकोणचतुरश्रसप्तमा-**
**नवलोकयन्ति चरणाभिवृद्धितः ।**
**रविजामरेड्यरुधिराः परे च ये**
**क्रमशो भवन्ति किल वीक्षणेऽधिकाः ॥ १३ ॥**

**त्रिदशत्रिकोणेति** । **त्रिदशत्रिकोणचतुरश्रसप्तमान्** पादाभिवृद्ध्या ग्रहाः पश्यन्ति । पादमर्धं पादोनं समस्तमिति । तत्र तृतीयं दशमं च पादेन पश्यति **रविजः** । पञ्चमनवमावर्धेन पश्यति गुरुः । चतुर्थाष्टमौ पादोनेन पश्यति **रुधिरः** । शेषाः समस्तदृष्ट्या पश्यन्ति सप्तमम् । आधिक्यं च **वीक्षणे** क्रमेण ज्ञेयम् । पादावलोकनेऽधिको रविजः । अर्धावलोकने गुरुः । पादोनावलोकने कुजः । समस्तदर्शने शेषाणामाधिक्यमिति । अथवा तृतीयं मन्दः पश्यति, दशमं गुरुः, पञ्चमं रुधिरः । **परे चेति** । येन क्रमेणोक्ता दृष्टिः तेनैव क्रमेण पराणां चेति, रविजस्य षष्ठो गुरुः, गुरोष्षष्ठो भौमः, । एवं परेऽपीति । अयमर्थः — नवमं कुजस्य, षष्ठो रविः, चतुर्थं शुक्रः अष्टमं बुधः, सप्तमं चन्द्र इति । स्वे स्वे स्थाने वीक्षणेऽधिकाश्च भवन्ति । अथवा रविजामरेड्यरुधिराः परे चेत्ययमर्थः । तृतीयं रविजः पश्यति । तस्य परो रविः । स तु दशमम् । गुरुः पञ्चमम् । तस्य परः शुक्रः । स तु नवमम् । चतुर्थं रुधिरः । तस्य परो बुधोऽष्टमम् । सप्तममिन्दुरिति । अयं जातके ग्राह्यः । पूर्वोक्तं प्रश्ने । प्रथमोक्तं कर्मणीति विभागः । **किलेत्यनुगति-** ज्ञानाभावं (सूचयति?) ग्रहाणां कक्ष्याक्रमं कालहोराक्रमञ्च सूचयति ॥ १३ ॥

ग्रहाणां कालविशेषमाह—

**अयनक्षणवासरर्तवो**
**मासोऽर्धं च समा च भास्करात् ।**
**कटुकलवणतिक्तमिश्रिता**
**मधुराम्लौ च कषाय इत्यपि ॥ १४ ॥**

**अयनेति** । कालस्य गणनायां प्राप्तायां (कः) कालो गण्यत इत्याकाङ्क्षायाम् अयनादय इत्याह । **अयनं** षण्मासाः । **क्षणो** मुहूर्तम् । **वासरो**ऽहः । **ऋतुः द्वौ** मासौ । मासः पक्षः संवत्सराश्च क्रमाद् ज्ञेयाः । रसभेदमाह— **कटुकेति** । **कटुकः** सूर्यः । **लवणरसः** सोमः । **तिक्तरसः** कुजः । **मिश्ररसो** बुधः । **मधुररसो** गुरु । **अम्लरसः** शुक्रः । **कषायरसः** शनिः ।

मधुराम्लौ चेति द्वयोः समासात् मधुराम्लरसौ द्वयोरपि विज्ञेयावित्याह । तत्र मधुरोऽम्लमिश्रमधुरश्च गुरुः । अम्लो मधुरमिश्राम्लश्च शुक्र इति । इति-शब्देनैते रसा दौर्बल्येऽपि न व्यभिचरन्तीति सूचितम् । अपिशब्देन कषाय-रसो राहुः तिक्तरसः केतुरिति च सूचितम् । त्रयोदशभागाधिकषड्राशियुते राहुस्फुटे केतुस्फुटं भवति(?) । ॥ १४ ॥

मित्रशत्रुभावमाह—

जीवो जीवबुधौ सितेन्दुतनयौ व्यर्का विभूजाः क्रमाद्
वीन्द्वर्का विकुजेन्द्विनाश्च सुहृदः केषाञ्चिदेवं मतम् ।
सत्योक्ते सुहृदस्त्रिकोणभवनात् स्वात् स्वान्त्यधीधर्मपाः
स्वोच्चायुस्सुखपाश्च लक्षणविधेर्नान्ये विरोधादिति ॥ १५ ॥

जीवो जीवबुधाविति । सूर्यस्य जीवः सुहृत्, जीवबुधौ चन्द्रस्य, शुक्र-बुधौ भौमस्य, अर्करहिता बुधस्य, कुजरहिता गुरोः, अर्कचन्द्ररहिताः शुक्रस्य, अर्कचन्द्रभौमरहिताः शनेः । एवं केषाञ्चिन्मतम् । मुहूर्तप्रश्नयोरयं ग्राह्यः । उदा-सीनभावोऽभ्यूह्यः । कथं, जीव इति सूर्यस्य बन्धुः गुरुरुक्तः । अन्ये शत्रव इति प्राप्ते, स्वशब्देनैव येषां मित्रत्वं प्रतिषिद्धं ते शत्रवः, अन्ये उदासीना इति । व्यर्का वीन्द्वर्का विकुजेन्द्विनाश्चेति बुधशुक्रमन्दानां मित्रत्वं रवेः प्रतिषिद्धमिति रवेः ते बुधशुक्रमन्दाः शत्रवः चन्द्रकुजावुदासीनाविति । चन्द्रस्य जीवबुधौ बन्धू, शुक्रमन्दौ शत्रू, रविकुजावुदासीनौ । कुजस्य शुक्रबुधौ बन्धू, गुरुमन्दौ शत्रू, रविचन्द्रौ उदासीनौ । बुधादीनां व्यर्का इत्यादिना सुहृद्भावे शेषाणां प्राप्ते, येषां स्वशब्देन मित्रत्वं बुधादीनां विहितं ते बन्धवः, इतरे उदासीना इति ग्राह्यम् । बुधस्य चन्द्रकुजौ बन्धू, अर्कः शत्रुः, गुरुशुक्रमन्दा मध्याः । जीवस्य रवि-चन्द्रौ बन्धू, कुजः शत्रुः, बुधशुक्रमन्दाः मध्याः । शुक्रस्य कुजो बन्धुः, रविचन्द्रौ च शत्रू, बुधगुरुसौरा मध्याः । मन्दस्य गुरुबुधशुक्रा मित्राणि, रविचन्द्रकुजाः शत्रवः । अपकृष्टानाम् उदासीना न भवन्तीति मन्दस्योदासीनाभावः । आचार्यान्तरमतम् उपन्यस्य स्वाचार्यमतमाह सत्योक्ते सुहृद इति । अत्र सुहृद

इत्यनूद्य रिपवोऽभिधीयन्ते । स्वस्य मूलत्रिकोणभवनात् धनव्ययसुतधर्मस्वोच्चाष्टमसुखाधिपाः बन्धवः, अन्ये न बन्धव इति । लक्षणविधेः विरोधात् नयशास्त्राविरोधात् । एतदेव स्पष्टं करोति—

'शत्रू मन्दासितौ समः शशिसुतो मित्राणि शेषा रवे-
स्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः ।
जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञोऽरिः सितार्कौ समौ
मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ॥

सूरेः सौम्यासितावरी रविसुतो मध्यः परे त्वन्यथा
सौम्यार्कौ सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी ।
शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरयो
ये प्रोक्ताः सुहृदस्त्रिकोणभवनात् तेऽमी मया कीर्तिताः' ॥

इति । शत्रू मन्दसितावित्यादिश्लोकद्वयेन त्रिकोणभवनात् स्वादिति ये बन्धवः उक्ताः ते कीर्तिताः इत्युपसंहरति ॥ १५ ॥

**अन्योन्यस्य धनव्ययायसहजव्यापारबन्धुस्थिता-**
**स्तत्काले सुहृदः स्वतुङ्गभवनेऽप्येकेऽरयस्त्वन्यथा ।**
**द्व्येकानुक्तभवान् सुहृत्समरिपून् संचिन्त्य नैसर्गिकां-**
**स्तत्कालेन पुनस्तु तानधिसुहृन्मित्रादिभिः कल्पयेत् ॥ १६ ॥**

**अन्योन्यस्ये**ति । धनव्ययलाभभ्रातृदशमसुखेषु (स्थिताः)ग्रहाणां तावत्कालं सुहृदः । स्वोच्चं गतोऽपि सुहृदिति केचित् । अन्ये शत्रवः । त्रिकोणभवनादित्यत्र यस्य ग्रहस्य द्विरुक्तिः स बन्धुः, यस्यैकोक्तिः स समः, यस्यानुक्तिः स शत्रुरित्यवधार्य, "जीवो जीवबुधावि"ति नैसर्गिकमपि विज्ञाय, 'अन्योन्यस्ये'ति तत्कालमित्रत्वं च ज्ञात्वा त्रिविधं यस्य सुहृत्त्वं स उत्कृष्टबन्धुः, द्विविधं यस्य सुहृत्त्वं स मध्यमसुहृत्, यस्यैकं सोऽपकृष्टसुहृत् इति ग्राह्यम् ॥ १६ ॥

स्थानबलमाह—

**स्वोच्चसुहृत्स्वदृगाणनवांशैः**
**स्थानबलं स्वगृहोपगतैश्च ।**

॥ श्रीः ॥

प्रभाकराचार्यप्रणीता

# भ्रमरकाहळी

जगज्जयविजृम्भिता मकरकेतनानीकिनी-
भ्रमद्भ्रमरकाहळी विजयते जगन्मण्डले ।
हिताय भवतां हि सा भवतु कामसञ्जीवनी
समस्तमिथुनावलीघटनपाटवाडम्बरा ॥ १ ॥

(नान्द्यन्ते ततः प्रविशति सूत्रधारः ।)

**सूत्रधारः**— (नेपथ्याभिमुखमवलोक्य) आर्ये! इतस्तावदागम्यताम् ।

(प्रविश्य)

**नटी**— इयमस्मि ।

**सूत्रधारः** — अये! श्रूयताम्—

सङ्गीतसाहित्यरसार्णवोद्यत्-
सञ्चारसम्पादितशास्त्रसारा ।
पुराणभास्वच्चरितावलोके-
ष्वतृप्तिभाराश्रितपर्षदेषा ॥ २ ॥

तन्नवीनरूपकाद्यैरेतां सन्तोषयिष्यामः ।

**नटी**—(सम्यगालोच्य) यदनुरूपं प्रकरणाविशेषं मामाज्ञापयतु भवान् ।

**सूत्रधारः**— अये! नूतनकविताविशेषबृंहितं प्रभाकराचार्यप्रणीतं भ्रमरकाहळी नाम रूपकविशेषम् अभिनीय सर्वजनसन्तोषमद्य साधयिष्यामः । तद् वसन्तविभूतिमुद्दिश्य सङ्गीतमारभ्यताम् ।

नटी—

कुरुविन्दसान्द्रमकरन्दचन्द्रिका
वरमन्दमारुतरसालपल्लवा ।
परपुष्टपञ्चमकळारवाञ्चिता
परिभाति माधवविभूतिरुज्ज्वला ॥ ३ ॥

अये! पश्य पश्य । सङ्गीतापहृतचित्तवृत्तयः सर्वेऽपि शिलाविशेषकलितसालभञ्जिकावत् प्रतिभान्ति । तदनन्तरकरणाय प्रयतिष्ये ।

सूत्रधारः—(नैपथ्ये कर्णं दत्त्वा) आर्ये! श्रूयताम्—

शोणाचलेशधरणीपतिसार्वभौमः
सम्पूर्णसद्गुणनिधिर्भ्रमराभिधानः ।
यः काहळीगुणगणापहृतात्मवृत्ति-
रास्ते सदेति किमहो मयि जीवितेऽपि ॥ ४ ॥

राजशासनानुवर्ती मुग्धमिथुनसङ्घटनाडम्बरो विटशेखरो नाम वृद्धवेषधारी समागच्छत्येव । आवां तदनुसरावः ।

(इति नटीसूत्रधारौ निष्क्रान्तौ ।)

---

(ततः प्रविशति विटशेखरः ।)

विटशेखरः—(पूर्वोक्तशोणाचलेति श्लोकं पठित्वा दिशोऽवलोक्य ससन्तोषम्) अहो! काहळीप्रियवयस्या सङ्गीतमञ्जरी समागच्छत्येव । (सम्यगवलोक्य)

मदतरळमराळगातिमुग्धा
मदगजमस्तकनिस्तुलस्तनाढ्या ।
मदभिमुखमुपैति भूरिचिन्ता-
परहृदया किमु काहळीवयस्या ॥ ५ ॥

(अथ प्रविश्य)

सङ्गीतमञ्जरी— (विटशेखरान्तिकमुपेत्य) भो भो विटशेखर! भवन्तमभिवादये सङ्गीतमञ्जरी नाम ।

विटशेखरः— स्वस्ति भवत्यै ।

सङ्गीतमञ्जरी— महदनुग्रहो हि महानेव ।

विटशेखरः— अत्रभवत्याः किमर्थमागमनायासः? ।

सङ्गीतमञ्जरी— अस्मत्प्रियवयस्यया काहळीदेव्या प्रोक्तं महत्कार्य-भारं निवेदयितुं भवदन्तिकमेव समागतास्मि ।

विटशेखरः—

अशीतिहायनाकर्णपलितश्मश्रुकेशिना ।
यष्टीसहायकेनाद्य कार्यं तस्या मया किमु ।। ६ ।।

सङ्गीतमञ्जरी— समस्तकार्यभारो महतां बुद्धिविशेषसाध्यो हि न कायबलप्रधानः ।

विटशेखरः— मुग्धे! सम्यगुच्यतां सन्देशसारः ।

सङ्गीतमञ्जरी— भो भगवन्! श्रूयताम् । अतीतमासावसानसोमवार-प्रभातवेलायाम् अरुणाचलेशकुटुम्बिनीजगदम्बिकायाश्चार्तवस्नानमहामहो-त्सवावलोकनार्थं समागतेषु निखिलकामिनीकामुककदम्बेषु तत्रोपयान्ती मे प्रियवयस्या तद्गोपुरालिन्दप्रदेशमाश्रितं विद्युत्पुञ्जमिव तेजःप्रकाशितम् अतिधीरतया कुलशैलोपमं लावण्यादिरूपविशेषेण मकरकेतनसमानं अमर-नामराजानमद्राक्षीत् । अपिच —

अमरेन्द्रसमानवैभवं तं
अमराख्यं नरनायकं विलोक्य ।
स्मरतापभरादिवानिशं सा
परिदूना मम काहळी वयस्या ।। ७ ।।

अतः परं तदीयाभीष्टघटनाय भवानेव प्रमाणम् ।

विटशेखरः— (आत्मगतम्)

कन्दर्पबाणगणघोरतराभिघात-
जातार्तिभञ्जनमृणाळविलिप्तगात्रः ।

चित्रार्पितां समवलोक्य स काहळीं तां
शेतेऽधुना नरवरो भ्रमराभिधानः ॥ ८ ॥

अहं तु पूर्वेद्युः तदीयदुरवस्थामालोकयंस्तदभीष्टमखिलम् अद्यैव साधयिष्यामीति वदन् अत्र समागतोऽस्मि । इतः परमखिलमरुणाचलेश्वरीकरुणया सुसाध्यमेव । (प्रकाशम्) भद्रे! भवत्या प्रोक्तरणरणिकासफलीकरणाय भ्रमरदेवान्वितोऽहं काहळीगेहमुपगच्छामि । तदेतदखिलम् उच्यतां तत्रभवत्यै ।

सङ्गीतमञ्जरी— यथाज्ञापयति भवान् । अहो आसन्नसन्ध्योऽयं समयः ।

विटशेखरः— तथाहि –

शोणाम्बरा शशिमुखी चलितोत्पलाक्षी
चारुप्रसादतिमिराञ्चितकेशभारा ।
अम्भोजकोशकुचतारकलापलोला
सन्ध्याङ्गना समुपगच्छति पश्चिमाशाम् ॥ ९ ॥

सङ्गीतमञ्जरी— तदहमपि पूर्वप्रस्थिता भवदागमनं प्रतिपालयिष्यामि ।

(इति निष्क्रान्तौ ।)

विष्कम्भकः ।

(ततः प्रविशति सचिवद्वययुक्तो राजा विटशेखरश्च ।)

विटशेखरः— (राजानं निर्वर्ण्य आत्मगतम्)

प्रच्छाद्य लक्ष्म निखिलं क्षितिपालयोग्य-
मच्छांशुकावृतममन्दमणिप्रदीपम् ।
रक्षैकदक्षसचिवद्वयपार्श्वभाग-
मक्षीणकान्तिरुपयाति महीमहेन्द्रः ॥ १० ॥

राजा— अहमपि काहळीगोपुरद्वारभुवमधिरूढवान् ।

माणिक्यरत्नपरिशोभितशातकुम्भ-
कुम्भावलीकलितगोपुरसन्निविष्टः ।

प्राणप्रदातृसविधोपगतोऽहमेव-
माश्वासये किमपि कामुकचित्तवृत्तिः ॥ ११ ॥

( किञ्चिदन्तरं गत्वा ) अहो! काहळीगेहपाळीरमणीयता । तथाहि—

सुविमलमणिदीपव्रातसंवीतसौधा-
ङ्कणमृदुसिकतोद्यत्फुल्लमल्लीलताढ्यः ।
सुरभिसुममतल्लीसम्मिळन्मन्दवातो
जनयति मुदमारात् काहळीवासगेहः ॥ १२ ॥

( ससन्तोषमेव समासाद्य सौधान्तिकम् ) अहो! विचित्रतरवापिका समीपस्थलीमलङ्करोति । तथाहि—

मरतकमणिमुक्ताकल्पितानेकशिल्प-
स्फटिकमणिविचित्राकारसोपानपाळी ।
विमलसलिलपूरा राजते राजहंसा-
श्रितमधुपकळारावोदिता वापिकेयम् ॥ १३ ॥

(ऊर्ध्वमवलोक्य) अये! पश्य—

अभ्रङ्कषाकलितकाञ्चनविभ्रमश्री-
सौधोर्ध्वभागधवळीकृतचन्द्रशाला ।
काळागरुप्रविलसन्महिषाक्षधूप-
नीलाम्बरापि वितनोति मुदं जनानाम् ॥ १४ ॥

अपिच—

विद्युत्प्रभापटलकान्तिरमन्दवेगाद्
उद्यत्कराञ्चलविराजितदीपिकेयम् ।
विद्याधरीव गगनाङ्कणतोऽवतीर्णा
मामेव काचिदुपगच्छति सौधशृङ्गात् ॥ १५ ॥

(ततः प्रविश्य विद्युत्प्रभा नाम द्वितीया काहळीसखी मणिदीपहस्ता)

विद्युत्प्रभा—(सविनयम्) महाराज! विजयी भव । एतत्सोपान-परम्परामार्गेण समागच्छतु भवान् सौधशृङ्गस्थलीम् ।

राजा— भद्रे! यथार्थनाम विद्युत्प्रभे! भवत्याभिहितमखिलं कर्तु-मुद्युक्तोऽस्मि ।

विद्युत्प्रभा — तादृग्विधभागधेयमस्ति वा चास्माकम् ।

राजा —निखिलमस्ति । मार्गमादेशयतु भवती ।

विद्युत्प्रभा— यथाज्ञापयति भवान् ।

(सर्वेऽपि सौधारोहणं नाट्येन कुर्वन्ति । विटशेखरान्वितो राजा सङ्गीत-मञ्जरीविद्युत्प्रभाभ्यां कल्पितकुसुमशय्यातल्लजमुपाविष्टः तदन्तिकसमासादिताम् अन्यत् कुसुमशय्यामाश्रितामतिक्लेशभारां काहळीमवलोक्य आत्मगतम्)

कलितैककलाकलापलोला
ललना लोचनगोचरा कथञ्चित् ।
विलसत्कृशगात्रवल्लिकेयं
तुलितानङ्गवधूरिवातिकान्त्या ॥ १६ ॥

अपिच—

हिमकरमणिराजत्सौधशृङ्गोर्ध्वभागे
कुसुमसुरभिशय्यामाश्रिता काहळीयम् ।
हिमसलिलमृणालोशीरमालेयपङ्का-
ङ्कितनिटिलशरीरा कामसन्तापतप्ता ॥ १७ ॥

(प्रकाशम्) अहो! अत्याहितैव मदनावस्था । कुतः । विटशेखर! पश्य—

सख्या संवीज्यमाना मुहुरपि परिमृष्टाङ्घ्रिबाहूरुकाण्डा
प्रोक्तां चेतोहितोद्यन्मधुरतरकथाचातुरीं श्रूयमाणा ।
बाला चोन्मीलिताक्षी गळितनिखिलभूषायताश्वासपाता
शेते शातोदरी मे मनसि च सततातङ्कमद्याद्धाति ॥ १८ ॥

अपिच—

प्रद्युम्नात्मीयविद्येव विद्युल्लेखातभास्वरा ।
हृद्या मोहं गता शेते सद्यो मोहाय मे किमु ॥ १९ ॥

अये विटशेखर! मां धारय । (इति मोहमुपगच्छति।)

विटशेखरः— (राजानं सम्यग्धृत्वा शय्यायामेव शाययित्वा आत्मगतम्) अतिधीरचित्तवृत्तिश्चायं किमीदृग्विधो हि । (प्रकाशम्) अहो—

शोणाचलेशकरुणावरुणालयोद्यत्
सञ्जातकोमळसुधामयकाहळीयम् ।
लक्ष्मीरिवोल्लसति तामवलोक्य हा हा
देवः स्मरप्रमथितात्मकळेबरोऽसौ ॥ २० ॥

अतःपरं कीदृगुपायः कर्तव्यः ।

सङ्गीतमञ्जरी— अहमप्येतत्कालरमणीयं करणीयमपि कुर्वे । पश्यतु भवान् । (भ्रमरदेवस्य दक्षिणपाणिं काहळीदेव्या हृदये च तं देवीवामपाणिं भ्रमरदेवहृदये च कराञ्चलेन सम्यग् विन्यस्य मृगमदचन्दनोशीराहिमजलादि-सेचनपूर्वं संवीज्य काहळीभ्रमरनामधेयं मन्त्रवरं तद्द्वन्द्वकर्णयुग्मेऽपि किमप्या-श्रावयति । ततस्तौ चक्षुरुन्मीलनं कुरुतः ।)

राजा— (आत्मगतम्)

शरदिन्दुचन्दनहिमाम्बुचन्द्रिका-
सुरनिम्नगामिळदमन्दशीतलम् ।
करपङ्कजं हृदि निवेशितं तु मे
प्रिययाधुनैवमनुकम्पया किमु ॥ २१ ॥

(अथान्योन्याभिमुखमवलोक्य सखीविटकरावालम्ब्य मन्दमुत्थाय रोमाञ्च-कञ्चुकिताङ्गमानन्दसागरनिमग्नं किमप्याश्वस्तचित्तं सम्यग्चतुश्च ।)

काहळी— अत्रभवता चास्मद्रक्षणाय महानायासः कृतः, तत् क्षम्यतां मेऽपराधोऽस्ति चेत् ।

राजा— भद्रे! मदीयरक्षाविलम्बनोदितमदीयागोऽस्ति चेत् तत् क्षमस्वेति मया पूर्वमेव प्रार्थयितव्यम् ।

सङ्गीतमञ्जरी — महत्कार्यभारसमाकलितशेमुषीकस्य भवतः को वा अपराधः ।

विद्युत्प्रभा— भद्रे! भवदीयदुरवस्थायाः सर्वोत्कृष्टतररमणीयावस्थाया वा निदानभूतमेत जनं त्वदुपान्तसंवेशितं दृष्ट्वा स्वकीयाभीष्टनिवेदनाद् अन्यप्रलापादिना नैवायं कालविलम्बः कर्तव्यः ।

काहळी— कालातिक्रमश्चेत् सर्वज्ञोऽयमत्रभवान् स्वराजगृहं प्रविशतु । तदन्तरायो न स्यात् ।

राजा— अये विद्युत्प्रभे! एषा नैवोपेक्षितव्या राजशिक्षापात्र हि । तथाहि—

अस्मन्मानसचोरणं कलयती सैषा तु दण्ड्याधुना
प्रोद्यन्मामककण्ठकावृतकरद्वन्द्वोरुकारालये ।
निक्षिप्ता प्रतिबद्धपीडिततनुर्मुष्टिप्रहारादिना
तन्वीत्येव मया हि तत्रभवती चोपेक्षितव्या किमु ॥२२॥

सङ्गीतमञ्जरी— महाराज! किं बहुना । अस्मत्प्रियसखीविषयाशिक्षा-रक्षणादिसकलस्वातन्त्र्यं भवत्स्वायत्तमेव । इतःपरमपि न वक्तव्यम् ।

राजा— श्वो वा, परश्वो वा, सकलमपि साधयिष्यामि । (तदन्तरे उद्यानभूमितले घोरतराट्टहासः प्रोज्जृम्भति । सर्वे चोत्थाय समालोकयन्ति ।)

कोऽसौ घोरान्धकारच्छविररुणतराराळदंष्ट्रान्तराळ-
प्रोद्यत्कङ्काळमांसोच्चलितरसनया स्रक्विणीं लेलिहानः ।
आताम्रश्मश्रुकेशोज्ज्वलदनलकणप्रोद्गळद्रूक्षचक्षु-
र्मेधासृक्पानमत्तः पृथुकरचरणश्चान्त्रमालाकलापः ॥ २३ ॥

(प्रविश्य काहळीरक्षणाय तत्प्रदेशाश्रितः ।)

कुम्भाण्डभाण्डः— (आत्मगतम्)

आरामभूतलनिवेशितभीमकायः
श्रीरामरावणरणाङ्कणविद्रुतोऽयम् ।
दुश्चेष्टितप्रकृतिरुग्रकृपाणपाणि-
राकृष्टसत्त्वकबलीकृतपूर्णकुक्षिः ॥ २४ ॥

अहो! सुप्रसिद्धोऽयं कौणपाधमः कुटिलास्यः । (तदन्तिकं गत्वा प्रकाशम्) अरे! तिष्ठ तिष्ठ । प्रमथनाथं मां न गणयसि । तथाहि—

शोणग्रावनिकेतनाश्रितमहामायामहेशाश्रया-
दाज्ञसः परिचारकोऽस्मि भगवद्भक्तार्तिसंहारकः ।
कुम्भाण्डोऽहमहो विकर्मनिरतप्रध्वंसदक्षोऽनिशं
मध्यरात्रि सुरक्षणाय कलितोऽयं काहळीसन्निधिम् ॥२५॥

(प्रविश्य)

कुटिलास्यः—

प्रमथाधम! दुष्ट! तिष्ठ तिष्ठ
प्रथनायाभिमुखं रुषाधुना मे ।
करवालकराळधारया त्वद्-
गळमत्रैव विदारयामि धीरः ॥ २६ ॥

कुम्भाण्डभाण्डः— काहळीबालिकया समाचरितसोमवारव्रतपरितोषितारुणाचलेशकरुणावैभवात् तद्रक्षणार्थं नियुक्तं मां न जानासि । किं बहुना सद्य एव तत्फलानुभवं पश्य । रे रे!

कुट्टाकघाटिकठिनाशनिपातघोर-
मुष्टिप्रघट्टनसुपिष्टतरास्थिकूटम् ।
त्वामद्य पिण्डितकलेवरमाशु तूल-
क्षेपं क्षिपामि रुधिरोद्गळितं स्रवन्त्याम् ॥ २७ ॥

कुटिलास्यः— अहो! पश्य पश्य । काहळीमादाय मदीयमनोरथं साधयित्वा त्वत्पिशितशोणितादिना कुक्षिपूरणं कुर्वे ।

(कुम्भाण्डभाण्डः कुटिलास्यं पिष्टपेषणं कृत्वा तिरोहितोऽभूत् । सर्वेऽपि भीतिमोदभराश्चर्यसम्भ्रान्ताश्चासन् ।)

राजा— अहो! प्रभातप्राया विभावरी । तथाहि—

अह्नां नाथो विटाग्रेसर इव रजनीनिर्गमेऽयं सुरक्तः
प्राचीयोषित्कुचक्ष्माधरकलितकरो ध्वान्तनीलांशुकान्तम् ।
मन्दं मन्दं समाकृष्य च विहगकुलालापसीत्कारघोष-
स्तामप्यालिङ्ग्य खेदाकुलतरनळिनीं मोदयत्यात्मरागात्॥२८॥

अपिच—

अरुणतरणिबिम्बं पूर्वदिक्सुन्दराङ्गी-
कनकमणिविराजत्कण्ठभूषाभिरामम् ।
द्विजकुलवरनादः स्वस्तिवाक्योपमानः
कलयति हि सुखं मे शङ्खतूर्यादिघोषः ॥ २९ ॥

अधुनैवाहमपि गच्छामि । अनन्तरं युष्मत्समागमनमपि मया द्रुतमेव कर्तव्यम् ।

सङ्गीतमञ्जरी—(काहळीमुखमवलोक्य तदभिप्रायं विज्ञाय राजानं प्रति) अहो! महाभाग! इयं मे प्रियसखी राजशिक्षापात्रमस्ति चेत् किमुपेक्ष्य-गच्छसि? । एतन्नैवोचितम् ।

राजा—

अयि भवति! भवत्या यद्यदुद्दिष्टमिष्टं
सकलमपि च तत्तत् साधयिष्यामि सद्यः ।
भयचकितमृगाक्षि! त्वत्कराम्भोरुहाग्रं
समुचितकुलवृत्त्या पश्य गृह्णामि भद्रे! ॥ ३० ॥

सङ्गीतमञ्जरी -- ईदृशो वा भवत्प्रसादपरिणामः ।

राजा — (सचिवद्वयमाहूय कर्णे किञ्चित् सम्मन्त्र्य प्रेषयित्वा काहळीं प्रति) अयि भद्रे! प्रियसखीसहितं विवाहमङ्गळस्नानं विधाय सम्यगागम्यताम् । अहं तु तदर्थमुत्सुकोऽस्मि ।

(सखीसहितकाहळी राजा च पुरान्तःप्रवेशं करोति ।)

विटशेखरः— अहो! विवाहमङ्गळकर्मोचितसमस्तसम्भारसम्भृतभासुर-भूसुरवराः समागम्य गृहाभ्यन्तरं प्रविशन्ति । (समन्तादवलोक्य) अहो पूर्वाह्णकालावसानरमणीयता दिवसस्य । तथाहि-

प्रभाकरोद्यत्किरणारुणाम्बर-
प्रकाशिताशेषदिगङ्गनावृतः ।
विभाति भाग्योदयवासरो ह्ययं
द्विजोत्करालापजभाविमङ्गळः ॥ ३१ ॥

(शङ्खपटहादिघोषः समाकर्ण्यते ।) अहो! पाणिग्रहणमङ्गळवादित्रादि-घोष इव श्रूयते । (ससन्तोषं पुरतोऽवलोकयन् साश्चर्यम्) सकलराज-लक्ष्मावलीकलितकनकान्दोळिकादिसहितमुदिताशेषजनकोलाहलः सकल-सैन्यनायकः श्वेतकायश्चाभ्युपैति । अहो! विवाहमङ्गळवेषधारी राजा च पत्न्या सहितश्चागच्छति । राजा सुलळितपुळकोद्गमसम्मिळत्काहळी-कराञ्चलमवलम्बमानः समामोदभरितमुखारविन्दो बहिरासाद्य द्विजकुला-शीर्विशेषसम्पादनाय सकलजनसमक्षमासनवरमारूढवान् । अहमपि तद-न्तिकमद्य गच्छामि । (तथा कृत्वा) जयतु महाराजः ।

(प्राविश्य)

भूसुरोत्तमाः— भो राजन्! चिरं जीव विजयी भव । अद्याप्यमृतो-पमानषड्रसोपेतपरमान्नजातादिपरिपूरितोदरैरस्माभिः कृतमङ्गळाशीर्वचन-परिपूतो भवान् परिभाति । इदानीं पुरगमनायान्दोळिकां प्राणप्रिया-न्वितमलङ्करोतु ।

(सकलसैन्याधिपः श्वेतकायश्चागत्य)

स्वामिन् पश्यात्र मार्गोभयकनकमयोत्तुङ्गमातङ्गलीला-
गङ्गाभङ्गोच्चलत्पाण्डरतरुणतुरङ्गाळिसैन्यारवाद्यैः(?) ।

मध्येमार्गं समाच्छादितमृदुसिकताचामरच्छत्रपूर-
प्रोद्यच्चञ्चत्पताकाकलितपरिजनैः साकमेवागतोऽस्मि ॥ ३२ ॥

अपिच—

कलितांशुकमौलिफालराजत्-
तिलकश्मश्रुकलापलोहिताक्षाः ।
नळिकोद्धृतबद्धवर्मणस्ते(?)
निखिलास्त्रैः सह पत्तयो विभान्ति ॥ ३३ ॥

राजा — भो! मन्दतरमेवान्दोळिकाग्रप्रदेशमाश्रित्य समागच्छतु सैन्यनायकः ।

सैन्यनायकः— यथाज्ञापयति देवः ।

विटशेखरः - अहो! महाराजमङ्गळप्रयाणकर्मनिर्वहणायाहमपि प्रयतिष्ये ।

राजा — सकलमपि विधिवद् भवता कर्तव्यमेव । तद् गच्छतु भवान् ।

विटशेखरः— यथाज्ञापयत्यायुष्मान् । (इति निष्क्रम्य सैन्यकुलनायक प्रति) भो भोः सैन्यकुलनायक! श्रूयताम् । अये! ईदृग्विधमङ्गळघोष-यात्रायां साधारणसमरप्रक्रमसमुचितसैन्यविन्यासो नैव समाचरितव्यः । कोऽत्र विशेषश्चेद् वैवाहिकाग्निसम्भृतदम्पत्योः समन्तात् षोडशदण्ड-प्रमाणस्थली तद्वदेव देवालयमहामर्यादायाश्च बाह्यस्थली च पाषण्डशौ-ण्डिकनिषादसैनिकाद्यैर्न गन्तव्या । तेष्वेकोऽपि तत्प्रदेशमुपागतश्चेद् अशुद्धिः स्यादिति । केरळाचारप्रतिपादितभार्गवस्मृतिशासनाच्च चिरतरा-नुष्ठितपरम्पराचारगौरवाच्च महाराजकल्पितसर्वप्रजाभरणसाधुनियमाश्चे-दृशा विद्यन्ते । तत्तथा करोतु भवान् ।

(ततः प्रविशति पटीक्षेपेणोपसैन्याधिपः कृष्णकायः । त्रिचतुरसहायसहितः ससम्भ्रमं साटोपं किञ्चित् पर्यटन् दीर्घं निश्वसिति ।)

विटशेखरः—(तमालोक्य)किमिदानीं कृष्णकायोऽयं वारुणीसेवनारुणितचञ्चलदृगञ्चलः कटितटावलम्बितकराळकरवाळश्यामळतराराळश्मश्रुपाळिकलितास्यः कवचोष्णीषानेकशस्त्रगणभीषणकळेबरः षोडशसीसगुळिकोपयोज्यनळिकामुद्यम्य सद्य एव मद्यपानचञ्चलचित्तः सभ्यजनानुचितसम्भाषणं करोति (कर्णं दत्त्वा) अहो! ।

जातिस्पर्धाकुलः कृष्णकायो भाति मदान्धधीः ।
जातवेदसि सम्भ्रान्तपतङ्गाळीव निष्प्रभः ॥

कृष्णकायः— कोऽयमसम्बन्धप्रलापं करोति?

विप्रो वाप्यथवा शूद्रो दुष्प्रलापं करोति चेत् ।
क्षिप्रं निवारयाम्यद्य विप्रियं श्रूयते कथम् ॥ ३५ ॥

(सैन्याधिपमालोक्य) भो भोः स्वामिन्!

वृद्धोऽयं विटशेखरः प्रियसखो देवस्य दैवेच्छया
तद्वाचं सदसद्विचाररहितां कः श्रद्दधानो जनः ।
रक्ताद्यैश्च समानसृष्टमनुजव्रातेषु सङ्कल्पयन्न-
त्रोत्कृष्टनिकृष्टतां वितनुते स्वार्थैकचित्तान्धधीः ॥ ३६ ॥

तदधुनाप्येतद्वृद्धप्रलपितं नाङ्गीकर्तव्यम् ।

विटशेखरः—

हा हा गोजादिसाधुप्रवरसुमधुरक्षीरमुत्सृज्य तेषां
मांसासृग्भुक्तिसंवर्द्धितहृदयतमःस्तोमविभ्रष्टसत्त्वः ।
कस्त्वं ते धर्मसम्भाषणमपि च दयाशीलभावं समस्तं
सत्यं नैवात्र देवद्विजनिखिलविनाशार्थमेवाश्रितोऽसि ॥ ३७ ॥

अपिच—

किमहो समभावना समस्तैः
समभेकां तरुणीं सकामभेत्य ।
समभेकशरावभुक्तिरुग्र-
भ्भिजपैशाचिकवृत्तिरीदृशी वा ॥ ३८ ॥

कष्टमहो जन्मप्रभृति राजकीयसाचिवप्रधानपदप्राप्तिमात्रानियमज्ञान-हेतुभूतभौतिकविषयविज्ञानवतां युष्मादृशामीदृशो बुद्धिपरिणामः । तत् किमाश्चर्यम् । देवब्राह्मणोचितकर्मानुसृताचारवतां केषाञ्चिदन्त्य-जानामप्येवं चेत् सर्वलोकनाशकरं कलिकालविचेष्टितं खलु । किं बहुना । रे रे कृष्णकाय! चन्द्रोदयालोकितसारमेयरोदनामिव किं वा-क्रन्दसि? धर्मैकदैवतेऽस्मिन् महाराजे राज्यरक्षां सम्यक् कुर्वति त्वन्मनोरथपूरणाय नैवायं कालः । तद् गच्छ कार्यनिर्वहणाय ।

(निष्क्रान्तः कृष्णकायः ।)

श्वेतकायः—(विटशेखरं प्रति) अहो महात्मन्! महाराजप्रियसख! भवदीयाभिप्रायमनुसृत्य समस्तमपि साधु साधयामि ।

विटशेखरः— अहमपि राजानमनुगच्छामि ।

(इति श्वेतकायविटशेखरौ निष्क्रान्तौ ।)

राजा—(पत्न्या समेतो ब्राह्मणानभिवन्द्यान्दोळिकामाधिरूढः सैन्यकुल-कोलाहलादिसम्मिळितः समागच्छन्) अये! पश्य पश्य ।

कनकमणिमयोद्यत्केतनस्तोमलोला-
यितधवळपताकापूरताराभिरामा ।
मुदितजनकरोद्यत्स्पष्टमाञ्जिष्ठतोय-
प्रसरणरुचिराशा राजते मत्पुरश्रीः ॥ ३९ ॥

अपिच—

मालाराजिविराजिताखिलपुरद्वारोज्ज्वलत्तोरण-
श्रेणीकाञ्चनघण्टिकाघणघणारावाञ्चितेयं पुरी ।

रथ्याचत्वरमन्दिराङ्कणविकीर्णलोललाजाश्रिता
लीलाताण्डवशङ्खनादमुरळीमङ्गळ्यकोलाहला ॥ ४० ॥

अहो! अतिरमणीयामरुणाचलेशगोपुरद्वारसरणिमासादितः ।
(आन्देोळिकाप्रकाण्डादवतीर्य देवसन्निधिं गत्वा प्रियासमेतो महादेवं देवीमभ्यस्तौषीत् ।)

(भरतवाक्यम्)

अरुणाचलनाथ! पाहि पाहि
क्षणदानाथकलाधरं भवन्तम् ।
भरणीयजनोऽहमेत्य युष्मत्-
चरणाब्जं प्रणमामि मङ्गळार्थम् ॥ ४१ ॥

अरुणगिरिविराजचन्द्रचूडानुरक्ता
धरणिधरकुमारी सार्तवस्नानवेषा ।
जगति मिथुनयोगक्षेमदाश्वाधिरूढा
भवतु भगवती मे सर्वमाङ्गळ्यदात्री ॥ ४२ ॥

(सर्वे निष्क्रान्ताः ।)

॥ शुभमस्तु ॥

———[० ———

# शिवस्तुतिः

अस्तु स्वस्तिप्रदायि त्रिभुवनजयिनः शूलपाणेरपत्यं
प्रत्यग्ज्योतिःस्वरूपं गजमुखमजरायीश्वराराधितं वः ।
यत्र त्रैलोक्यनाथे निखिलतनुभृतामप्रमेयप्रभावे
विघ्नप्रध्वंसिनि द्राक् प्रमुदितहृदये वाञ्छितार्थप्रसिद्धिः ॥ १ ॥

नृत्तारम्भप्रभेदभ्रमदमरसरिद्भूरिकल्लोलमाला-
सिक्ताशेषाचलाग्रस्तलतरुविहरच्चातकद्वन्द्ववन्द्यम् ।
तत्तादृक्फालनेत्रज्वलदनलशिखादीप्तदिक्चक्रवालं
भक्त्या वन्दे तवाहं भव! सकलजगन्मङ्गलं तुङ्गमङ्गम् ॥ २ ॥

ऋक्षेशं मूर्ध्नि मुग्धं दधदमृतमयं देव! दिव्यस्रवन्ती-
वक्षोजक्षीरपानोत्सुकमिव सततं दुग्धसिन्धोरपत्यम् ।
रक्षालक्ष्मीवलक्षस्तव भुवनपते! भातु देहो महीयान्
दक्षाराते! मदीये हृदि शितपरशुच्छिन्नदुष्कर्मवृक्षः ॥ ३ ॥

नद्या मूर्ध्नि स्फुरन्त्या स्नपयसि सलिलैरङ्गमात्मानुगाना-
मुद्योतैर्लोचनाग्नेरपि हरसि हर! ध्वान्तमन्तर्निविष्टम् ।
हृद्यामप्यात्मविद्यां वितरसि तरसा संहरन्नप्यविद्यां
विद्वानद्रीन्द्रपुत्रीप्रियतम! न जनो देव! सेवेत कस्त्वाम् ॥ ४ ॥

अव्यक्तं पार्वतीश! त्वमसि तदमलं धाम धीमत्तमैर्यत्
सर्वैर्वृक्षास्थाविहीनैरपि हृदि निहितं निर्जरैरर्जुनस्तत् ।
सर्वश्लाघ्यं शरव्यं व्यतनुत वनचारिच्छलेनोपकर्तुः
दिव्यं दत्त्वास्त्ररत्नं भव! रणभुवि ते भक्तवात्सल्यमेतत् ॥ ५ ॥

शर्व! त्वत्सेवकानां भवति हि सुकृतं तादृशं येन सद्यः
सर्वक्लेशप्रणाशः शरणद! दुरितश्रेणिकाप्राणहानिः ।
निर्विघ्नं तत् त्वदङ्घ्रिद्वयकमलगता भक्तिरुर्वी विधेया
गुर्वर्काद्याः समस्ताः स्फुटममृतभुजस्त्वं, नमस्ते शिवाय ॥ ६ ॥

---

गाढोत्कण्ठितजीवनाथतनुसंश्लेषे त्रपासङ्कुला
गाढालिङ्गनचुम्बनादिविमुखी जाता तदास्तां पुनः ।
तत्कान्ताननवीक्षणेऽपि च ततो लोलेक्षणाकर्षणे
संस्थानेऽपि च तत्र तत्परिसराद् गन्तुं च शक्ता न सा ॥ ३६ ॥

स्वान्तरङ्गसुवेदिन्यां प्रमदस्नेहसङ्कुलाम् ।
चञ्चलभ्रूलतां दृष्टिं सख्यामर्पयति स्म सा ॥ ३७ ॥

तदनु स सुखसुप्तः स्वीयपर्यङ्किकायां
मृदुतनुवरतल्पे मुक्तनिद्रोऽनिरुद्धः ।
रुचिजितकमलां तां वीक्ष्य दैत्येन्द्रपुत्रीं
निजभुजविवरस्थां चिन्तयामास मोदात् ॥ ३८ ॥

केयं शशाङ्कोपमचारुवक्त्रा
भूसंश्रिता कल्पकवल्लिकेव ।
क्वाहं सुषुप्तस्त्वधुना प्रबुद्धः
कुत्रेति चात्यद्भुतमेव भाति ॥ ३९ ॥

प्रियविरहकृशाङ्गी भाति कन्या ममासा-
वतितरसुखदात्री लोचनाभ्यां सुधेव ।
वदनमपि ममैव प्रेक्षतेऽपाङ्गपातै-
र्मृदुविकसितनीलाम्भोजसोदर्यभूतैः ॥ ४० ॥

एनां सिसृक्षुः खलु पद्मजन्मा
प्राचीनलावण्यगणान् विहाय ।
नवं त्वसाधारणमात्मसृष्टं
जग्राह सौन्दर्यगुणं प्रसिद्ध्यै ॥ ४१ ॥

आपादचूडमतिसुन्दरचारुकान्ति-
सम्भूषितां सुकृतिलोचनपुण्यपूराम् ।

---

१. निजसखीसंकल्पचित्रेक्षणे संस्थाने घ.

केनापि धन्यजनुषापहृतान्तरङ्गा-
मेनामवैमि वनिताकुलमौलिमालाम् ॥ ४२ ॥

इति घनतरानुरागघनरसौ प्रतिक्षणतनुतरविसृमरप्रतीक्षणापसार्यमाणकटाक्षवीक्षणमृदुतरतरङ्गौ मिथस्समागमरसलाभाभिलाषसहप्रवृत्तापायशतशङ्काङ्कुरसहाङ्कुरितकुसुमशरविकारकारितरिरंसातिशयादिबहुतरमनोरथयादःसमूहौ अमन्दसौन्दर्यसन्दोहदेहसुषमाभररत्ननिकरौ प्रमोदसागरौ परस्परतनुस्पर्शनरणरणिकासम्मोदितकूलङ्कषकुतुकजनिताश्वितरोमहर्षनिचुळितमनोहरगात्रौ उषानिरुद्धौ विनिस्पन्दौ क्षणमवर्तेताम् ॥

एवं विवदतोरन्तःप्रेमसंशययोस्तयोः ।
प्रथितः प्रतिभूः प्राप्तो निर्णेता निपुणः स्मरः ॥ ४३ ॥

किं बहुना,

*तदनु निजभुजान्तर्मेळितां चुम्बनादि-
प्रतिहरणमनोज्ञां पञ्चबाणात्मजन्मा ।
मृदुतरपरिरम्भे वेपमानां सहर्षः
स्वपनसमयदत्तं स्वादयामास सौख्यम् ॥ ४४ ॥

रागो हि यस्मिन्नधिकः स एव
सम्मोददायीति गिरः स्फुटार्थाः ।
वराङ्गतश्चाधरबिम्बमेत्र
यदुत्तरानन्दकरं हि तस्याः ॥ ४५ ॥

---

* तदनु निजभुजान्तर्मेलयित्वानिरुद्धो
ललितनमितवक्त्रां प्रीतिलज्जाभिभूताम् ।
सुललितनयनान्तामुन्मिषत्पञ्चबाणां
स्वपनसमयदत्तं स्वादयामास सौख्यम् ॥ व.

तावत् सुकोमळतरातिमृदुप्रतीकं
कान्तं मनोभवसमुद्रसुधामयूखम् ।
आलिङ्ग्य सा स्वकुचयोः स्मरसूनुमेनं
तापं मनोभवभवं तमुषा व्यमुञ्चत् ॥ ४६ ॥

पूर्वं हि या निजवरार्पितचित्तवृत्त्या
सम्प्रार्थिता भृशतरं दयितेक्षणार्थम् ।
श्लिष्टे स्वकीयकुचयो रमणेऽतिरक्ते
त्यक्ता बभूव नितरामुषयैव निद्रा ॥ ४७ ॥

किं बहुभिरुक्तैः,

एवं च सा पुरुषलोचनचारशून्ये
सम्मोददे निजगृहेऽधिकतुष्टचित्ता ।
शृङ्गारयोनिसुतमेनमपेतशङ्का
शृङ्गारजीवनानिधिं रमयन्त्यवात्सीत् ॥ ४८ ॥

सोऽपि च इतरवरयुवतिजनमनोमन्दमन्दाक्षसन्दानदक्षाक्षीणतरसौन्दर्यातिमहितमहिळाजनगुणमण्डलमण्डितवरतनुतिलकया क्रमगत्वरत्रपाभरसहोदित्वरस्मरसमरनैपुण्यललितहावभावापाङ्गनर्मालापाद्यनङ्गविहारसङ्केतविलासशतवशीकृतनिजान्तरङ्गया निजहृदयवाञ्छितवितरणसकुतुकमानसया अतिधवळचारुतरचामराविरचितानिजाङ्गवीजनसमयातितरारुणकोमळकरपल्लवया निजवल्लभया सह रममाणः यथासमयदयितासमुपनीतातिमनोहरपरिमलपरिमिळिताङ्गरागानर्घदुकूलजालमालाहिमसलिलमधुरान्नकर्पूरवीटिकादिनिखिलसुखोपभोगोपलम्भसमानन्दितमानसः अतिरुचिविलसितनूतनतररत्नखचितवराङ्गुलीयकङ्कणादिभूषाभूषितमृदुतरारुणकोमळकरकिसलयाविरचितपादलाळनहृदयंगमनर्मालापादिपरिप्रीतमानसः प्रतिदिनजृम्भमाणमन्मथसञ्चोदनेनेव दयिताकुचकुम्भपरिरम्भ-

१. कोमलसुमाति., २. मनोरथ., ३. सौन्दर्यादि., ४. मालाधूपहिमसलिल., ५. मधुरकर्पूर घ.

वदनबिम्बचुम्बनाधरामृतास्वादनकरिकरलीलाधरमधुमधुरवीटिकासमादानरदननखसमर्पणाधश्शयनमणितमिलितसीत्कारादिकम् उद्गतमदनरसं निर्गतलज्जं विद्रुतधैर्यं परमानन्दसन्दोहमयं स्मराद्वैतरसावबोधकं समुदञ्चितपञ्चशरमहोत्सवमनुभवन्, क्वचन समये दयितां निजाङ्कमारोप्य तदङ्गसंवाहनादिसमयवञ्चनाविरचितनीवीहरणसमयसमागतलज्जानततद्वदनारविन्दचुम्बनललिताङ्गलतिकासमालिङ्गनपरमसारतररसमास्वादयन्, कुहचन मधुरतरकर्पूरवीटिकादायिन्या विमुक्तचित्रगात्रिकायाः सुरभिनखकराङ्गुलिविकीर्यमाणद्राघिष्ठचिकुरविसृमरपरामोदसम्पूरितनिखिललोकाया वल्लभाया मृदुतराङ्कशयो मणिमयसौधवातायनसमागतमृदुपवनलालितललितविग्रहः, क्वापि तया सह मधुरतरमधुसुगन्धिकुसुमनिकरहृद्यमुद्यानमासाद्य पिकशुकमधुकरबर्हिणमुख[1]तिर्यग्गणा[2]मिथुनललितलीलावलोकनजनितामोदपुळकनिचुळितशरीरः, क्वचिदतिलसितचन्द्रकरालिङ्गितैन्द्रीदि[3]शायां निशायां अङ्गजसङ्गरसङ्गताङ्गश्रमापनोदनाय निजकरालिङ्गितदयिताङ्गो मणिगणनिर्मिततीरनि[4]र्मलसलिलां वापीमुपगम्य तया समं विमलसलिलनिमज्जनोन्मज्जनमिथःसम्मेळनादिसरसजलक्रीडां वितन्वन्, कदाचन चतुरतरपणबन्धपूर्विकां द्यूतलीलां विरचयन्, विस्मृतपितृमातृभ्रातृप्रमुखबन्धुवर्गः उषाप्रेमातिरेकनिरुद्धे[5]तरविषयमनस्सञ्चारः, इतरजनानासादनीयां परतरबन्धदात्रीम् उषेतरमुक्तिं समन्वभूत् ॥

इत्यारमन्तीमसुरेन्द्रपुत्रीं
तेनानिरुद्धेन समं स्वगेहे ।
समागतानि क्रमशः किलोषां
चिह्नानि पुंसङ्गमवाचकानि ॥ ४९ ॥

तदनु बलिसुतकरनिकरपञ्जरबलपरिपालितशोणितपुरे प्रासासि-

१. तपान., २. तिर्यग्गणनायिकानायकमिथोनुरागालोकन. घ. ३. तैन्द्रदिशायां. ङ. ४. समालिङ्गन. घ. ५. निरुद्धविषयान्तरमनस्सञ्चारः घ.

कुन्तादिवरायुधधरागण्यभटगणसम्पूर्णनिखिलद्वारे निखिलजन्तुसन्तति-स्वान्तेनापि दुष्प्रवेशतरे कन्यापुरे संरक्षितां पितृमातृसखीतरजन-नयनपथानवतीर्णां स्वनाथतनयां म्लानामिव चिरतरविरचितसुमशरसङ्गर-संगतव्रणाङ्गीं तदङ्गसंगतचिह्ननिवेदनेनैव लक्षयन्तः तद्भवनपरिपालको-द्भटभुजबलनिर्धूतनिर्जरकुलनिर्जररिपुभटाः लज्जिताशया विस्मयभया-कुलाः सप्रियं बाणमासाद्य तत्प्रियसुताविचेष्टितमप्रियमपि यथातथ्यमेवं विज्ञापयामासुः ॥

दैत्याधीश! तवात्मजा बत विभो केनापि गूढात्मना
संसक्ता विहतव्रतावनपरैरस्माभिरालक्षिता ।
यत्नैरद्य महत्तरैरपि पुमानस्मद्दृशां गोचरः
संवृत्तो न तदद्य चिन्तय परं कार्यं त्वमार्योचितम् ॥ ५० ॥

श्रुत्वा स्वबालतनयापनयं स बाणो
रुष्टः शुचातिकलुषो गुरुलज्जया च ।
कन्यापुरं तदुपगम्य भटैः परीतो
जामातरं कुसुमबाणसुतं ददर्श ॥ ५१ ॥

मेघश्यामलकोमलाङ्गलतिकं द्राघिष्ठबाहायुगं
राकापूर्णशशाङ्कमुग्धवदनं राजीवतुल्येक्षणम् ।
वीरं देवनकर्मलोलमलसं लोकाभिरामं स तं
कान्तालिङ्गनकुङ्कुमाङ्किततनुं दृष्ट्वाभवद् विस्मितः ॥ ५२ ॥

ततश्च निजसमीपासमयसमागतस्ववधबद्धतृष्णबहुभटघटापरिवृत-बलिसुतसमालोकनसमयसमुदीर्णरोषकलुषीकृतहृदयम् उद्यतघोरपरिघं बन्धननिर्बन्धनिर्बद्धबद्धवैराद्भुतभुजबलानुद्भुतदनुजकुलमपि निजकरपरिघ-परिलसितपरिघदण्डेन निर्धुतकरचरणसन्धिबन्धमेव कुर्वाणं परानिरुद्धो-द्धतभुजबलमनिरुद्धं विलोक्य घनतरकोपारुणितनयनो महाबलो बलि-

१ कुसुमबाणतनयशाणोपलकषणाधिकविलसदतिकृशविशदीभूतमदनसङ्ग्राम-वृत्तान्तविग्रहां दितिसुतपतितनयामणिं लक्षयन्तः. घ. २ समीपसमागत .ख.ङ.

नन्दनः निजनन्दिनीमन्दाक्षसहितकटाक्षवलयवल्लीनिबद्धमपि तं घोरतरनागपाशनिबद्धं विधाय निजदुहितरमपि दयितविरहशृंखलाशृंखलितां समतनोत् ॥

निरुद्धमेवं जनकेन पाशै-
रुषानिरुद्धं निजजीवनाथम् ।
निरीक्ष्य शोकोपहतान्तरङ्गा
बभूव बाष्पाकुलचारुनेत्रा ॥ ५३ ॥

कारागृहे शृंखलया निबद्धो
नाथोऽनिरुद्धः स यदा निरुद्धः ।
तावच्च बालाप्यनिरुद्धशोक-
भूम्ना निरुद्धाप पतिव्रतात्वम् ॥ ५४ ॥

धिङ् मामनङ्गीकृतभागधेयां
यद्वा विधिं पञ्चशरं शशाङ्कम् ।
मन्दानिलादीनथवा किमेभि-
र्दुःखाकरं मत्पितरं तथैव ॥ ५५ ॥

पश्येयं दयितं कदास्मि मुदिता बद्धोद्यमं मद्धिते
श्लिष्येयं खल[1]शृंखलाविगळितं मद्बाहुवल्ल्या दृढम् ।
हृष्टा तद्वचनानि तानि शृणुयामालिङ्ग्य वक्षोजयोः
क्रान्ता तं मधुरं पिबेयमधरं वीरायितान्ते सुखम् ॥ ५६ ॥

इत्थमुत्तरळभर्तृविरहसम्भूतभूयस्तरनिस्तुलमूर्तशोकार्तचित्ता शृंखलितनिजदयितविशृंखलसमिंखितचेतना स्निग्धतलतळिमादिसात्कृतलळितमिळितनयनसलिलमृदुतरतनुवल्लिकातल्लजा शिशिरतरशिशिरकर[2]मृदुपवनादीन् विषतोमरादीन् विचिन्तयन्ती शोकविनाशविरचितवापीतटाकोपवनादिगमनशतगुणितविषादा शिशिरोपचारसखी[3]जनवचनानामप्य-

१. खलु ग. २. शिशिरकरकर ग. घ. ३. सखीजनानाम् क. ख.

नाधारभूता भोजनादेरप्यभाजनीभूता भूताभिभूतेव उद्भ्रान्तस्वान्तेव विगतचैतन्येव समदुःखसखीजनसमुदीक्षिता स्वाश्रयतरुकल्पतप्तजलपरिषेकपरितप्तनिदाघनवमालिकेव प्रम्लाना महीपृष्ठे विचेष्टमाना मुनिजनमतिरिव अनिरुद्धध्यानपरायणा अमररिपुवाहिनीव सुमनस्सायकविलोळिता पञ्चाननगतिरिव अचलाश्रिता दयितजीवाविलयान्निजजीवविमोक्षेऽप्यक्षमा निजानुरागप्रकटनायेव निगळितमपि दयितं निजहृदि[1] निगूह्य स्वयमपि तन्मनोनिलीना कमपि कालं वल्लभविग्रहलाभाग्रहाद्वा अनिरुद्धपुण्यनिवहाद्वा निजपितृकरवलभयाद्वा गिरिश[2]करुणावशाद्वा[3] अनासादितजीवितेशा दयितासादनाशापाशविपाशितजीविता साशङ्कमवात्सीत् ॥

एवं कोमळकाळनीरदगळद्धाराजलापूरित-
त्रैलोक्ये पथिकौघजीवितहरे संयोगिसौख्यप्रदे ।
काले सन्तमसावृताक्षिपतने हा! हा! विधिप्रेरणा-
न्मारामोघतराशुगातिविवशौ तावूषतुर्दम्पती ॥ ५७ ॥

तस्मिन्नेव च समये,

अनिरुद्धमपश्यतां जनानां
यदुवर्यालयवासिनां स कालः ।
घनशोकहतोद्यमाशयानां
सुखयोग्योऽप्यसुखप्रदस्तदासीत् ॥ ५८ ॥

सर्वज्ञोऽपि मधुद्वेषी गीर्वाणारिपुचेष्टितम् ।
अजानन्निव संवृत्तो मानुषं धर्ममाश्रितः ॥ ५९ ॥

---

१. हृदये ग. ङ. २. गिरीश ख. ङ. ३. करुणाभराद्वा घ.

तदानीञ्च,

बन्धं निशम्य यदुवंशमणेः समस्त-
संसारबन्धनविमोक्षपरो दयालुः ।
श्रीनारदः शुभतरं हरिनाम गाय-
न्नानन्दमूर्तिसदनं ससुखं विवेश ॥ ६० ॥

सभागतस्तत्र यदुप्रवीरैः
सभाजितः केशवसीरिमुख्यान् ।
महाबलान् सङ्गरलब्धवर्णा-
नुवाच संग्रामदिदृक्षुरेवम् ॥ ६१ ॥

भो! भो! यादवपुङ्गवा बलिसुतप्रेष्ठात्मजालालितो
बद्धश्चाप्यसुरेश्वरेण बलिना बालोऽनिरुद्धो बलात् ।
तस्मात् स्वीयशरासनैर्नमयत क्षिप्रं रिपूणां मुखं
सद्यः श्लाघ्यजयश्रियश्च लभत प्रीतामुषां तामपि ॥ ६२ ॥

इत्युदीर्य नित्यमुक्तसच्चिदानन्दरूपपरमात्मतत्त्वबोधविधुतसमस्तबन्धने समिद्धकोपसमस्तसात्वतपरिबृढपरिवृत्तलोचनालोकनजनितानन्दे देवदेवं प्रणम्य देवपथगते देवमुनौ, तदुदन्तनिशमनसमयसमुदीर्णामर्षप्रकर्षघूर्णितनयनाः घर्मजलोर्मिवर्मितविग्रहाः प्रत्यग्रविग्रहाग्रहोदग्रीकृतमानसाः पीताम्बरनीलाम्बरसाम्बसात्यकिप्रद्युम्नप्रभृतिप्रबलतरयदुप्रवराः अभूतपूर्वसमरसमुचितविमतनिकरगळगलितबहळरुधिररूषितप्रतिभयगदातोमरमुसलमुसुण्ठिचक्रपरिघमुखवरायुधमण्डलमण्डितभुजदण्डाः चण्डकरमण्डलकिरणनिरर्थीकरणसमर्थकार्तस्वरमणिगणविरचिततनुत्राशिरस्त्रमकुटकटककङ्कणादिभूषाभूषितशरीराः उद्धततरयुद्धबद्धोद्यमचलत्कुलाचलनिवहलीलावहगन्धसिन्धुरसङ्घैः अतिभीषणहेषारवोद्घोषितनिखिलदिगन्तराळसैन्धवसमूहैः महीतलतुलितविस्तारमहाजववाहनिवहोह्यमान-

तदर्हत्यभ्यवपत्त्या जीवितमस्या अवलम्बितुम् । अभ्यवपत्तिरनुग्रहः । अवलम्बितुं धारयितुम् । अर्हतीत्यनेन प्रार्थना गम्यते ।

अथ नायक आह— भद्रे इति । नागरिकाणामपि वैदग्ध्यमतिशेषे इति भावः । अयं प्रणयः इदानीमुपन्यस्ता याच्ञा । यथा—

'कामार्ता हि प्रणयकृपणाश्चेतनाचेतनेषु'

इति । साधारण इत्यनेन नायकेनापि भङ्ग्या प्रणयः कृत इति बोद्धव्यम् । सर्वथा सर्वप्रकारेण । अस्मत्प्रार्थनं विना युष्मत्प्रार्थनेनैव वयस्यव्यवहारेणार्धासनदानेन च मदभिप्रायः सेत्स्यतीत्यर्थः । समीहितार्थानुकूल्याचरणमनुग्रहः ।

अथ नायिका नायकमनुरक्तमवधार्य तस्मादसाधारणीं पदवीं लिप्सुस्तास्मिन् कृतकमनादरलेशमारोप्य सखीनिर्बन्धं निरुणाद्धि— अन्तःपुरविहारपर्युत्सुकस्येति । अनेन महाराजस्य विरहदुःखं न मत्कृतमित्युक्तम् । राजर्षेरिति । तस्य दुर्भगासु तपस्विकन्यासु कथमाभिरुचिर्भवतीति भावः । उपरोधेनालमिति । उपरोधेनास्य मनोरथभङ्गोऽस्माकं लाघवं च स्यादिति भावः ।

अथ दूयमानाया नायिकायाः वाग्वज्राहतो नायकः प्रणयभङ्गभीरुतया तन्मनःकालुष्यमपनेतुमारभते— इदमिति । नायिकानुसन्धानबलेन हृदयस्य साक्षात्कारादिदम् इत्युक्तम् । अनन्यपरायणं त्वद्दर्शनादारभ्यान्तःपुरेष्वपि पर्युत्सुकत्वं दूरमपहाय त्वदेकपरायणम् । अन्यथा अन्तःपुरपर्युत्सुकम् । हृदयसन्निहिते दयिते शिलादिप्रतिमायां परदेवतावत् सततसन्निहिते । सम्बोधनमेतत् । अनेन न च त्वत् सम्प्रत्ययार्थं व्याजेन चाटुभाषणं कृतम्, अपि तर्हि भूतार्थमेव इति सूच्यते । तथा च मालतीमाधवे—

'लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च'

इति । हृदयसन्निहितायास्तव मदीयं हृदयमन्यथा समर्थयितुमनुपपन्नमिति प्रकाश्यते । मदिरेक्षणे मदिरे हृद्ये ईक्षणे यस्याः । अनेन नयनकालुष्याभावादन्यथासमर्थनं न वास्तवमिति द्योत्यते । किञ्च तत्र कारणान्तरमस्ति तन्न जानामीति व्यज्यते । मदनेति । अन्यथा समर्थनं वास्तवं चेत् तदा पूर्वमेव मदनबाणपीडितोऽहमिदानीं पुनः कल्पान्तोदितदिनकरकिरणतीव्रस्य विरहसन्तापस्य दुस्सहत्वाद् गत्यन्तराभावाच्च हतोऽस्मि । प्राणापायशरणो भविष्यामीत्यर्थः ।

अथानसूया नायकस्य वैमनस्यं परिहरन्ती कर्तव्यं बोधयति—वअस्स इत्यादि । बहुवल्लभा राजानः श्रूयन्ते इत्यादिना अपायदर्शी स्नेह इति न्याय उद्भावितः ।

अथ नायकः प्रणयानुरूपमुत्तरमाह—भद्रे इति । मनोरथाधिकफलप्राप्त्या युष्माकं भद्रत्वमिदानीं सम्पन्नमिति भावः । किं बहुनेति । वचनेनेति शेषः । तथाविधवचनाक्षेपेण वक्ष्यमाणस्य वचनस्य सारत्वमल्पत्वं च व्यज्यते ।

परिग्रहबहुत्वेऽपीति । कुलस्येति सम्बन्धे षष्ठी । समुद्रवसना चोर्वी युवयोरियं सखी च ते द्वे मे प्रतिष्ठे इत्यन्वयः । निश्शेषसपत्नोद्धरणात् प्रजानामनुरागजननाच्च आत्मीयेऽस्मिन्नेव कुले सेयमुर्वी मया सम्यक् स्थापिता इयं युष्मत्सखी च परिग्रहान्तराणां सत्स्वपि पुत्रेषु युष्मत्सखीपुत्रे मदधिकारसर्वस्वसमर्पणात् कुलस्थितिहेतुत्वेन परिकल्पितेत्यर्थः । समुद्रवसना अखण्डेत्यर्थः । समुद्रस्य वसनरूपणं विरोधश्च उर्व्या नायिकात्वारोपणे लिङ्गम् । समुद्रवसनेति तद्गुणसंविज्ञानो बहुव्रीहिः । अनेन द्वीपान्तराणामप्याधिपत्यमुक्तम् । यथा रघुवंशे—

'न मामवति सद्वीपा रत्नसूरपि मेदिनी ।'

इति युवयोः सखीति व्यासेन सखीमनोरथलाभे युवयोरपि मनोरथलाभः सेत्स्यतीति द्योत्यते । अत्रैतत्सहोदरोऽस्य महाकवेः प्रयोगः—

"कलत्रवन्तमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥"

इति ।

निर्वृताः स्म इति । मनोरथाधिकाभ्युदयश्रवणात् परिपूर्णां निर्वृतिं प्राप्ताः स्म इत्यर्थः । सदृष्टिक्षेपमिति । वयं सिद्धमनोरथाः संवृत्ताः अतः समागमायानयोः कालविलम्बनं मा भूदिति दृष्ट्या निवेदितवतीत्यर्थः । अथ व्याजेन सख्यौ तत्समागमावसरप्रदानायारभेते— अणसूए इति । यथा एष इतस्ततो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विच्छति एहि संयोजयाव एनम् । इति । प्रस्थिते व्याजेन प्रस्थिते इत्यर्थः । असरण म्हि । अशरणास्मि असहायास्मि । अनेन त्रासलज्जादयो व्यज्यन्ते ।

इदानीं भयस्य नावकाश इत्याह— पुहुवीए इत्यादि । पृथिवीशरण्यः पूर्वमपि भयापनोदनपुरस्सरं स्त्र्यन्तरानुनयदक्ष इत्यर्थः । तव समीपे वर्तत इति शेषः । हुं इति वैक्लव्यद्योतको निपातः । गते एव न तु व्याजेन समीपे तिरोभूय स्थिते इत्येवकाराशयः ।

ननुरनुनये । आराधयिता प्रीणयिता । प्रस्तुतक्लेशसर्वस्वापनयेन ब्रह्मास्वादसब्रह्मचारिसुखप्रदातेत्यर्थः ।

तत्प्रकारं पृच्छति— किं शीतलैरिति । नलिनीदलतालवृन्तैः

नलिनीदलानामाकृतिसाम्यात्तालवृन्तत्वरूपणम्। बहुवचनेन शरीरोष्मणा प्रतिक्षणं ग्लानतया तेषां विनिमयो व्यज्यते। यद्वा आद्यर्थे बहुवचनम्। 'रघूणामन्वयं वक्ष्ये' इतिवत्। नलिनीदलतालवृन्तादिभिरित्यर्थः। आदिशब्देन कदलीदलादयो गृह्यन्ते। करभोरु!। अनेन तावदूरुसंवाहनमेवास्याभिप्रेतामिति द्योत्यते।

अथ नायकाभिप्रायं जानती नायिका लज्जाभरभरितहृदया सती भङ्ग्या तद्वचनं निषेधति—ण माणणीएसु इति। न माननीयेषु आत्मानमपराधयिष्यामि। गन्तुमिच्छति। न तु गता। अनेनौत्सुक्यलज्जे मिथः स्पर्धेते इति सूच्यते। तदानीं नायकस्तत्कालोचितया वचनभङ्ग्या स्वाभिप्रेतसिद्धये तां निवर्तयितुमारभते—सुन्दरीति। वशीकरणार्थं चाटुभाषणमेतत्। अपरिनिर्वाणः अनवसितः। अनेनातपोपपत्तिरुक्ता। आतपासहत्वं तव विशेषेण इदानीमस्तीत्याह—इयं चेति। इयमत्यर्थं शोच्या अवस्थैव समवस्था। विरहसन्तापनिस्सहतेत्यर्थः।

अतोऽयं गमनोपक्रमस्तत्र नोचित इत्याह—उत्सृज्येति। कथमातपे करिष्यसि क्षिपसीति दुष्करमेतदिति भावः। आत्मानमिति शेषः। परिबाधापेलवैः दुस्सहमदनसन्तापमृदुतरैः। अङ्गैरिति बहुवचनेन प्रत्यङ्गं पीडागौरवं द्योत्यते। अत्रौत्सुक्यहर्षकारुणिकत्वादयो व्यज्यन्ते। बलादेनां निवर्तयतीति। अनेन तद्वचनमतिलङ्घ्य लज्जया गन्तुं प्रवृत्तेति द्योत्यते। लज्जाभिभूता नायिका बलात्कारपरिग्रहं युक्त्या निषेधति—पोरव इति। पुरुवंशसम्भवानामयमविनयो न श्रुतपूर्व इति भावः। तथा मयापि विनयोऽवश्यं रक्षणीय इत्याह—मदणेति। मदनप्रतप्तापि खलु

नात्मनः प्रभवामि । कन्यकानां पितृपारतन्त्र्यादिति भावः । तथा च श्रीमहाभारते तथैवोक्तम् —

"यस्य मां दास्यति पिता स मे भर्ता भवेदिह ।
पिता रक्षति कौमारे भर्ता रक्षति यौवने ॥
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥"

इति ।

अलं गुरुभयेनेति । अत्र हेतुमाह — दृष्ट्वेति । इदमस्मत्समागमवृत्तान्तं दिव्येन चक्षुषा दृष्ट्वेत्यर्थः । गृहीतधर्मः विदितसकलशास्त्रार्थः । एतद् दोषग्रहणाभावे हेतुः । तत्रभवानित्यनेन पूज्यत्वात् प्रामाण्यमुद्घाटितम् । कुलपतिरित्यनेन मुनिसमीहितस्य सर्वाभ्युपगतत्वं द्योतयति । तत्र ते दोषं न ग्रहीष्यतीति । पितृनियोगानभ्युपगमेन समागमे निर्वृत्ते दोषं न कल्पयिष्यति प्रत्युत श्लाघनमेव करिष्यतीति भावः । महाभारतेऽप्येवमुक्तम् —

"मा मैवं वद सुश्रोणि! तपोराशिं दयात्मकम् ।"

इत्युपक्रम्य,

"जानामि भद्रे महर्षिं तस्य मन्युर्न विद्यते ।
इच्छामि त्वां वरारोहे भज मां त्वमनिन्दिते ॥
त्वदर्थमास्थितं विद्धि त्वद्गतं हि मनो मम ।
आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ।
आत्मनो मित्रमात्मैव तथाचात्मात्मनः पिता ॥

आत्मनैवात्मनो दानं कर्तुमर्हसि धर्मतः ।”

इति ।

“सा त्वं मम सकामस्य सकामा भव शोभने! ।
गान्धर्वेण विवाहेन भार्या मे भव भामिनि! ॥”

इति च ।

उक्तार्थस्यानुष्ठानपूर्वकत्वमप्यस्तीत्याह — गान्धर्वेणेति ।

गान्धर्वसमागमस्य निर्दोषत्वे सिद्धेऽपि लज्जाविनयाभ्यां वैमुख्यमाचरितुमारभते — अइ मुंच । अयि मुञ्च तावत् । भूयः प्रियसखीजनमनुमंस्ये इति । यथा पिता दूरस्थितत्वान्नावेक्षितः तथा सन्निहितं सखीजनं प्रत्यननुमाननं न खलु युक्तमित्यर्थः । सखीजनसमीपं गमिष्यामीति यावत् । भवत्वित्यनुवादे । कदा । मोक्षणमिति शेषः ।

अपरिक्षतेति । अपरिक्षतः अपरिभुक्तश्च कोमलश्चेति कर्मधारयः । अथवा अपरिक्षतः कोमलः कोमलत्वं यस्य इति । कोमलशब्दो धर्मे धर्मिणि च वर्तते । यथा —

‘श्रियः प्रसूते विपदो रुणद्धि यशांसि दुग्धे मलिनं प्रमार्ष्टि ।’

इत्यत्र मलिनशब्दः । अत एव सदयमित्युक्तम् । यावद्रसो गृह्यते तावन्मोक्ष्यत इति सम्बन्धः । अत्र हेतुः पिपासता इति । सुन्दरीति अत्र विरोधिनी मा भूदित्यावर्जनपरमेतत् । उपमानेनास्याधरपानत्वरा गम्यते । अत्रौत्सुक्यावेगादयो व्यज्यन्ते ।

मुखमस्याः समुन्नमितुमिच्छति शकुन्तलापि परिहरतीत्यनेन वक्ष्यमाणस्य विप्रलम्भस्य बीजन्यासः कृतः । पानायोपक्रान्तस्य तदलाभो दुःखाद् दुःखतर इति भावः । अत एव तन्मूलत्वेन

"मुहुरङ्गुलिसंवृताधरोष्ठम्" इत्यादिना उत्तरत्र विप्रलम्भोपक्रमः ।

अथ सम्भोगे कथञ्चिदवसितप्राये सति सखीजनो गौतमीसमागमनं व्याजेन निवेदयति - नेपथ्ये इत्यादि । चक्रवाकवधूः आमन्त्रयस्व सहचरं उपस्थिता रजनी । हे शकुन्तले प्रियसखि! आमन्त्रयस्व सहचरम् उपस्थिता गौतमीत्यर्थः । अथ नायिका नायकं ब्रूते — पौरव असंशयं मम शरीरवृत्तान्तोपलम्भाय आर्या गौतमी इत एवागच्छति । तद्विटपान्तरितो भव । न दूरं गच्छेति । अनेन तथाविधौत्सुक्यस्य स्थिरानुबन्धः सूच्यते ।

ततः प्रविशतीत्यादि । पात्रहस्ता वैतानिकशान्त्युदकपात्रहस्ता । जादे पुत्रि! । अपिः प्रश्ने । लघुसन्तापानि ते अङ्गानि । नायिका अस्ति मे विशेषः इदानीं शिशिरोपचारादिसम्प्रयेण सन्तापः सोढव्य अभूदित्यर्थः । गौतमी — अमुना शान्तिदर्भोदकेन निराबाधमेव ते अङ्गं भविष्यति । निराबाधमपगतनिःशेषपीडम् । अङ्गमिति न त्वङ्गानि । इदानीमङ्गमात्र एव पीडा जायत इति सूच्यते । परिणतः अस्तमितः । नायिका — हृदय प्रथममेव सुखोपनते ते अयत्नलब्धे मनोरथे । प्रियतम इत्यर्थः । कातरभावं न मुञ्चसि । सानुशयविहसितस्य कथं ते सम्प्रति । चिरकालेप्सितस्याधरपानस्यालाभात् सानुशयत्वम् । सम्प्रतीति । प्रियतमे दूरस्थिते सतीत्यर्थः । कातरभावं न मुञ्चसीत्यनुषज्यते । प्रस्थानकाले नायिका लतागृहापदेशेन तत्र गूढस्थितं प्रियतममापृच्छति — लदाघरअ इति । लतागृह सन्तापहारक, आमन्त्रये त्वां भूयोऽपि परिभोगाय । लतागृहव्यपदेशेन नायको विवक्ष्यते । सन्तापहारकेत्युभयत्र समानम् । आमन्त्रये त्वामिति । एकत्र मुख्यतया अन्यत्रोपचारात् ।

अथ नायकः स्वकीयं वियोगविप्रलम्भमवतारयति — अहो इत्यादि ।

मुहुरिति पुनः पुनः। अङ्गुलिसंवरणपौनःपुन्येन तन्निषेध-पौनःपुन्यं गम्यते। संवृताधरोष्ठं न तु संवृतोष्ठमिति। अनेन पिपासार्थमेव नायकस्य चुम्बनेच्छेति द्योत्यते। उक्तं च—

'अधरस्य पिपासता मया ते सदयं सुन्दरि गृह्यतेऽधरोष्ठः।'

इति। प्रतिषेधाक्षर इति। अनेन नायिकाया अङ्गुलिसंवरणनिषेध-निवर्तनाप्रगल्भत्वं द्योत्यते। मा मा इति प्रतिषेधाक्षरैः, न तु प्रतिषेधवाक्यैः। अनेन लज्जाभयसम्भ्रमादयः व्यज्यन्ते। अंस-विवर्तीत्यनेन प्रतिषेधाक्षरेष्वपि नायकस्य अनादरः प्रतीयते। कथमप्युन्नमितमित्यनेन अंसविवर्तनप्रयासस्य दुस्साधत्वमुन्नमननिरोध-पौनःपुन्यं च द्योत्यते। तुशब्देनाङ्गुलिसंवरणनिषेधाद्यनेक-प्रयत्नसन्निधापितस्य सम्भोगसर्वस्वभूतस्य चुम्बनस्यालाभाद् विषादा-तिशयो ध्वन्यते। स च विप्रलम्भं परिपुष्णाति। पक्ष्मळाक्ष्या इत्यनेनाक्षिसौन्दर्यकथनेन तत्कालोल्लसिता विविधा भावा व्यज्यन्ते। तथाहि— चिराभिलषितस्य सम्भोगस्याचिन्तितोपनतत्वाद्धर्षः, तथैव तद्विघ्नितत्वाद्विषादः, समागमस्येदंप्रथमतया लज्जात्रासौ च। एव-मुपयोगिनोऽन्ये भावा द्रष्टव्याः। सर्वे भावाश्चक्षुषि व्यज्यन्त इति न्यायात्। अत्र नायिकागता लज्जा नायकगतमौत्सुक्यं च उत्कट-त्वेन प्रतीयते। अङ्गुलिसंवरणादयो लज्जाया अनुभावाः, अङ्गुलि-संवरणनिषेधादयश्च औत्सुक्यस्य। एतौ परस्परं स्पर्धासाम्राज्य-मनुभवतः। चुम्बितं तदिति पाठान्तरम्।

अनन्तरकर्तव्यं निरूपयति— क्व नु खल्विति। सम्प्रति गच्छामि। उत्कण्ठाविनोदनार्थमिति शेषः। कर्तव्यमवधारयति— अथवेति। मुहूर्तमिति। मुहूर्तस्थितिरेव सन्तापशमनहेतुः न चिर-स्थितिरिति भावः।

तस्या इति। शरीरलुलिता शरीरपरिवर्तनक्लान्ता शिलायां

तदेनामुपसरतु भवती । अहमपि तिरस्कृतशरीरा यथापुरमिह पर्यटामि ।

वनदेवता — सखि! तथास्तु । (इति निष्क्रान्ते ।)

(प्रवेशकः ।)

(ततः प्रविशति यथानिर्दिष्टा सीता त्रिजटा सरमा च ।)

त्रिजटा — पुत्रि सुक्षत्रिये जानकि!

कोकी शोकं त्यजति रजनीकालदूरीकृतापि
प्रातः प्राप्य प्रियतममिदं नाम दृष्टान्तयन्ती ।
द्वित्रानद्यप्रभृति दिवसान् जीवितं त्वं यतथा
द्राघिष्ठत्वं न खलु विपदो दृश्यते त्वादृशीषु ॥ १३ ॥

सरमा — (क) हला जाणइ जुत्तं भणादि अम्बा तिअडा । ण खु तुह्मारिसीओ महापुरिसघरिणीभावसोहग्गसालिणीओ अच्चन्तदुःखभाइणीओ होस्सन्ति । किन्दु,

जोह्लाए वि ण जह्नवीलहरिआविच्छड्डसच्छाअ किं
पव्वाओ तुहिणुक्करेण जणिओ कंचि क्खणं लक्खइ ।
एव्वं दव्वविहाणदुव्विलसिअं सज्जो सअं झिज्जए
कालो चेअ सुहासुहाण सहसा संमेळणं काळणम् ॥ १४ ॥

---

(क) हला जानकि! युक्तं भणत्यम्बा त्रिजटा । न खलु युष्मादृश्यो महापुरुषगृहिणीभावसौभाग्यशालिन्योऽत्यन्तदुःखभागिन्यो भविष्यन्ति । किन्तु,

ज्योत्स्नाया अपि न जाह्नवीलहरिकाविच्छर्दस्वच्छायाः किं
प्रम्लायस्तुहिनोत्करेण जनितः कञ्चित्क्षणं लक्ष्यते ।
एवं दैवविधानदुर्विलसितं सद्यः स्वयं क्षीयते
काल एव सुखासुखयोः सहसा सम्मेलनं कारणम् ॥

सीता — (सास्रम्) (क) अम्ब तिअडे! पुव्वं खु जिस्से णिमेस-जणिओ वि अय्यउत्तमुहअंदसंदंसणप्पच्चूहो अदिदूसहो संवुत्तो । सा वि अहं एत्तिअं कालं अय्यउत्तेण विरहिआ जीवामित्ति अहो वज्जलेव-घडिआ विअ मे पाणा ।

त्रिजटा — पुत्रि एवमेतत् । कुतः —

क्रान्तौ यौ तव वासवेश्मनि किल न्यस्तौ मणिप्रस्तरे
पादौ तौ परुषाश्मकण्टकचिते मार्गे न यन्मम्लतुः ।
यत्पादाब्जरजोनुवृत्तिपरतालब्धः स भाग्योदयो
भर्त्रा तेन विना विडम्ब इव ते वैदेहि देहादरः ॥ १५ ॥

तथापि ब्रवीमि —

असूर्या नाम ये लोका अन्धेन तमसा वृताः ।
तांस्ते प्रत्यभिगच्छन्ति ये के चात्महनो जनाः ॥ १६ ॥

इति हि पारीणका आमनन्ति । अतो नात्महत्यां कर्तुमर्हसीति ।

सरमा — (ख) अयि अविस्सम्भशीळे किं! एत्थ वि अणस्सासो, जं पडिगहिअचूळामणिणा पट्ठिउं उवक्कन्तेण हणुमन्तेण आचक्खि-तं जह । (संस्कृतमाश्रित्य)

---

(क) अम्ब त्रिजटे! पूर्वं खलु यस्या निमेषजनितोऽप्यार्यपुत्रमुखचन्द्र-सन्दर्शनप्रत्यूहोऽतिदुःसहः संवृत्तः । साप्यहमेतावन्तं कालमार्यपुत्रेण विरहिता जीवामीत्यहो वज्रलेपघटिता इव मे प्राणाः ।

(ख) अयि अविस्रम्भशीले! किमत्राप्यनाश्वासः, यत् प्रतिगृहीत-चूडामणिना प्रस्थातुमुपक्रान्तेन हनुमता आख्यातम् । तद्यथा —

देवि! द्रक्ष्यसि वासरैः कतिपयैः सुग्रीवसुग्राहित-
प्रत्यर्थिच्छिदुरोपदेशनिहतक्रव्यादभव्योदयैः ।
आजुष्टं हरिसैनिकैर्दशमुखग्रावीसृगापाटलान्
बिभ्राणं विशिखान् धनुश्च सहितं भ्रात्रा रघूणां पतिम् ॥ १७॥

(क) इअ सुणंती वि किं ण पत्तिआअसि ।

सीता — (ख) हलाँ! मारुइणा पउत्तो सो कदिबअसद्दो वासराइ अदिक्कमिअ वच्छरेसु वट्टदित्ति जाणामि ।

त्रिजटा — (विहस्य) सरमे! सत्यमिदमालपन्तिं ।

प्रियजनविरहाग्नौ पच्यमानात्मकानां
परमिह तरुणानां वासरा वत्सरन्ति ।
हितजनपरिरम्भप्रौढसम्भोगकेळी-
रसहृतहृदयानां वत्सरा वासरन्ति ॥ १८ ॥

इति ।

---

(क) इति शृण्वत्यपि किन्न प्रत्येषि ।

(ख) हला! मारुतिना प्रयुक्तः स कतिपयशब्दो वासराण्यतिक्रम्य वत्सरेषु वर्तत इति जानामि ।

---

१. हला सरमे! मारु. ग. ख. ङ. २. ति. ग.

सरमा — (सीतामालिङ्ग्य) (क) हला जाणइ! सो खु मारुइप्पउत्तो कदिवअसद्दो मासद्धं पि ण छिविस्सिदि, किं पुण वच्छराइं। (त्रिजटां प्रति) अम्ब तिअडे! किं मण्णेसि, अत्ताणं सरणं संपत्तो अय्यउत्तविहीसणो रामभद्देण परिग्घेविस्सइ ण वेत्ति।

त्रिजटा — अयि मुग्धे! किमिदमाशङ्कसे। प्रणतवत्सलः स महात्मा रामभद्रः शरणागतमपराधिनं रावणमप्यनुग्रहीष्यति, किमुत विनयशालिनं विभीषणम्। (पुरोऽवलोक्य सहर्षं) अथवा किमर्थमिह विवदामः। यदेष कुमारविभीषणस्यानुचरः सम्पातिः समापतति, अस्मात् सर्वमवगन्तव्यम्।

(प्रविश्य)

सम्पातिः — अम्ब! प्रणमामि।

त्रिजटा — भद्रं[1] सम्पाते! अपि कुशलं कुमारविभीषणस्य।

सम्पातिः — अम्ब! महाराजविभीषणस्येति वक्तव्यम्। कुतः —

सम्प्राप्तस्य विभीषणस्य नमितं भक्त्यैव यद्यप्यसौ
कुर्वाणो मकुटातिभारघटनादूरावनम्रं शिरः।
हर्षाश्रुस्नपितान्यपि प्रपतितैः शीताभिषेकोदकै-
रङ्गान्यस्नपयत् स्वयं स करुणासान्द्रो नरेन्द्रात्मजः॥ १९॥

(सर्वा हर्षं रूपयन्ति।)

---

(क) हला जानकि! स खलु मारुतिप्रयुक्तः कतिपयशब्दो मासार्धमपि न स्प्रक्ष्यति, किं पुनर्वत्सरान्। अम्ब त्रिजटे! किं मन्यसे आत्मानं शरणं सम्प्राप्त आर्यपुत्रविभीषणो रामभद्रेण परिग्रहीष्यते न वेति।

---

१. द्र अपि . ग.

सीता — (क) सहि सरमे! तुह भत्तुणो विहीसणस्स लंकारज्जलाहेण दिट्ठिआ वड्ढसि ।

सरमा — (ख) सहि[1] जाणइ! तुह भत्तुणो उत्तरकोसलाहिणाहस्स पसाओ कस्स किं ण संपादइस्सिदि ।

सम्पातिः — स्वामिनि सरमे! मार्ताण्डकुलकमालिनीमार्ताण्डस्य तत्रभवतः सावरजस्य रामभद्रस्वामिनः कुशलवार्तया वर्धयतु भवती तदन्तःपुराणि ।

सरमा — (ग) सहि जाणइ! किं सुदं संपादिणो वअणं ।

सीता — (घ) अह इम् ।

त्रिजटा — भद्र! ततः परं तत्र को वृत्तान्तः ।

सम्पातिः — अम्ब! तत्रेति क उद्देशः परामृश्यते ।

त्रिजटा — ननु समुद्रस्योत्तरतीरप्रदेशः ।

सम्पातिः — (विहस्य) कः खलु कालस्तमुज्झतः सुग्रीवसैन्यसमग्रस्य दशग्रीवनगरमलंकुर्वतः सावरजस्य[2] रामदेवस्य ।

---

(क) सखि सरमे! तव भर्तुर्विभीषणस्य लङ्काराज्यलाभेन दिष्टया वर्धसे।

(ख) सखि जानकि! तव भर्तुरुत्तरकोसलाधिनाथस्य प्रसादः कस्य किं न सम्पादयिष्यति ।

(ग) सखि जानकि! किं श्रुतं सम्पातेर्वचनम् ।

(घ) अथ किम् ।

---

१. हि तुह. ख. ग. ङ. २. सतानुजस्य. ख. ग. ङ.

त्रिजटा — तत् कथमिव ।

सम्पातिः — श्रूयताम् — महाराजविभीषणावबोधितेन रामदेवेन लङ्कापुरगामिनं पन्थानमभ्यर्थितोऽपि यदा न धैर्यममुञ्चदम्भसां भर्ता[1] तदा किञ्चिदिव क्रोधपाटलितदृशा तेन तावदाग्नेयमस्त्रमात्मधनुषि संहितमासीत् ।

त्रिजटा — अहो अनात्मज्ञता सागरस्य । कुतः —

यस्य पूर्वपुरुषैर्महारथैर्यः पुरा हि सगरैर्विवर्धितः ।
तेन दाशरथिनैव याचितो नाचलत् किल कृतघ्न एव सः ॥२०॥

ततस्ततः ।

सम्पातिः — ततश्च,

अस्त्राग्निप्लोषशीर्यत्तिमिकमठकठोरास्थिभस्मावकीर्णा-
दर्णोधेराविरासीदतिबहलभयभ्रान्तचेताः प्रचेताः ।
बद्धस्तद्दत्तमार्गे पयसि कपिभटैरद्रिसङ्घेन सेतु-
र्विश्वेषां प्रीतिहेतुर्विमतपरिषदां विप्लवे धूमकेतुः ॥ २१ ॥

त्रिजटा — (सीतामालिङ्ग्य)[2]

वैदेहि! दिष्ट्या परिवर्धसे त्वं
कृतोऽद्य भर्त्रा तव वेणिमोक्षः ।
सतीव्रतस्य स्थिरताप्तये ते
स एव सेतुः परमैकहेतुः ॥ २२ ॥

(प्रविश्य)

वनदेवता — अयं च द्वितीयहेतुः (इत्यङ्गरागं दर्शयति ।)

---

१. मुञ्चदम्भ. ग. ङ. २. तां परिष्वज्य. ख. ग. ङ.

सीता—(सहर्षम्) (क) अम्मो पियसही णं एसा अणब्भा सुहाविट्ठी ।

त्रिजटा—पुत्रि जानकि! का पुनरेषा ।

सीता—(ख) अम्ब! एसा खु जणट्ठाणवणदेवदा मन्दारवई णाम मे दुदीअं हिअअं ।

सरमा—(ग) सहि मन्दारवइ किं एदं कुदो वा आअच्छसि ।

वनदेवता—एवमिव ।

त्रिजटा—अहो भगवत्या लोपामुद्राया अनसूयायाश्च स्नेहातिशयः । यदिदानीमीदृगवस्थायास्ते पातिव्रत्यस्य दार्ढ्योपपत्त्यर्थम् अयमङ्गरागोऽनुप्रेहितः, तत् प्रतिगृहाण जानकीमङ्गरागम् ।

सीता—(घ) सहि उवणेहि एदं तुवं च उपविस ।

(वनदेवता तथेत्यङ्गरागमर्पयित्वोपविशति ।)

सीता—(ङ) सहि मन्दारवइ! अवि सुहं भअवईए लोवामुद्दाए भअवदो कुम्भअम्मस्स अ ।

---

(क) अम्मो प्रियसखी! नन्वेषानभ्रा सुधावृष्टिः ।

(ख) अम्ब! एषा खलु जनस्थानवनदेवता मन्दारवती नाम मे द्वितीयं हृदयम् ।

(ग) सखि मन्दारवति! किमेतत् कुतो वागच्छसि ।

(घ) सखि! उपनयैतत् त्वञ्चोपविश ।

(ङ) सखि मन्दारवति! अपि सुखं भगवत्या लोपामुद्राया भगवतः कुम्भजन्मनश्च ।

---

१. वदी णाम. ख. ग.

वनदेवता — अथ किम्? । इदमुक्तश्च भगवत्या लोपामुद्रया । अयि वासु वासुन्धरेयि!

रणे रक्षोघ्नानां रघुसुतशराणां सहचरै-
रवन्ध्यैर्विन्ध्याद्रेर्विनयजनकैरुच्चशिरसः ।
प्रभावैर्मद्भर्तुश्चुलुकितसमुद्रस्य तपसां
भवेयुस्ते कामाः सुभगपरिणामाः सुवदने ॥ २३ ॥

किमन्यदाशास्महे इति ।

सीता — (क) अणुग्गहिदह्मि । अह पुच्छामि पिअसहि! अवि जणट्ठाणतपोवणे मम किित्तमपुत्तिआ मोत्तिआणुकारीहिं मुउलणिउरुम्बेहिं सम्पुण्णमण्डणा संवुत्ता सिन्दुवारलआ ।

वनदेवता — (सस्मितम्) आम जानकि! आम । किन्तु —

त्वत्पाणिप्रणिदत्तपत्रकलशस्वच्छांबुसंवर्धिता
यासौ सुन्दरि! सिन्दुवारलतिका चूतस्य जाता वधूः ।
सेयं कण्टकिना हठेन तरुणा केनापि शाखाभुजै-
राकृष्टा परिशुष्यति प्रतिदिनं न त्वेनमालिङ्गति ॥ २४ ॥

---

(क) अनुगृहीतास्मि । अथ पृच्छामि प्रियसखि! अपि जनस्थानतपोवने मम कृत्रिमपुत्रिका मौक्तिकानुकारिभिः मुकुलनिकुरुम्बैः सम्पूर्णमण्डना संवृत्ता सिन्दुवारलता ।

---

१. वैर्भर्तुर्मे ग. ङ. २. सा सुन्दरि ख. ग.

## REVIEWS OF OUR PUBLICATION

(From Deccan Bullettin Vol. XIV, No. 2)

II

AVANTISUNDARĪ OF DANDIN

*Avantisundarī of Ācārya Daṇḍin*, No. 172, Trivandrum Sanskrit Series, University of Travancore, published by *Suranad Kunjan Pillai*, M. A. (Eng.), M. A. (Sans.) and M. A. (Mal.), Hon. Director, University Manuscripts Library, Trivandrum, 1954, pp. 1 — 24 and 1 — 216. Price Rs. 4/-.

The volume under review is an important publication in the Trivandrum Sanskrit Series. Till now *Avantisundarī* of Ācārya Daṇḍin is known only by name and it has now seen the light of day in an imperfect form only, yet it would reveal many facts hitherto unknown to scholars. The Manuscript material used for its publication is very defective in that it is fragmentary and full of *lacunæ*. Śri M R. Kavi and Pt. S. K. R. Sastri have jointly published long ago in 1924 a fragment of the work which contains only the beginning of the work and a portion of *Kathāsāra* by a later writer. A more perfect but incomplete version of the Kathāsāra in verses has been published by Pt G. Harihara Sastri in the J. O. R. Madras, as its supplement. All these indicate the imperfect nature of the manuscript material of both the *Avantisundarī* and its abridgment. In the present volume which contains the text for 216 pages, there is hardly one page without *lacunæ*. It is hoped that the vigorous search for valuable manuscripts all over India by scholars, and the authorities of various Universities, Research Institutes and

Libraries may be successful in procuring good and more reliable MSS. of this important prose-work in Sanskrit.

The work *Avantisundarī* is ascribed to *Ācārya Daṇḍin*, the *great prose-writer and rhetorician in Sanskrit.* There is no doubt about Daṇḍin's authorship of this work as doubts are often expressed by scholars with regard to that of *Daśakumāracarita*—another important prose-work in Sanskrit. There is close similarity between *Avantisundarī* and *Daśakumāracarita pūrvapīṭhikā* with some important deviations also, which are noted in this Introduction by Pt. K. S. Mahādeva Śāstri, the editor of this work. These similarities and deviations make scholars doubt Daṇḍin's authorship of the latter. Some are inclined to say that the whole of *Daśakumāracarita* is not by Daṇḍin while others opine that only the *pūrvapīṭhikā* of the work is not by Daṇḍin, etc. A few scholars however try to fix the authorship and date of Sanskrit works by *style* but such an atempt presents all kinds of difficulties if one and the same author is capable of writing different kinds of style—some-times very simple and grand but some time very hard and ornate, according to the nature of the subject-matter and sentiments (*Rasas* and *bhāvas).* In addition to these two works in Sanskrit prose, Daṇḍin is known as the famous author of *Kāvyādarśa*, a standard work in Sanskrit Poetics. He is also ascribed another work *Dvisandhāna* about which very little is known. A few more works like *Chandoviciti* are mentioned as the works of Daṇḍin. Pt. Mahādeva Śāstri discusses these points in his introduction and comes to the conclusion that Daṇḍin has written three works only (as Rājaśekhara has observed) and that they are *Avantisundarī*, *Kāvyādarśa* and *Dvisandhāna*.

About the date of Daṇḍin again, scholars have divergent views. The date, *viz.* the close of the *seventh* century or the beginning of the *eighth* century after Christ as suggested by the editor, can be accepted as the most probable one, since he places one Dāmodara, the great-grandfather of Daṇḍin, according to *Avantisundarī*, at about 600 A. D. when the Pallava king Siṁhaviṣṇu has ruled and had Dāmodara in his court as a *protege*.

There are many interesting things in *Avantisundarī*. First, just like *Harṣacarita* it mentions and pays homage to many previous literary worthies or works such as the *Rāmāyaṇa*, the *Mahābhārata* and the *Bṛhatkathā*, the three great store-houses of stories and moral and spiritual maxims; Subandhu, King Sarvasena (Pravarasena ?) the author of *Setubandha*, Bhāsa, Kālidāsa, Śūdraka, Mayūra, Bāṇa, and a few others. Again just like Bāṇabhaṭṭa in *Harṣacarita* he gives his autobiography to some extent which is very interesting and important. The editor Mahādeva Śāstri has given an account of it in his Introduction. King Siṁhaviṣṇu of Kāñcī was told by a Gandharva the genealogy of our author, Daṇḍin. In Ānandapura flourished a Brahman family of *Kauśikagotra* proficient in Vyākaraṇa and Mantraśāstra. In that family was born one Nārāyana who performed many sacrifices and to him a son was born called Dāmodara. This Dāmodara was a great friend of poet Bhāravi and through him he made acquaintances with prince Viṣṇuvardhana with whom he had to go on a hunting expedition. At that time he made acquaintance with prince Durvinīta of Gaṅgā dynasty and he lived with him for a few years. During that time King Siṁhaviṣṇu sent message to Dāmodara to come to his court, and so Dāmodara came to Kāñcī and settled down there. He wrote several works, one of which is

*Gandhamādana*. He married and got three sons, Siṁhaviṣṇu, Manoratha and Atilobha. Manoratha got four sons—Dāmodara, Bhavadāsa, Siṁhaviṣṇu and Vīradatta. Vīradatta married one Gaurī and got a son called Daṇḍin (our author) along with a good number of daughters. At the age of seven, Daṇḍin had his Upanayana ceremony but soon he lost his father. He was forced to leave Kāñcī at that time, but he soon returned to the capital.

A renowned architect Lalitāditya came to Kāñcī to see Daṇḍin. He told Daṇḍin that he had joined a broken arm of the idol of Viṣṇu in Mahāmallapuram and requested him to see whether it was correctly done. Daṇḍin started with his friend Raṇamalla and he saw to the surprise of all that the arm was jointed so skilfully that one cannot even see where the arm had been broken. Daṇḍin was able to meet there his old friends Mātṛdatta and Devaśarman from Kerala. They saw a lotus flower being washed ashore from the sea and when it reached the feet of Lord Viṣṇu, it became a Vidyādhara who worshipped the Lord, but suddenly disappeared. All were anxious to know the mystic significance of this wonderful event. They returned to Kāñcī and Daṇḍin performed a special *pūjā* of Lord Viṣṇu. At night he saw in a dream the goddess of Learning Sarasvatī who blessed him to get a revelation of the story of Rājavāhana, the king of Vidyādharas. Next morning Daṇḍin began to narrate the story of *Avantisundarī* to his friends. This is the gist of his autobiography and the source of his *Avantisundarī*.

There are many other interesting accounts of persons and places which are very valuable from the point of historico-literary Research. The work is unique in many respects and it is written in a lucid and grand style though it is interspersed in some places with somewhat long compounds. The section 'Lakṣmīviḍambana'

pp. 44-45 gives a true picture of the evils produced by Lakṣmī — wealth and prosperity -- in a man especially in a ruling prince and it resembles in many respects that which is found in *Śukanāśopadeśa* in the *Kādambarī*. Similar vivid and beautiful descriptions are found in abundance and they bring home to the readers many truths which have great practical value and utility in human life. It is needless to say that the book is worth studying by every student of Sanskrit for its exquisite beauty and wonderful diction and construction of sentences which have a rythm while reading.

The Hony. Director of Trivandrum University Manuscripts Library Śrī Śūranād Kunjan Pillai and the editor Pt. Mahādeva Śāstri are to be congratulated for having published this important prose-work of Ācārya Daṇḍin though the work has appeared in this edition in an imperfect form. It is hoped that the editors at Trivandrum would make a vigorous search for more complete MSS of this work at Kerala itself which is a rich storehouse of many valuable manuscripts in Sanskrit and other languages and bring out a more complete and critical edition of this epoch-making prose work in Sanskrit.

V. A. R. Sastri.

---

Licence No. 644, dated 9-3-1949.

VOL. VIII. NO 4.

# JOURNAL OF

# THE TRAVANCORE UNIVERSITY ORIENTAL MANUSCRIPTS LIBRARY




[Annual Subscription Rs. 4]

S. V. G. PRESS, FORT,
TRIVANDRUM.

1956/1131

CONTENTS.


1. कामाक्षीस्तवः ... ... 1 — 4

2. अभिज्ञानशाकुन्तलचर्चा... ... 5 — 12

3. होराभिप्रायनिर्णयः ... ... 13 — 20

4. सीताराघवम् ... ... 21 — 52

5. उषापरिणयप्रबन्धः ... ... 53 — 62

6. त्रिपुरदहनम् ... ... 63 — 85

7. A Report on the working of the University Mss. Library. ... 87 — 98

8. Sahitya Akademi. SURANAD KUNJAN PILLAI ... 99 — 106

9. अमरकाहळी (श्लोकानुक्रमणी) ... 107

10. शिवविलासः (शुद्धिपत्रम्) ... 1 9

11. A Note on Bhōjana Kutūhala. ... 111 — 115

12. Acknowledgement. 117 — 118

## कामाक्षीस्तवः ।

कण्डूलगण्डविगळन्मदवारिधारा-
गण्डूषपण्डितमधुव्रतमण्डिताय ।
शुण्डालबन्धुरमुखाय तुषारभानु-
खण्डावतंसकलिताय नमः शिवाय ॥ १ ॥

रसाळतलभूषितं रजनिबन्धुना भूषितं
समग्रमनुकम्पया सविधसेवितं कम्पया ।
नमत्सुमनसं पदे नमत सन्ततं सम्पदे
गिरीशमधिकाञ्चि तं गिरिसुताकुचाङ्काञ्चितम् ॥ २ ॥

जयन्ति श्रीमन्तो जडिमहिमसंहारमिहिरा
मनीषामाकन्दप्रसवनववासन्तदिवसाः ।
गिरां नाथे! नानारसभणितियोषाभिसरण-
प्रदोषा निर्दोषास्तव चरणसन्नामविधयः ॥ ३ ॥

क एष प्रस्तावस्तव नवनसन्नाहपदवी-
दवीयो देवीदं धिषणधिषणानैपुणमपि ।
तदास्तामुद्योगः स्तुतिवचसि याचे पुनरिदं
समस्तोऽत्र स्तोत्रीभवतु मम सञ्जल्पनविधिः ॥ ४ ॥

---

This is a Stotra in praise of Kāmākṣi, the goddess installed in the temple of Kanchi. There is only one Ms. of this in our collection, Viz. Ms. No. L. 103.

सदा याचं याचं कथितबहुवाचं जनमिमं
प्रति क्रोधो वेधोरमणि! करणीयो न कलया ।
न योगप्रावीण्यं न च बहुविधस्तोत्रपटिमा
न वा सेवादाक्ष्यं किमिह विदधे याचनमृते ॥ ५ ॥

जतुद्रावं देवि! द्रवतु जवतश्चित्तजडिमा
शरत्पद्मोन्मीलं मम विलसदुन्मीलतु मनः ।
मुखाद्वीची वाचां त्रिदिवविगळन्निर्जरधुनी-
तरङ्गाळीगाळं गळतु मधुनिष्यन्दमधुरा ॥ ६ ॥

जगन्नाथे! जाल्मं निबिडजडिमग्रन्थिजटिलं
जनं दीनं मैनं जननि! मनुथाः स्मान्यशरणम् ।
प्रमीळाप्रम्लानं पदयुगळनाळीकविगळ-
न्मधूळीपाळीभिर्मम सरजसं क्षाळय मनः ॥ ७ ॥

जगन्मातर्जातप्राथिमनि मनीषाजडिमनि
स्तुणाने खिन्दानः किमिव मनवै किं वितनवै ।
प्रसीदासीदात्मन्यखिलदुरितोत्सादिनि! दिने
दिने दीनेऽदीने! मयि वितर कारुण्यकणिकाम् ॥ ८ ॥

करे वामे वामे! कमलमृदुळे पुस्तकधरं
परस्मिन् साक्षस्रक्स्फटिकनिभमत्रासवरदम् ।
भवत्वन्तः साक्षादकृपणकृपाकन्दळमिळत्-
कटाक्षव्यापारं वपुरुपनिषज्जीवितमिदम् ॥ ९ ॥

कृपाकोपाटोपस्फुरितपदपञ्चास्यदळिताद्
घनस्वान्तध्वान्तप्रकरकरिसन्दोहशिरसः ।
समुन्मुक्ता मुक्तामणय इव शुद्धा भणितयो
भवद्भक्तास्येभ्यो भगवति! विसर्पन्ति परितः ॥ १० ॥

ममान्तर्वाणि! त्वं हर तिमिरमित्यर्थनविधां
विधास्यन् यस्तस्मै पदयुगळमात्रं कथयते ।
असौ शास्त्रज्ञत्वं वरयितुमुपक्रान्त इति तद्
ददानः सद्यस्ते जयति सदयासम्भ्रमरसः ॥ ११ ॥

असौ सेवा दावे रुदितमियमिज्या जललिपि-
र्गजस्नानं ध्यानं तदपि स जपो भस्मनि हुतम् ।
प्रणामो नामैष प्रकृतिजळमूकाङ्घ्रिपतनं
यदम्बालम्ब्येत प्रतिदिनमनुद्दिश्य भवतीम् ॥ १२ ॥

सजीवो मा जीवन् भवति बत मा जाग्रदपि मा
विजानन् मा ध्यायन् जनजननि! तस्यास्त्वजननिः ।
न यस्त्वामाशास्ते न विनमति न स्तौति मनुते
न नोपास्ते नाध्येत्यवति न वृणीते न च सकृत् ॥ १३ ॥

गळद्दम्भां शुम्भत्पृथुलकुचकुम्भां हृतशशि-
प्रभाडम्भां सम्भावितलिखितगुम्फाजपपटाम् ।
मनस्तम्भारम्भप्रथुमनि (?) भजे त्वां कृतकृपा-
परीरम्भामम्भोरुहसदनसम्भोगकलिकाम् ॥ १४ ॥

भवत्या नित्योत्तंसितसितसुधासूतिविगळत्-
सुधासारस्रोतोविसर इव हृत्पङ्कजजुषः ।
नृणां त्वद्ध्यातॄणां नववदननाळीककुहर-
प्रणाळीनाळेन क्षरति कवितासौरभभरः ॥ १५ ॥

गतिस्विन्नां वन्यस्तबकनिगळन्यासविलसत्-
कचां केचित् काचावलिखचितनीचैतरकुचाम् ।
हृदि त्वामीक्षन्ते कपटमृगयोः पत्रपटली-
दुकूलां कालारेरनुपदचरीं काननचरीम् ॥ १६ ॥

धरे! दुर्गां स्वर्गाधिपविमतवर्गापहरणीं
महारंहस्सिंहप्रवरपरिविन्यस्तचरणाम् ।
करे वल्गत्खड्गप्रविहितजगत्त्राणविभवां
भवार्तिव्यावृत्त्यै भगवति! भजन्ते हि भवतीम् ॥ १७ ॥

इदं स्यादेतत् स्यान्मम पुनरदः स्यादिति सदा
श्रुतं वा दृष्टं वा सकलमुपयाचे न भवतीम् ।
सकृन्मह्यं मुह्यन्मलिनमनसे मातरमलां
त्वदीये दीयेत द्युतिमति पदे भारति! रतिम् ॥ १८ ॥

अथो या वा सा वा भव भवरमेशाम्बुजभुवा-
मपीड्ये! पीड्येऽहं जनजननि! जाड्येन न यथा ।
तथा भूयाद् भूयानिह तव विभूतिस्तवविधिः
कथंकारं कर्तुं कविभिरपि शक्येत सकलः ॥ १९ ॥

---

चन्द्रकान्तमणिशिलायाम् । शरीरलुलितेत्यनेन शय्यायाः शोच्यत्वं नायिकां प्रति दयनीयत्वं च द्योत्यते । क्लान्तः तदीयकरतलस्पृष्टनलिनीपत्रक्लान्ततया म्लानः अस्पष्ट इत्यर्थः । मन्मथलेखः मन्मथसूचको लेखः । पद्यबन्धनरूपं लेखनमित्यर्थः । अनेन तदीयरचनापरामर्शास्वादनेनापि कालो नेतुं न शक्यत इति विषादो ध्वन्यते । इतिर्हेतौ । इदं तस्याः हस्ताद् भ्रष्टं बिसाभरणमित्यस्माद्धेतोः । आसज्यमानेक्षणः । आसज्यमानमिति कर्मकर्तरि । ईक्षणं नयनं यस्य । अतः शून्यादपि प्रियतमाविरहितादपि वेतसगृहान्निर्गन्तुं न शक्नोमीत्यर्थः ।

अथ नायकस्य रसान्तरप्रवेशमाह — आकाश इति । सायन्तन इति । सवनकर्मणि यजनक्रियायाम् । संप्रवृत्त इत्यनेन भूतकालप्रत्ययेन प्रारब्धस्य कर्मणो विनाशान्मुनीनां विषादातिशयो ध्वन्यते । वेदीं पारतः इति । 'अभितः परितः' (पा० सू० वा० १-४ ४५) इत्यादिना द्वितीया । पर्यभिभ्यां सर्वोभयार्थे तसिः । हुताशनवतीमिति । अनेन सवनकर्मप्रवृत्तिरुक्ता । *प्रयत्ता इति वा पाठः । प्रयासवत्य इत्यर्थः । रक्षःप्रयत्ताः तच्छायासु दृश्यन्ते इति भावः । राक्षसानां मायावित्वाद्वा आकाशवर्तित्वाद्वा तेषामदर्शनं तु छायाश्चरन्तीत्युक्तम् । यथा तदानीं सन्ध्यातपसंसर्गात्तदानीन्तनाः मेघाः कपिशा भवन्ति तथा कपिशाः । पिशिताशनानामित्यनेन वेदिपार्श्वेषु रुधिरमांसविक्षेपव्यापारो व्यज्यते ।

अयमयमागच्छामीति । दूरतः समागमकथनं भयापनोदनार्थम् ।

कालिदासस्य सर्वस्वे ह्यभिज्ञानशकुन्तले ।
पूर्णं प्रसन्नगम्भीरे तृतीयाङ्कार्थचर्चनम् ॥

इति तृतीयोऽङ्कः समाप्तः ।

---

* इहकिञ्चित् लुप्तमिव प्रतिभाति ।

अथ वक्ष्यमाणस्याङ्कस्य प्रमेयसङ्घटनार्थं प्रवेशकमारभते—ततः प्रविशन इत्यादि । इह स्नेहातिशयात् राजहृदयसन्निहितायाः नायिकायाः योगक्षेमपर्यालोचनरूपं परस्परसल्लापं सखीजनः करोति—एकेति । गान्धर्वेण विवाहविधिनेत्यनेन निरतिशयपरस्परानुरागस्तयोर्दर्शितः । तादृशानुरागपूर्वकम् अनुरूपभर्तृगामित्वं निर्वृतेर्हेतुः । इतिर्हेतौ । तथाप्येतावच्चिन्तनीयमिति । यथावन्मनो न निर्वृतमित्यर्थः। चिन्तनीयमुपन्यस्यति—अज्जेति । स राजर्षिः इष्टिं परिसमाप्य ऋषिभिर्विसर्जित इत्यनेनाचिरेणैव तस्य तपोवने पुनस्समागमकारणं नास्तीति सूच्यते । नायिकायामभिलाषः कारणं स्यादिति चेद् नेत्याह—आत्मन इति । आत्मनो नगरं प्रविश्यान्तःपुरसमागत इत्यनेन झटिति नागमिष्यतीति सूच्यते । इतोगतं वृत्तान्तम् इति । अत्र तपोवनेऽतीतं सखीसमागमरूपं वृत्तान्तम् । स्मरति वा न वेति । 'परिग्रहबहुत्वे'त्यादिना समयेन स्मरति वा अन्तःपुरसमागमेन निमित्तेनान्येन वा न स्मरतीत्यर्थः । त्वमेवं मा मंस्था इत्यन्या ब्रूते—विस्सत्था होहीति । दाक्षिण्यादिगुणविशिष्टोऽयं महापुरुषः तादृशीमेनामचिरेणागत्य मानयिष्यतीत्यर्थः । इदं तु विमर्शनीयमित्याह—एत्तिअं चिन्तणिज्जम् इति । इमं वृत्तान्तम् आत्मना विना कृतं गान्धर्वसमागमरूपम् । किं प्रतिपत्स्यते युक्तमयुक्तं वा कल्पिष्यते । अलं गुरुभयेन इत्याह—जहेति । गुणवते । गुणाः रूपगुणसम्पदः । प्रतिपादनीया देया । प्रथमः सङ्कल्पः प्रतिपादनात् पूर्वः । प्रतिपादितायाश्च सौभाग्यादिसम्पदन्वेषणं पश्चादिति भावः । तमिति सङ्कल्पम् । णं इति । ननुरनुमते । बलिकम्मपज्जत्ताइं इति बलिकर्मपर्याप्तानि । णमिति । ननुशब्दः प्रश्ने । सौभाग्यदेवता इन्द्राणी । तथा रघुवंशे—

"सान्निध्ययोगात् किल तत्र शच्याः स्वयंवरक्षोभकृतामभावः ।"

इति । अथवा लक्ष्मीः कामदेवो वा । अनेन पुष्पापचयस्या-पर्याप्तिः सूच्यते । तदेव कर्म पुष्पापचयलक्षणम् । निवेदितं निवेदनम् । ननु नूनम् । हृदयेनासन्निहितत्वं प्रियतमानुसन्धानबलाद् ।

भवतु, किमिदमिति पश्यावः इत्यर्थः । आ इति क्रोधे । अतिथिपरिभाविनीति । पूजनाभावलक्षणस्यातिथिपरिभवस्येदानीमेव फलं लभस्वेति भावः ।

विचिन्तयन्तीति । तपोनिधिं तपोनिधित्वेन प्रसिद्धम् । अनेन झटिति निग्रहानुग्रहशक्तत्वमुक्तम् । स्मरिष्यतीति । यादृशोऽपराधः, तादृशः शाप इति भावः । अनेन शापेन पञ्चमाङ्कस्य बीजन्यासः कृत इति मन्तव्यम् ।

तदेवेति । आ अतिथिपरिभाविनीत्यादिश्रवणे यदेव प्रतीतं शापरूपं वस्त्वित्यर्थः । यस्मिन् कस्मिन्नपि पूजार्हे इति । तपस्वि-सामान्य इत्यर्थः । अपराद्धा । अपराधः पूज्यपूजाव्यतिक्रमः । अत्र हेतुः शून्यहृदयेति न खलु यस्मिन् कस्मिन्नपीति कस्तर्हीत्यत आह — एसो इत्यादि । तथैव । कोपापराधानुरूपमित्यर्थः । अथवा यथागतस्तथा सन्निवृत्त इत्यर्थः । चडुलोत्फुल्लदुर्वारया क्रोधवासनया चडुलया व्यवस्थारहितया उत्फुल्लया दूराहितपद-विन्यासया अत एव दुर्वारया चेत्यर्थः । मुनिकोपस्य प्राबल्यमाह — को अण्णो इति । दहनशक्तिर्हुतवहस्यैव । शापशक्तिरस्यैवेति भावः । तदेत्यनुवादे । अम्मो इत्यव्ययं प्रमादे विषादे वा वर्तते । प्रकृतिवक्रः कुटिलस्वभावः । सानुक्रोशः सदयः । अनुनयस्य दुष्करत्वसमर्थनं सख्याः स्वनैपुणप्रदर्शनार्थम् । सस्मितमिति । स्मितकरणं प्रियंवदा-हृदयावगमाय । बहुतरं भूयांसम् । तमनुनयम् । अनुनयबहुतरत्वं प्रियंवदा कथयति — जदेति । भअवं इत्यादि । त्वद्विषये प्रवृत्तां प्राक्तनीं भक्तिं दृष्ट्वा बालत्वादविज्ञाततपःप्रभावस्य काश्यपदुहितृ-

अनस्य भवताभिज्ञेन सता अयमपराधः सोढव्य इत्यर्थः। किन्त्वित्यादि। अभिज्ञानाभरणं वियोगकाले सखीहस्तसमर्पितं दुष्यन्तनामाङ्कितम् अङ्गुलीयकं तस्य दर्शनेन शापो निवर्तिष्यते इति मन्त्रयन्नेव कथयन्नेवान्तर्हितः।

शक्यमिदानीमाश्वासितुम्। किमपि स्वाधीन उपायो भविष्यति। अस्ति तेन राजर्षिणा सम्प्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीय इति स्वयं पिनद्धम्। तस्मिन् स्वाधीन उपायो भविष्यति किमपि अत्यर्थम्। स्वाधीनोपायत्वं सखीहस्तगतत्वात्। तत् कथमित्यत आह — अस्तीत्यादिना। सम्प्रस्थितेन प्रस्थातुमारब्धेन। आदिकर्मणि क्तः। स्मरणीय इति। अहमिति शेषः। अविच्छिन्नस्मरणसाधनत्वेन समर्पितं ह्यङ्गुलीयकम्। यद्यागमनस्य विलम्बनं स्यात् तदास्याः उत्कण्ठाविनोदनसाधनं च भविष्यतीति च स्वयं पिनद्धमिति द्योत्यते। तस्मिन्निति। अङ्गुलीयके सखीहस्तगत इत्यर्थः। स्वाधीनोपायः। अयं जन इति शेषः। कार्यं तावदस्या निर्वर्तयावः।

इयमस्मत्सखी सन्निकृष्टमुनिजनं न जानातीति यत् तदुपपद्यत इत्याह — अणसूए इत्यादि। पश्य तावद् वामहस्तोपनिहितवदना आलिखितेव प्रियसखी। भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति। किं पुनरागन्तुकम् आतिथ्यार्थमागतं दुर्वाससं मुनिम्। द्वयोरावयोरेव मुखयोरेष वृत्तान्तस्तिष्ठतु। एष वृत्तान्तः शापादिरूपः अन्यस्मै कस्मैचिन्न वक्तव्य इत्यर्थः। अन्यथा को दोष इत्यत आह — रक्खणीया इति। रक्षणीया खलु प्रकृतिपेशला प्रियसखी। यद्येष वृत्तान्तः कर्णाकर्णिकया विरहतप्तयानया श्रूयते तदास्याः प्राणाः स्वयमेव निर्यान्तीत्यर्थः। अथोक्तमर्थं प्रियंवदा प्रौढवादेनानुवदति — क्व इदानीमुष्णोदकेन नवमालिकां सिञ्चति इति।

अथाङ्कमारभते — तत इत्यादि। वेला कालः। 'कालमर्यादयो-

वेला' इति सिंहः । तस्याः उपलक्षणमश्विन्यादिताराभिज्ञानम् । प्रभातम् । रात्रिरवसितप्रायेत्यर्थः । अवशिष्टमत्रशेषः ।

यातीति । याति ओषधीनां वल्लभानां स्ववियोगे भाविदुःखमुत्प्रेक्ष्य विमनस्कतया शनैश्शनैर्गच्छतीति लट्प्रत्ययेन द्योत्यते । एकतः पश्चिमदिग्भागे । आविष्कृतः । अरुणेनेत्यर्थात् । आविर्भूत इति यावत् । निष्ठाप्रत्ययेनाविष्करणोद्यमः प्रतीयते । अरुणपुरस्सर इत्यनेन अर्कस्य प्रभुत्वं व्यज्यते । एकतः पूर्वस्यां दिशि युगपत् एककालम् । व्यसनोदयाभ्यां पूर्वमुदयिनो व्यसनेन व्यसनिन उदयेन ताभ्यामित्यर्थः । व्यसनोदयशब्दाभ्यां प्रस्तुतौ अस्तमनोदयरूपावभिधीयेते । व्यसनोदययोरुभयार्थत्वात् । लोकः भुवनवासिजनो, नियम्यते अवरुध्यते । यन्त्रित इव क्रियत इत्यर्थः । आत्मदशान्तरेषु सुखदुःखमोहात्मकेषु स्वावस्थाभेदेषु । विधिनेति शेषः । अनेन

"कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा ।"

इति न्यायेन सम्भाविनं भाविनं नायकयोः सुखिनोः दुःखप्रकारं किञ्चित् सूचितं भवति ।

अथ प्रासङ्गिकचन्द्रवृत्तान्तद्वारेण प्रकृतमर्थं विशदीकरोति—अन्तर्हित इत्यादि । सैवेति । या पूर्वं प्रियतमसकाशे विकासात् चक्षुष्मतां निरतिशयां प्रीतिमुदपादयत् । एवकारः पौनर्वचनिकः । दृष्टिं न नन्दयति, अपि तु दुःखमेव आवहतीत्यर्थः । अत्र हेतुः संस्मरणीयशोभेति । भूतपूर्वशोभेत्यर्थः । सम्पन्नस्य विपदवस्था सुतरां शोच्येति भावः । अत्र चन्द्रकुमुद्वत्योः समासोक्तिन्यायेन दम्पतिव्यवहारारोपप्रस्तुतमर्थं समर्थयति—इष्टेति । इष्टस्य प्रियतमस्य प्रवासेन विरहेण जनितान्यापादितानि । अबलाजनस्य लावण्यसौकुमार्यादिशालिनः स्त्रीजनस्य । अतिमात्रदुस्सहानि अतिमात्रम् अत्यर्थं सुतरां दुस्सहानि

दुःखेन सोढव्यानि । सोढुमशक्यानीत्यर्थः । अनेन वक्ष्यमाणनायिका-वृत्तान्तः सूच्यते ।

प्रविश्येति । अपटाक्षेपेण सम्भ्रमाद्यवनिकां विनेत्यर्थः । एवं च नामेति यजमानशिष्योक्तं इष्टप्रवासजनितेत्यादिकं वाक्यार्थ-मनुवदति । जदपीत्यादि । विषयपराङ्मुखस्यापि जनस्य कुलपते-स्तातकाश्यपस्यापि । कन्यकानां पितृपरतन्त्रत्वात् ।तेन सर्वमपि तत्कृत्यं वेदितुमेवोचितमित्यपिशब्देन द्योत्यते । एतदिति विवाहलक्षणं वस्तु । विदितमिति वर्तमाने क्तः । तद्योगे जनस्येति कर्तरि षष्ठी । अनेनै-तदपि न विदितमस्तु । राज्ञां गान्धर्वविवाहस्य विहितत्वाद् । इदं तु नोचितमित्याह — तहवीति । अनार्यमाचरित प्रत्यागमनाविलम्बन-लक्षणमकर्तव्यमनुष्ठितम् । उपस्थितामासन्नाम् । प्रतिबुद्धापि तस्या-नार्यत्वमवगच्छन्त्यपि । कर्तरि निष्ठा । किं करिष्ये, किमपि न करिष्ये । अशक्यत्वादनौचित्याच्चेत्यर्थः । प्रियसखीदुःखस्याशक्य-प्रतिक्रियत्वान्मम हृदयसन्तापो वर्धते इति तत् कार्यद्वारेण प्रकाशयितु-माह — उचितेष्वपि करणीयेषु अवश्यकर्तव्येषु देवतार्चनादिषु । सकामः स्वेच्छाप्रहारीत्यर्थः । सकामत्वे हेतुमाह — जेणेति । येन कामेन । असत्यसन्धे । 'सत्यं कुतः कामिनाम्' इति न्यायेन प्रणयविरहाद् अथवा राजकार्यगौरवाद् उतान्तःपुरपारवश्यादसत्यप्रतिज्ञे । सखी पदं कारितेत्यत्र 'ण्यन्ते कर्तुश्च कर्मणः' इति कर्तुः कर्मणो लादिविधानात् सखीति प्रथमा । अत्र काम प्रत्यसूया व्यज्यते । अथ तस्य प्रत्या-गमनविळम्बने साक्षाद्धेतुं सम्भावयति — अथवेति । कोपशब्देन शापो लक्ष्यते । दुर्निवारत्वादि व्यङ्ग्यम् । शल्यायमानत्वेन सततहृदयसन्निधानादेष इत्युक्तम् । विकारयति सखीविस्मरणरूपं विकारं करोति । उक्तमेवार्थं द्रढयति — अण्णहेति । स इति यः खलु पूर्वं प्रेमातिशयात् परिग्रहबहुत्वेऽपीत्यादि प्रतिज्ञातवानित्यर्थः । तादृशानि मन्त्रयित्वा प्रस्थानकाले तस्यास्वङ्गुलीयप्रदानपुरस्सरम्,

"एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छसि यावदन्तम् ।
तावत् प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति ॥"

इत्यादीनि प्रणयवचनानि । एतावत्कालस्येति कर्मणि षष्ठी । लेखमात्रमपीति । कार्यगौरवात् स्वयमागन्तुं न शक्यते चेत् तदा पत्रिकामात्रमपि दत्त्वा कमपि प्रेषयेत् । अतः स्वयमनागमनपक्षे (त्व? त) द्विसर्जनाभावात् शापहेतुकमेवैतदिति निश्चितमित्यर्थः । तत् तस्माद् । इतः प्रदेशात् । शापनिवृत्त्यर्थम्, अभिज्ञानमङ्गुलीयकम्, अस्य दुष्यन्तस्य, विसृजा-(म? वः) । तद्विसर्जनं दुष्करमित्याह— अहवेति । को अण्णो अब्भत्थीअदि । अनौचित्यात् कोऽपि नार्थयेदित्यर्थः । अथानसूया शापप्रभवं दोषमुद्दिश्य तातकाश्यपाद् बिभ्यती सखी विमृश्य तं दोषमुपायेन बुद्ध्या परिहृत्यापि प्रियसख्याः परिणयं निवेदयितुं तमुपगन्तुं न प्रगल्भते इत्याह — ण खु इत्यादि । शापनिवृत्तिहेतोरङ्गुलीयस्य स्वहस्तगतत्वात् शापजं दोषं सखीं न स्पृशतीति व्यवसितापि निश्चितापि शकुन्तलावृत्तान्तनिवेदनं तस्येष्टमनिष्टं वा अनवधार्य तत्समीपं गन्तुं न शक्नोमीत्यर्थः । प्रवासप्रतिनिवृत्तस्येत्यनेनास्य शकुन्तलावृत्तान्तोत्कट-(त्वेन? त्वं) प्रतीयते । आपन्नसत्त्वां गर्भिणीम् । दुष्यन्तपरिणीतामापन्नसत्त्वामिति बोध्यम् । कन्यकानामनुरूपभर्तृलाभो गर्भोत्पत्तिश्च पितुः प्रियं भवतीति हि सामान्यन्याय इति भावः ।

प्रविश्य प्रियंवदेति । प्रस्थानकौतुकं प्रस्थानयोग्यं प्रतिसरबन्धमित्यर्थः । अलङ्कारान्तराणामुपलक्षणमेतत् । प्रतिसरबन्धश्च स्त्रीणामप्यस्ति । यथा भागवते —

"सुस्नातां सुदतीं कन्यां कृतकौतुकमङ्गलाम् ।"

इति ।

सखि, कथमेतदिति। संवृत्तमिति शेषः। शृण्विदानीम्। तदद्भुतमिति शेषः। सुखशयितपृच्छिका शकुन्तलासकाशं गतास्मि। शयितं शयनम्। तदो तदो इति। सर्वत्र ततस्तत इत्यनेन श्रोतुः श्रवणौत्सुक्यं वक्तुर्विवक्षाजागरणं च द्योत्यते। लज्जेति। कन्यात्वावगमाद् विशेषेण लज्जावनतवदनाम्। परिष्वञ्जनमनुरूपभर्तृलाभेन परितोषात्। एवमिति वक्ष्यमाणम्। अभिनन्दितम्। नयोरेव (वा० सू० ३-४-७०) इत्यादिना भावे निष्ठा। अभिनन्दनप्रकारमाह — दिष्ट्येति। हर्षद्योतकमव्ययम्। 'दिष्ट्या हन्त बतबट् कच्चिदिति ? हर्षार्थाः' इति भोजराजः। धूमोपरुद्धदृष्टेरिव यजमानस्य पावक एवाहुतिः पतिता। वत्से, सुशिष्यपरिदत्ता इव विद्या अशोचनीयासि मे संवृत्ता। तातभूतेन मया खल्वविदितमेवानुरूपभर्तृलाभो घटित इति प्रथमेनोपमानेनोक्तम्। वत्से इति सम्बोधनेन तस्य तद्विषयस्य स्नेहस्यातिप्रकर्षत्वमुक्तम्। उपमानद्वयेन नायकयोः परस्परानुरूप्यं जगदाराधनीयत्वं उभयलोकाभ्युदयहेतुत्वं सर्वपुरुषार्थहेतुत्वम् अस्खलितप्रणयवृत्तित्वं चेत्याद्यसंख्यं व्यङ्ग्यजातमुन्नेयम्। अशोचनीयासि मे संवृत्ता इति। तथा कुमारसम्भवे —

'अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता।'

इति। ऋषिपरिगृहीतां शार्ङ्गरवादिमुनिसहायाम्।

ननु मुनिव्यवहारानुकृतौ संस्कृतमेव युक्तं, सखीव्यवहारानुगुण्येन न प्राकृतं, यथोत्तरत्राशरीरवागनुहारे दुष्यन्तेनाहितम्' इति। सत्यं किन्तु, अन्यव्यवहारानुसन्धाने तदर्थस्यैव नियमोऽस्ति। शब्दे तु कामचारः। तथा व्यक्तिविवेके साधितम्।

अथ केनाख्यातः अयं तातकाश्यपस्य वृत्तान्तः। अथशब्दः प्रश्ने तातकाश्यपस्येति सम्बन्धे षष्ठी।

**दिक्षु बुधाङ्गिरसौ रविभौमौ**
**सूर्यसुतः सितशीतकरौ च ॥ १७ ॥**

**स्वोच्चसुहृदि**ति । स्वोच्चादिषु स्थितेषु **स्थानबलं** भवति। **स्वगृहोपगतैश्चे**ति पृथङ्निर्देशेन क्षेत्रबलस्य प्राधान्यम् अभिहितम् । आश्रयबलमाह — **दिक्षु बुधाङ्गिरसावि**ति । प्राग्दिशि बुधगुरू **बलिनौ** । मध्ये रविभौमौ । पश्चात् सूर्यजो राहुश्च । अधः शशिशुक्रौ । एतदेव दिग्बलम् ॥ १७ ॥

चेष्टाबलमाह —

**उदगयने रविशीतमयूखौ**
**वक्रसमागमगाः परिशेषाः ।**
**विपुलकरा युधि चोत्तरसंस्था-**
**श्चेष्टितवीर्ययुताः परिकल्प्याः ॥ १८ ॥**

**उदगयन** इति । **समागमो**ऽनुवक्रः । उत्तरायणे रविचन्द्रौ चेष्टाबलिनौ । अन्ये वक्रगा अनुवक्रगाश्च । **विपुलकराः** युद्धे **चोत्तरसंस्थाश्च** चेष्टाबलवन्तः इति । वक्रानुवक्रयोः वक्र एव बली (इति) अन्ये । अनुवक्र एवेति केचित् ॥ १८ ॥

कालाद् बलमाह —

**निशि शशिकुजसौराः सर्वदा ज्ञोऽह्नि चान्ये**
**बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण ।**
**स्वदिवससमहोरामासगैः कालवीर्यं**
**शरुबुगुशुचसाद्या वृद्धितो वीर्यवन्तः ॥ १९ ॥**

**निशि शशिकुजे**ति । चन्द्रावनिजयमाः रात्रौ प्रबलाः । बुधोऽहनि रात्रौ च प्रबलः । **अन्ये** दिवसबलाः । तथा **क्रूराः** कृष्णपक्षे बलिनः । **सौम्याः** शुक्ले । तथा स्वदिने स्वसंवत्सरे स्वकालहोरायां च स्वमासे च बलिनः ।

एवं कालबलम् । एतच्चतुष्प्रकारं बलमभिहितम् । एषु सत्सु विम्बवृद्धिक्रमात् बलवत्तरत्वं ज्ञेयम् । तदाह — **शरुबुगुशुचसाद्या वृद्धितो वीर्यवन्त** इति । शनिरुधिरबुधगुरुशुक्रचन्द्रसूर्याः क्रमेण वृद्धितो बलवन्त इत्यर्थः ।

इति पारमेश्वर्यां होराविवृतौ ग्रहयोनिभेदो द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

राशिग्रहाणां भेद उक्तः । इदानीं जन्मनो निषेकाधीनत्वान्निषेको वाच्यः । तत्र सदोषनिर्दोषविशेषज्ञानार्थं सदोषं तावदाह —

**क्रूरग्रहैः सुबलिभिर्विबलैश्च सौम्यैः**
**क्लीबे चतुष्टयगते तदवेक्षणाद्वा ।**
**चन्द्रोपगद्विरसभागसमानरूपं**
**सत्त्वं वदेद् यदि भवेत् स वियोनिसंज्ञः ॥ १ ॥**

**क्रूरग्रहैरि**ति । अस्य चिन्ता सृष्ट्यादिषूपयोगात्तन्मूलत्वाच्च लोकावर्जनस्य, तत्पूर्वकत्वाच्च शास्त्रस्थितेरिति । इत्थंभूतयोगे चन्द्रस्थितद्वादशांशकसमानरूपं प्राणिनं वदेत् । प्रश्नविषयत्वमपि वदेदिति सूचितम् । यद्येवं भवेत् स वियोनिसंज्ञो ज्ञेयः । यद्येवं भवेदित्यसम्भाव्यतापि सूचिता । कथं, पापाः अत्यन्तं न प्रबलाः, इतरेऽत्यन्तं न दुर्बलाः कारकाश्च भवन्ति । बुधस्य शुभत्वात् क्लीब इति मन्दोऽभिप्रेतः । तस्मिन् केन्द्रान्यतमस्थे, पश्यति वा तदा चन्द्रद्वादशांशकसमानरूपं सत्त्वं वदेत् । एतदपि तत्राभ्यूह्यम् — तत्र मेषद्वादशांशे अजशशादयश्चपलाः । वृषभांशे गोमहिषादयः । मिथुनांशे नराकृतयो वानरप्रभृतयः । एत एव तुलाघटांशयोः । क(न्यां ? कर्क्यं)शे जलचराः कुलीरादयः । सिंहांशे सिंहव्याघ्रादयः । कन्यायां वारणादयः । अलिनि वृश्चिकसर्पादयः तीक्ष्णाः । धनुष्यश्वगर्दभोष्ट्रादयः । मकरे हरिणादयो जलचराश्च । मीने मत्स्यादयः इति ।

तदेवाह —

**पापा बलिनः स्वभागगाः**
**पारक्ये विबलाश्च शोभनाः ।**
**लग्नं च वियोनिसम्भवं**
**दृष्ट्वात्रापि वियोनिमादिशेत् ॥ २ ॥**

**पापा बलिन** इति । **पापाः** बलवन्तः स्वद्रेक्काणस्थाः । शुभाः केन्द्रत्रिकोणरहितस्थानेषु स्वशत्रुद्रेक्काणस्थाः (विबलाः)। **लग्नं च वियोनि**हेतुकं सम्यग् **दृष्ट्वा** वियोनिर्वाच्या । पशुमहिषवानरसरीसृपाद्याः वियोनिसंज्ञाः । चकारेण पूर्वत्रापि लग्ननिरूपणं कार्यमिति सूचितम् । अत्रापि चन्द्रद्वादशांशस्थानमेव वदेत् । अत्र सर्वत्र द्विपाद्राश्युदये प्रोक्तयोगाभावेऽपि द्विपाज्जन्म भवतीति ॥ २ ॥

चतुष्पदानां राशिविन्यासमाह —

**क्रियः शिरो वक्त्रगले द्वितीयः**
**पादांसके पृष्ठमुरोऽथ पार्श्वे ।**
**कुक्षिस्त्वपानोऽङ्घ्रयथ मेढ्रमुष्कौ**
**स्फिक् पुच्छमित्याह चतुष्पदाङ्गे ॥ ३ ॥**

**क्रियः शिरः** इति । क्रिय इति प्रदर्शनम् । प्रथमो राशिरित्यर्थः । उदयराशिः शिरः । **द्वितीयो वक्त्रगले** । तृतीयः **पादांसके** । चतुर्थः **पृष्ठम् उरः** पञ्चमम् । **पार्श्वे** षष्ठः । **कुक्षिः** सप्तमः । **अपानो**ऽष्टमः । **अङ्घ्रि**र्नवमः । **मेढ्रमुष्कौ** दशमः । **स्फिग्** एकादशराशिः । **पुच्छं** द्वादशः । एवं विन्यासः । अथ पार्श्वे इत्यथशब्देन शिरसोऽनन्तरप्रदेशे वक्त्रगले । ततः पादांसकेति नैरन्तर्यमाह । उदयराशिं द्वादशधा विभज्य उद्यदंशकं शिरसि कृत्वा यस्मिन् द्वादशांशके क्रूरः तस्मिन् राश्यवयवे रुगादयो वाच्याः । तथोदयराशिं शिरसि कृत्वा यस्मिन् राशौ क्रूरोदयः तस्मिन् राश्यवयवे रुगादयो वाच्याः । तुकारेणाधः सूचितम् । कुक्षिसम्बन्धेन शुभग्रहेण राशिना च धेनूनां पयोबाहुल्यरसविशेषाश्च वाच्याः । क्रूरेणाजलराशिना च पयस उपघातः इति । तथा द्वितीयेन

अनडुहां वहनसामर्थ्यं, तृतीयगैः पशुभवं शौर्यं, चतुर्थगैः पृष्ठवहनम् । बलीवर्दानामपीषच्छुभाशुभनिरूपणं कर्तव्यम् । इत्याहेति चतुष्पदानामेतन्न व्यभिचरतीति सूचयति । अंशकविन्यासेनापि एवं फलनिरूपणं कर्तव्यम् । कथम्, उद्यन्नवांशकः शिरसि, द्वितीयो वक्त्रगले, तृतीयः पादांसके, चतुर्थः पृष्ठम् । एवमन्येष्वपि तस्मिन् तस्मिन् राशौ विन्यासः कार्य इति ॥ ३ ॥

वर्णानाह —

**लग्नांशकाद् ग्रहयोगेक्षणाद्वा**
**वर्णान् वदेद् बलयुक्तैर्वियोनौ ।**
**दृष्टया समानां प्रवदेच्च सङ्ख्यां**
**रेखां वदेत् स्मरसंस्थैश्च पृष्ठे ॥ ४ ॥**

**लग्नांशकादि**ति । ग्रहयुते दृष्टे च बलवतो ग्रहस्य वर्णो वाच्यः । तदभावे लग्नांशकादिति । सर्वेषां प्राबल्ये युक्तग्रहवर्णः शिरसो वाच्यः । द्रष्टृवर्णः पृष्ठस्य । लग्नांशकवर्ण उदरस्य । लग्नं यः पश्यति तस्य चतुरेकविंशतीति रश्मिसमानसङ्ख्याः रेखाः वाच्याः । रेखा आवर्तः । सप्तमस्थैः पृष्ठे रेखा वाच्याः । शुभानां प्रदक्षिणावर्तम्, अशुभानां विपरीतम्, ऊर्ध्वमुखा-(ना)मुद्गतम्, अधोमु(ख्यां ? खानां) विपरीतं, तिर्यङ्मु(ख्यां ? खानां) विस्तृतम् इत्याद्यूह्यम् ॥ ४ ॥

खगजन्माह —

**खगे दृगाणे बलसंयुतेन वा**
**ग्रहेण युक्ते चरभांशकोदये ।**
**बुधांशके वा विहगाः स्थलाम्बुजाः**
**शनैश्चरेन्द्वीक्षणयोगसम्भवाः ॥ ५ ॥**

**खगे दृगाणे** इति । पक्षिरूपद्रेक्काण उद्यति चरराश्यंशके **बुधांशके** वोद्यति बलवता पक्षिग्रहेण, बुधेन युक्ते शनैश्चरेन्दुभ्यां वीक्षिते क्रमेण स्थलजा जलजाश्च पक्षिणो वाच्याः । द्रेक्काणरूपम् उपरिष्टाद् वक्ष्यति ॥ ५ ॥

तरुजन्माह —

होरेन्दुसूरिरविभिर्विबलैस्तरूणां
तोयस्थले तरुभवोंऽशकृतः प्रभेदः ।
लग्नाद् ग्रहः स्थलजलर्क्षपतिस्तु यावां-
स्तावन्त एव तरवः स्थलतोयजाताः ॥ ६ ॥

होरेन्द्विति । होरेन्दुसूरिरविभिः दुर्बलैः तोयस्थले च तरुजन्म वाच्यम् तद्भेदश्च अंशकृतः । तोयांशे तोयजा । स्थलांशके स्थलजाः इति । यो लग्नांशः तस्मादारभ्य यस्मिन् ग्रहः स्थितः तावत्सङ्ख्याः तरवो जलजाः स्थलजाः च इति ॥ ६ ॥

तद्विशेषमेवाह —

अन्तस्सारान् जनयति रविर्दुर्भगान् सूर्यसूनुः
क्षीरोपेतांस्तुहिनकिरणः कण्टकाढ्यांश्च भौमः ।
वागीशज्ञौ सफलविफलौ पुष्पवृक्षांस्तु शुक्रः
स्निग्धानिन्दुः कटुकविटपान् भूमिपुत्रश्च भूयः ॥ ७ ॥

अन्तस्सारानिति । अन्तःस्थितांश्च सारांश्च रविः जनयति । दुश्शब्दवाच्यान् दुर्भगांश्च रविजः । क्षीरवृक्षान् वल्यादीन् स्निग्धान् च चन्द्रः । कण्टकाढ्यान् कटुकविटपांश्च भौमः । सफलान् गुरुः । विफलान् शाकादीन् च बुधः । पुष्पविशेषान् पुष्पवृक्षांश्च शुक्रः । तुकारेण यद् यद् येन ग्रहेणासाधारणं तस्य तस्य तत्तद्ग्रहोदयो वापनादौ वाच्य इति सूचितम् । ऊर्ध्वमुखादिभिश्च शाखापत्रादीनां संस्थानविशेषा वाच्याः । तथा पूर्वश्लोकेऽपि स्वधियाभ्यूह्यम् । लग्नं तत्स्वाम्याक्रान्तं च यदि जलात्मकं तदा जल एव जन्म स्थितिश्च । उभयं स्थलात्मकं चेत् स्थल एव जन्म स्थितिश्च । लग्ने जलात्मके अन्यस्मिन् स्थलात्मके जल एव जन्म पश्चाज्जलं विना स्थितिः । लग्नं स्थलात्मकं अन्यज्जलात्मकं चेत् स्थले जन्म पश्चाज्जले स्थितिः । जलग्रहसम्बन्धे सति जले स्थितिरित्यादि । एतत्सर्वं चतुष्पात्प्रश्ने विनियोज्यम् । अवयवभूतेन राशिना तदधिपतिना च बहुक्षीरा पूर्वकालक्षीरा पश्चात्काललक्षीरा इत्यादि । एवं वहनादावपि ॥ ७ ॥

तत्र विशेषमेवाह —

शुभोऽशुभर्क्षे रुचिरं कुभूतले
करोति वृक्षं विपरीतमन्यथा ।
परांशके यावति विच्युतः स्वकाद्
भवन्ति तुल्यास्तरवस्तथाविधाः ॥ ८ ॥

शुभोऽशुभर्क्षे इति । अशुभर्क्षे शुभग्रहः (कु)भूमौ शुभान् करोति । शुभर्क्षे पापः शुभदेशे कुवृक्षान् करोति । स्वकीयादंशकाद् यावत्संख्ये परांशे तिष्ठति तावन्तः तरवो वाच्याः । तत्र तेष्वंशकेषु यावन्तः पापाक्रान्ताः तेऽनुपयोगिनः । अन्ये शोभनाः । तरुपरिमाणं च लग्नादारभ्य यतिमे अधिपतिः तावदिति वाच्यम् । लग्नांशकेन च तथैव वाच्यम् ॥ ८ ॥

इति होराविवृतौ पारमेश्वर्यां वियोनिभेदस्तृतीयोऽध्यायः ।

---

## अथ चतुर्थोऽध्यायः ।

हीननिषेकानन्तरं सन्निषेकमाह —

कुजेन्दुहेतु प्रतिमासमार्तवं
गते तु पीडर्क्षमनुष्णदीधितौ ।
अतोऽन्यथास्थे शुभपुङ्ग्रहेक्षिते
नरेण संयोगमुपैति कामिनी ॥ १ ॥

कुजेन्दुहेत्विति । कुजेन्दुहेतुकं प्रतिमासं च यदार्तवं तद् गर्भाधानयोग्यम् । चन्द्रो रक्तं कुजोऽग्निः । सप्तमे पचयरहितं पीडर्क्षं, तद्गते चन्द्रे परस्परवर्गगयोः युतदृष्टयोः वा कुजेन्द्वोः यदार्तवं तत् शुभम् । अथोपचयसप्तमगे शोणितोपचयात् गर्भाशयो न शुद्ध्येत । अकालार्तवं च व्याध्यादिकृतमिति न परिगृह्यते । स्त्रीणां प्रस्तावात्तासामेव जन्मभा(त्)

पीड(क्षांदि ! क्षमि)ति गम्यते । तस्मिन्नार्जवे अतोऽअन्यथास्थे चन्द्रे शुभपुंग्रहेण गुरुणा विषमराशौ विषमराशिगेन शुक्रेण च सप्तमरहितदृष्ट्या दृष्टे मेष-दशमभागगतेन रविणा वा दृष्टे नरसंयोगं कामिनी कुर्यात् । आयुर्वेदा-विरुद्धान् रागोद्दीपकांश्च अन्नादीनुपयुज्य इति सूचयति उपैति कामिनीति । तत्र समागमो भविष्यति वा न वेति सन्देहे शुक्रान्निर्णयः । उदयास्तयोः चन्द्र-शुक्रसम्बन्धे भविष्यत्येव । तथा चन्द्रस्य गुरुणा सम्बन्धे भर्त्रा, शनिसम्बन्धे प्रेष्येण राशिसमानं वाच्यम् । अस्तराशिः चतुष्पाच्चेत् चतुष्पात्समानम्, नरराशिश्चेन्नरसमानम् । सरीसृपादौ मिश्रश्च मैथुनप्रयोगः । आवृत्तः सकृदित्या-द्यूह्यम् ॥ १ ॥*

निषेकसाफल्यमाह —

रवीन्दुशुक्रावनिजैः स्वभागगै-
गुरौ त्रिकोणोदयधर्मगेऽपि वा ।
भवत्यपत्यं हि विबीजिनामिमे
करा हिमांशोर्विदृशामिवाफलाः ॥ २ ॥

रवीन्द्विति । रविचन्द्रशुक्रावनिजैः स्वद्रेक्काणस्थैः गुरौ पञ्चमे लग्ने नवमे स्थितेऽपत्यं भवति । तथोदयगे गुरौ तेजस्वी जायते । सुतगे नर्मपरः पित्रादिप्रियश्च । नवमेऽदृष्टपरः इति । तथा लग्नान्नवमगे पितुः अदृष्टानुकूलः, आरूढनवमगे मातुः, छत्रनवमगे व्रताद्यदृष्टप्रावण्यमित्याद्यूह्यम् । लग्नं जन्मसमये चन्द्रच्छत्रम् । आरूढं जन्मसमयचन्द्रस्थानम् । छत्रमिति तत्कालशशि-च्छत्रम् । तथा लग्नाद् द्वितीयराशिना शुभाशुभसम्बन्धे मिश्रे च शुक्रसादृगुण्य-वैगुण्यादयोऽभ्यूह्याः । विबीजिनां निष्फला एते योगाः । विदृशां हिमांशोः करा इवेत्यर्थः ॥ २ ॥

दिवाकरेन्द्वोः स्मरगौ कुजार्कजौ
गदप्रदौ पुङ्गलयोषितोस्तदा ।
व्ययस्वगौ मृत्युकरौ तथा युतौ
तदेकदृष्ट्या मरणाय कल्पितौ ॥ ३ ॥

* 'यथास्तराशिर्मिथुनम्' इति पद्यस्य व्याख्या न दृश्यते.

**दिवाकरेन्द्वोः** दिवाकरस्य चन्द्रस्य वा अस्तगः **कुजोऽर्कजो वा क्रमेण** पितुर्मातुश्च **गदप्रदौ** भवतः। तयोरेव **व्ययस्वगौ मृत्युकरौ** भवतः। उभाभ्यां सूर्येन्दुभ्यां कुजमन्दयोर्योगे तथैव रविचन्द्रयोः अन्यत(मेन? तरेण) अशुभग्रहयोगा भवन्ति। तदभिप्रायेण मरणस्य नियतत्वात् तथेत्युक्तम्। **तथा** तयोरेकेन योगे अन्येन दृष्टे मरणं भवति-। भङ्गकः शुभो यदि न विद्यत इति ॥ ३ ॥

**दिवार्कशुक्रौ पितृमातृसंज्ञितौ**
**शनैश्चरेन्दू निशि तद्विपर्ययात्।**
**पितृव्यमातृष्वसृसंज्ञितौ तु ता-**
**वथौजयुग्मर्क्षगतौ तयोः शुभौ ॥ ४ ॥**

**दिवार्कशुक्रौ** दिने अर्कशुक्रौ। **पितृमातृपितृव्यपितृष्वसृणां** जन्मराशेरेव ओजयुग्मर्क्षस्थितिरिति केचिदाहुः। रात्रावेव निषेकविधानाद् दिवानिशाशब्दौ दिननिशाराश्युपलक्षणाविति केचित् ॥ ४ ॥

**अभिलषद्भिरुदयर्क्षमसद्भि-**
**र्मरणमेति शुभदृष्टिमयाते।**
**उदयराशिसहिते च यमे स्त्री**
**विगलितोडुपतिभूसुतदृष्टे ॥ ५ ॥**

**अभिलषद्भिः**। क्रूरैः द्वादशान्त्यत्रिंशद्भागस्थैः शुभानिरीक्षितैः **मरणमेति**। तथोदयस्थे शनौ क्षीणेन्दुभौमदृष्टे शुभासम्बन्धे **स्त्री** म्रियते ॥ ५ ॥

योगान्तरमाह —

***पापद्वयमध्यसंस्थितौ**
**लग्नेन्दू न च सौम्यवीक्षितौ।**
**युगपत् पृथगेव वा वदे-**
**न्नारी गर्भयुता विपद्यते ॥ ६ ॥**

---

* 'अशुभद्व' विवरणपाठः.

सरमा — (क) सहि जाणइ! तुह सिन्दुवारळदिआ दसाणणबला-मोडिगहिअं[1] तुमं एव्व अणुहरेदि ।

सीता — (सविषादम्) (ख) हा मम पुत्तिआए वि विहिणा विसमावत्था समुप्पाइआ । अहवा वसुमई एव्व तिस्से वि उप्पत्तिट्ठाणं ।

त्रिजटा — सम्पाते! ततस्ततः ।

सम्पातिः — ततश्च —

तीर्त्वा सेतुपथेन तेन सरितां नाथं पुरोगामिना
लङ्केन्द्रेण विभीषणेन सुहृदा सुग्रीवमुख्यैर्बलैः ।
सोदर्येण च पार्श्वगेन सहितो देवो रघूणां पतिः
प्राप्तो मारुतिमांसलांसशिबिकारूढस्त्रिकूटाचलम् ॥ २५ ॥

(सर्वा हर्षं नाटयन्ति ।)

सम्पातिः — ततः सुवेलकटकघटितस्कन्धावारानिवेशितनील-पालितवलीमुखवरूथिनीके सुग्रीवे प्रणिबद्धमुक्तयोश्च कपटकपिवेषधारिणोः[2] शुकसारणयोः, महाराजविभीषणेन लङ्काभ्यन्तरवृत्तान्तमवगन्तुमनुप्रहितोऽहं पक्षिवेषमवलम्ब्य परितः सञ्चरन् अवगतरक्षोगृहरक्षाप्रकारः, तत्क्षण-

(क) सखि जानकि! तव सिन्धुवारलतिका दशाननबलाद्गृहीतां त्वामेवानुहरति ।

(ख) हा मम पुत्र्या अपि विधिना विषमावस्था समुत्पादिता । अथवा वसुमत्येव तस्या अप्युत्पत्तिस्थानम् ।

१. णहइग्गहिअं ख. ग. ङ. २. टवेष. ग. ङ.

मिममावेदयितुं महाराजसमीपं गच्छन् अनेन पथा भवतीनामपि समाश्वासनायागतोऽस्मि । तदविलम्बितमितो गच्छामि ।

त्रिजटा — भद्र! एवमस्तु ।

सम्पातिः — नमोऽस्तु स्वामिदारेभ्यः । (निष्क्रान्तः ।)

(नैपथ्ये)

भो भोः प्रहस्तातिकायधूम्राक्षमकराक्षविरूपाक्षयूपाक्षमहोदरमहापार्श्वप्रभृतयो महामन्त्रिणः! किमिदानीमप्युदासते भवन्तः । हृ हृ हृ ।

उद्यानानि विमर्दयन्ति परितो मथ्नन्ति रथ्यापणान्
विक्षुन्दन्ति च मन्दिराणि विविधं निर्भिन्दते मन्दुराः ।
निघ्नन्ति च वप्रजालवलयं भञ्जन्ति गञ्जागृहान्
निष्पिंषन्ति चतुष्पथालयशतं दर्पोत्कटा मर्कटाः ॥ २६ ॥

त्रिजटा — (समन्तादवलोक्य) अये प्रक्रान्त एव प्लवगरक्षसामायोधनाडम्बरः । तथाहि —

वल्गाघातप्रवल्गत्तुरगखुरपुटक्षुण्णभूमण्डलोत्था-
स्त्यायन्तेऽमी परागाः ककुभि करिघटाकर्णवातावधूताः ।
येषां सन्ध्याभ्रभासामधिवितति मिथो मुक्तशस्त्रास्त्रधारा-
निष्पेषे निष्पतन्तो दधति पटुतटिद्विभ्रमं विष्फुलिङ्गाः ॥२७॥

(ऊर्ध्वमवलोक्य)

त्रस्तैरस्त्राभिपातादतिभृतकुतुकैराहवालोकने च
भ्राम्यद्भिर्दूरमूर्ध्वं वियति मुहुरधश्चाचिते खेचरौघैः ।
अन्योन्यामर्दभिन्नप्रशिथिलसिचयस्पष्टदृष्टस्तनीभि-
र्वीतव्रीलं व्रियन्ते मृधभुवि निहता वीरहीराः सुरीभिः ॥२८॥

पुत्रि सरमे! । त्वं तावदनया मन्दारवत्या सह गगनतलमुत्पत्य तत्र क्वचिदस्त्राभिपातं परिहृत्य वर्तमाना कपिरक्षसां समरमहोत्सवमवलोकय । यतो यथावृत्तं पुनरस्माकमावेदयिष्यसि ।

सरमा — (क) अम्ब! एव्वं होदु । सहि मन्दारवइ! अवि रुच्चइ दे अंबाए णिओओ ।

वनदेवता — अथ किम्?

त्रिजटा — पुत्रि जानकि! तदावामपि तावदितः किञ्चिद्विप्रकृष्टं प्रदेशान्तरमुपगम्यानयोरागमनं प्रतिपालयिष्यावः ।

सीता — (ख) अम्ब! तह ।

त्रिजटा — तदुत्तिष्ठ (इति सीतया सह निष्क्रान्ता ।)

(उभे ऊर्ध्वगमनमभिनीय तथा स्थिते ।)

सरमा — (अधोऽवलोक्य) (ग) सहि पेक्ख पेक्ख—

रक्खोणिक्खोसखग्गक्खुडिअकविउलं रिक्खरुक्खग्गणक्ख
प्पक्खेवक्खुण्णमुंडप्पसुमररुहिरालित्तणत्तंचरोहम् ।

---

(क) अम्ब! एवं भवतु । सखि मन्दारवति! अपि रोचते ते अम्बाया नियोगः ।

(ख) अम्ब! तथा ।

(ग) सखि! पश्य पश्य—

रक्षोनिष्कोशखड्गत्रुटितकपिकुलं ऋक्षरूक्षाग्रनख-
प्रक्षेपक्षुण्णमुण्डप्रसृमररुधिरालिप्तनक्तञ्चरौघम् ।

अण्णोण्णप्फालभिण्णब्भमिरकडुरवुक्खोसदोग्घट्टथट्टं
जुज्झं णिज्झाइरीणं सभअखिणामिणं देइ णो कोउहल्लम् ॥२९ ॥

अविअ —

उद्धं गिद्धन्तगिद्धावळिगरुअगरुच्छायपच्छाइअक्के
दुप्पेक्खे भूमिअक्के तुलिअगअघडाकह्निमेहिं तमोहिम् ।
रक्खोबाहंचलुक्खोळिरपरसुगआखग्गधारग्गणिन्ता
दिप्पंता दीवकज्जं दिसि दिसि सिहिणो सव्वदो उव्वहंन्ति ॥ ३० ॥

वनदेवता — सखि पश्येदमाश्चर्यम् —

येन प्रमुक्तो[1] विशिखो न यावन्निजं तरस्वानपि गात्रमेति ।
उत्प्लुत्य तावत् कपिराशरस्य तस्यैव पार्ष्णिग्रहणं करोति ॥ ३१ ॥

अपि च —

शिलीमुखः शातमुखो विपक्षात्
परापतन्नेव वलीमुखेन ।
प्रकोष्ठघातेन निवर्तितः सन्
प्रहर्तुरेवैष शिरः छिनत्ति ॥

अन्योन्यास्फालभिन्नभ्रमणकटुरवे द्धोषगजसार्थं
युद्धं निध्यानशीलानां सभयघृणमिदं ददाति नः कौतूहलम् ॥

अपि च —

ऊर्ध्वं गृध्यद्गृध्रावलिगरीयगरुच्छायप्रच्छादितार्के
दुष्प्रेक्षे भूमिचक्रे तुलितगजघटाकृष्णिमाभिस्तमोभिः ।
रक्षोबाहाञ्चलोद्घूर्णनशीलपरशुगदाखड्गधाराग्रनिर्यन्तो
दीप्यमाना दीपकार्यं दिशि दिशि शिखिनः सर्वत्र उद्वहन्ति ॥

1. युक्तो. ख. ग. घ. ङ.

सरमा — (क) सहि इदं च पेक्ख ।

उम्मुक्का रअणिअरेण खग्गलट्ठी
जाहे णो णिवडइ वाणरस्स कण्ठे ।
तूरंती कुवलअमालिआअ ताहे
बज्झेउं क्कमइणमज्झराणमेक्का ॥ ३२ ॥

वनदेवता — सखि! तूष्णीं तिष्ठ । कुतश्चिदेष करुणप्रलाप इव श्रूयते ।

(नैपथ्ये)

व्यर्थं हा गिरिभिरबन्धि सिन्धुराजः
प्रायोऽर्धे प्लवगभटा मुधा परेताः ।
नागास्त्रैरधिरणमिन्द्रजित्प्रमुक्तै-
र्बद्धौ यद् भुवि पतितौ रघुप्रवीरौ ॥ ३३ ॥

उभे — हा राम! (इत्यर्धोक्ते मूर्च्छतः ।)

सरमा — (आश्वस्य) (ख) सहि! समस्ससिहि समस्ससिहि ।

वनदेवता — (समाश्वस्य)

---

(क) सखि! इदञ्च पश्य —

उन्मुक्ता रजनिचरेण खड्गयष्टिः
यावन्नो निपतति वानरस्य कण्ठे ।
त्वरमाणा कुवलयमालिकया तावत्
बन्धुं क्रमत एनमप्सरसामेका ॥

(ख) सखि! समाश्वसिहि समाश्वसिहि ।

हा देवि! देवयजनप्रभवे! भवस्ते
वैधव्यवज्रपतनाय किमीदृशोऽभूत् ।
श्रुत्वेदमात्मनि निपत्य मुहुर्लुठन्तीं
सर्वंसहापि न सहेत वसुन्धरा त्वाम् ॥ ३४ ॥

सरमा — (क) सहि! कहं णाम इदं दुरवत्थन्तरं पिअसहीए जाणईए णिवेदइस्सामो । ता जेण केण वि उवाएण एत्थ एव्व अत्ताणं परिच्चइस्सामो ।

वनदेवता — इदमेवात्रोचितं किमुपायान्तरेण ।

पतिष्यावस्तावत् पवनपरिधूतोर्मिपटल-
स्फुटावर्तश्वभ्रप्रकटतरपातालकुहरे ।
अमुष्मिन्नम्भोधेः पयसि[1] पतिते नौ पुनरमी
समन्तादुद्भ्रान्ताः सपदि निगरिष्यन्ति तिमयः ॥ ३५ ॥

सरमा — (सकलनं रूपयित्वा) (ख) सहि! को एस चंडअरो संवत्ताणिळसहोअरो महापवणो णो बाहेइ । मण्णे एसो च्चेअ णो जलणिहिम्मि पाडइस्सिदित्ति ।

वनदेवता — (ऊर्ध्वमवलोक्य) अये!

---

(क) सखि! कथन्नामेदं दुरवस्थान्तरं प्रियसख्यै निवेदयिष्यावः । तस्माद्येन केनाप्युपायेनात्रैवात्मानं परित्यक्ष्यावः ।

(ख) सखि! क एष चण्डतरः संवर्तानिलसहोदरो महापवनो नौ बाधेत । मन्ये एष एव नौ जलनिधौ पातयिष्यतीति ।

---

१. धौ पयसि. ग. ङ. २. लधिम्भि. ग. घ. ङ.

आर्योऽसौ सूर्यसूतः स्वयमभिपतति श्रूयते स त्वनूरु-
श्चारुश्रीरेष मेरुः किमु स खलु बलारातिविक्षुण्णपक्षः ।
आ ज्ञातं भीतभीतैर्गरुदुरुपवनाघूर्णितार्णोधिगर्भ-
व्यक्तीभूतैः प्रभूतैरहिभिरयमयं वीक्ष्यते तार्क्ष्य एषः ॥ ३६ ॥

(ततः प्रविशति तार्क्ष्यः ।)

तार्क्ष्यः —

आधून्वन्नभ्रसिन्धोरमृतकरकरापाण्डुडिण्डीरपिण्डा-
नक्षुद्रैः पक्षवातैः स्फटिकगिरिमहाशृङ्गतुङ्गांस्तरङ्गान् ।
अङ्गच्छायैरभङ्गैः कनकविटपिनः कल्पयन्नल्पभासो
निष्क्रान्तः शक्रलोकादमररिपुगृहाभ्यर्णमाहिण्डितोऽस्मि ॥३७॥

(किञ्चिदधोऽवतीर्य) तदधुना —

स्वर्भानुः पुष्पवन्ताविव भुवनहितौ राघवौ मेघनाद-
क्षिप्तः सुप्तप्रकाशां नयति किल दशामल्पकः सर्पपाशः ।
अस्त्राहेरस्य भस्त्रामिव तनुमनिलापूरणस्फारगर्भा-
मुच्चण्डत्रोटिकोटित्रुटितविघटितामेष तार्क्ष्यः करोतु ॥ ३८ ॥

(निष्क्रान्तः ।)

सरमा — (सहर्षं) (क) सहि! जीवलोअस्स पाणाणि पच्चाहरिस्सिदि एस महप्पहावो भुअंगसत्तू ।

वनदेवता — (अधोऽवलोक्य) सखि! किं प्रत्याहरिष्यतीति । ननु प्रत्याहृता एव । पश्य —

---

(क) सखि! जीवलोकस्य प्राणान् प्रत्याहरिष्यत्येष महाप्रभावो भुजङ्गशत्रुः ।

चण्डैस्तुण्डप्रहारैर्विघटितविषभृद्बन्धनो वैनतेयो
जानुभ्यामेष तिष्ठन् प्रणमति गरुता वीजयन्नाजिभूमौ ।

सरमा —

(क) एदे सुत्तप्पबुद्धा विअ रहुतणआ दिट्ठिआ उट्ठिआणं
पक्खिन्दं पक्खवादोव्लिळरपुळणकलावीणिअं माणअंति ॥३९॥

वनदेवता — सखि ! तदेहि वैदेह्यै वृत्तान्तमिमं निवेदयिष्यावः ।

उत्तरकालकथायाः प्रीतिकृतः प्रथममेव यत्कथनम् ।
तेनैव तिरस्क्रियते पूर्वावस्था ह्यनिष्टापि ॥ ४० ॥

सरमा — (ख) तह । (उभे अधोऽवतरतः ।)

(ततः प्रविशति सीता त्रिजटा च ।)

सीता — (ग) अम्ब तिअडे ! अवि सच्चं अक्खदसरीरो[1] अय्यउत्तो कुमारलक्खणो अ ।

त्रिजटा[2] — (सस्मितम्) अयि अविस्रम्भशीले ! तदेव मुहुर्मुहुरभिहितापि कथं न श्रद्धासि ।

---

(क) एते सुप्तप्रबुद्धाविव रघुतनयौ दिष्ट्योत्थितावेनं
पक्षीन्द्रं पक्षपातार्द्रप्रलोकनकलाप्रीणितं मानयतः ॥
(ख) तथा ।
(ग) अम्ब त्रिजटे ! अपि सत्यमक्षतशरीर आर्यपुत्रः कुमारलक्ष्मणश्च ।

---

१. रो दिट्ठो अय्य. ख. ग. घ. ङ.    २. त्रिजटा- अयि ग.

सरमा — (श्रुत्वा) (क) सहि! रामळक्खणाणं णाअत्थबंधं[1]णवुत्तंतो एदाहिं पुव्वं एव्व विदिओ भवे ।

वनदेवता — नैतत्[2] सङ्गच्छते ।

सरमा — (ख) ता कहं अम्बा जाणइं एव्वं[3] आसासेइ ।

वनदेवता — शृणुवस्तावद्, उपरि स्फुटीभविष्यति ।

त्रिजटा[4] — पुत्रि जानकि!

मायावसुर्नाम स यातुधानो
मारीचशिष्यः प्रियपङ्क्तिकण्ठः ।
येनैव क्लृप्तं शिरसोर्युगं तत्
मायामयं मानिनि! दाशरथ्योः ॥ २९ ॥

वनदेवता — सखि! आवयोरसन्निधानेऽन्यैः[5] खल्वयं प्रस्तावः । तदुपसर्पावः । (उभे उपसृत्योपविशतः ।)

त्रिजटा — पुत्रि! एते तव प्रियसख्यावागते ।

सीता — (ग) सहीओ अवि अक्खदसरीरो दिट्ठो अय्यउत्तो कुमारो अ ।

---

(क) सखि! रामलक्ष्मणयोर्नागास्त्रबन्धनवृत्तान्त एताभ्यां पूर्वमेव विदितो भवेत् ।

(ख) तत् कथमम्बा जानकीमेवमाश्वासयति ।

(ग) सख्यौ! अप्यक्षतशरीरो दृष्ट आर्यपुत्रः कुमारश्च ।

---

१. न्धवुत्तंतो. ग. ङ. २. तदुपपद्यते. क. ३. व्वं अस्सासेइ. ख. ग. घ. ४. टा — माया. ख. ग. घ. ङ. ५. न्यः कोऽप्ययं. ख. ग. घ. ङ.

वनदेवता — अथ किम्। इदञ्च तत्र संवृत्तम्। (एवमिव।)

सीता — (संभय[1]विषादप्रमोदम्) (क) दिट्ठिआ महंतादो अआळमिच्चुमुहादो मोआविदा दे विणदाणंदणेण।

(नैपथ्ये)

आः दुरात्मन्! तिष्ठ तिष्ठ।

सीता — (ख) अम्मो! कुमारळक्खणस्स विअ अयं सरो।

(पुनर्नैपथ्ये)

मद्बाणात् कुशिकात्मजस्य यजने भ्रष्टोऽसि[2] दुष्टस्ततः
तातस्याकृतिमावहन् कुहनया[3] प्राप्तो निमीनां पुरम्।
भूयश्चारणकैतवादनृतवागासीर्मतङ्गाश्रमे
मायाकल्पितमस्तकद्वयमिहाप्यार्यामुपानीतवान्॥ ४२॥

त्रिजटा — पुत्रि जानकि! कुमारलक्ष्मणोऽयं मायावसोरपराधान् गणयति।

वनदेवता — अम्ब[4]! चरमश्रुतः प्रस्तावोऽयमावयोरसन्निधाने किमिह संवृत्तः।

त्रिजटा — एवमिदम्।

---

(क) दिष्ट्या महतोऽकालमृत्युमुखान्मोचितौ तौ विनतानन्दनेन।
(ख) अम्मो! कुमारलक्ष्मणस्येवायं स्वरः।

---

१. सविषाद. ग. ङ. २. ष्टोऽपि. क. ३. न्म. ख. ङ. ४. अम्ब! अत्र चरमश्रुतः प्रस्तावोऽयमस्मदसन्निधाने. ख. ग. ङ.

(नैपथ्ये)

इत्थमसकृदपकुर्वाणोऽधुना मद्बाणाभिमुखमापतितोऽपि त्वं प्राणितुमभिलषसि[1]त्यहो मायावसो! तवायं दुराग्रहः ।

त्रिजटा — दिष्ट्या[2]चिरादिदानीमपगतासुना मायावसुना भवितव्यम् ।

(नैपथ्ये)

इतो दृश्यतां देवेन ।

सरमा — (क) अम्मो! अय्यउत्तस्स खु एस सरो[3] ।

(पुनर्नैपथ्ये)

युष्मद्बाणप्रपञ्चक्षतकवचधनुर्बाणतूणीकृपाणो
निस्सृतस्यन्दनाश्वो निरगमदमुतो निर्जितो लज्जितो यः ।
लङ्कानाथेन कृच्छ्राद्बहुभिरपि भटै[4]र्लम्भितस्तेन बोधं
सन्नद्धो योद्धुमेष प्रचलति कलितो[5]ज्जृम्भणः कुम्भकर्णः ॥४३॥

त्रिजटा — कथ[6]मवसितप्रायः समरकथाविस्तरः, यत् प्रहस्तधूम्राक्षप्रमुखसमस्तनक्तञ्चरवीरवरविनाशहेतुकमेव निद्रालोरस्यापि प्रयत्नप्रबोधनमिति तावन्निर्विवादम् । (सोच्छ्वासं) हन्त भुवनस्य महान् भारोऽवतारितप्रायो विश्वजनीनविमलगुणगणभद्रेण रामभद्रेण ।

---

(क) अम्मो! आर्यपुत्रस्य खल्वेष स्वरः ।

---

१. सीति माया. क. २. ष्ट्या बहुप्रकारमपकुर्वन् दुरात्मा मायावसुरद्य विगतासुः संवृत्तः. ख. ग. ङ. ३. रो । (नैपथ्ये) ख. ग. ङ. ४. टैः प्रापितस्तेन बोधं. ख. ग. ङ. ५. ज्जृम्भितः. ख. ग. ङ. ६. थमिवावासि. ग. ङ

सीता —(क) अम्ब तिअडे! अहो दे पक्खवादविसेसो जं साहारणे वि धीरसोरिअसोंडीरप्पमुहे गुणगणे[1] अय्यउत्तस्स रक्खसाहिणाहस्स अ अय्यउत्तविअअम्मि[2] पहरिसो ण उण सअणविअअम्मि[3]। अच्छेरम्।

त्रिजटा — पुत्रि[4]! किमत्राश्चर्यम्। कस्य कः स्वजनः। काममेकमप्याधेयमाधारभेदाद्भिद्यते एव। तथाहि —

य: साधौ गुणिनि स्थितो गुणगणः श्लाघ्यः सतां जायते
सम्पूर्णोऽपि स एव शोच्यतमतामायात्यसाधौ स्थितः।
सान्द्रं चन्दनजन्म[5] यन्मृगदृशां वक्षोरुहे भूषणं
पाण्डुत्वं हि तदेव[6] हन्त भवति श्वित्रोद्भवं दूषणम्॥ ४४॥

(नेपथ्ये)

उत्सन्नमुत्सन्नं हाहा सर्वमप्युत्सन्नम्।

निद्रालुर्दीर्घनिद्रामधिरणमधुना[7] लम्भितः कुम्भकर्णः
सत्रं नैकुम्भिलं यत्तदपि विनिहतं प्रक्रमे शक्रजेतुः।

त्रिजटा — किमन्यदपि स्यात्।

(नेपथ्ये)

हाहा सोऽपि क्षतोऽभूदलघुभृत्यशोलक्ष्मणा लक्ष्मणेन

---

(क) अम्ब त्रिजटे! अहो ते पक्षपातविशेषः, यत् साधारणेऽपि धैर्यशौर्यशौण्डीर्यप्रमुखे गुणगणे आर्यपुत्रस्य राक्षसाधिनाथस्य च आर्यपुत्रविजये प्रहर्षो न पुनः स्वजनविजये। आश्चर्यम्।

---

१. णसमुदाये. क. २. म्मि तुह प. क. ३. म्मित्ति अच्छेरं. ख. ग. ङ. ४. त्रि! कस्य कः. ख. ग. ङ. ५. पाटीरद्रवजन्म. ख. ग. ङ. ६. व किञ्च भवति. ख. ग. ङ. ७. धिमृधमरिणा. ख. ग. ङ.

त्रिजटा — (सहर्षं) वत्स लक्ष्मण! चिरं जीव ।

इदं हि दुष्करं नाम मेघनाद[1]निबर्हणम् ।
अस्मिन् हते हतः सोऽपि पापकारी दशाननः ॥ ४५ ॥

(नैपथ्ये)

प्रस्थानाय प्रवृत्तो दशमुख इदमप्यापदे सम्पदे वा ॥ ४६ ॥

त्रिजटा — जगतां सम्पदे[2] । सखि मन्दारवति! प्रत्यासन्नो रामरावणयोः संग्राम[3]महोत्सवः । तदयमपि पूर्ववद् अत्रभवतीभ्यां गगनमुत्पत्य दृश्यतामदृष्टश्रुतास्त्रप्रत्यस्त्रप्रपञ्चप्रयोगगहनो वीरविनोदः ।

सरमा — (ऊर्ध्वमवलोक्य) (क) अम्मो! किं एदं ।

अणहमणिमऊहसोहमाणं कणअमअं कमणिज्जमुज्जलन्तं ।
सुरगिरिसिहरं व वज्जभिण्णं गअणपहादु पआसमोदरेइ ॥ ४७ ॥

त्रिजटा — (सावधानं विलोक्य) ज्ञातं ज्ञातम्,

रथाधिरूढं रजनीचरेन्द्रं दृष्ट्वा पदातिं च रघुप्रवीरम् ।
निजः ससूताशुगवर्मचापः पुरन्दरेण प्रहितो रथोऽयम् ॥ ४८ ॥

---

(क) अम्मो! किमेतत् ।
अनघमणिमयूखशोभमानं कनकमयं कमनीयमुज्ज्वलत् ।
सुरगिरिशिखरमिव वज्रभिन्नं गगनपथात् प्रकाशमवतरति ॥

---

१. दस्य यो वधः ख. ग. ङ. २. दे सम्प्रति. ग. ङ. ३. ग्रामः ख. ग. ङ. ४. द् गगन. ख. ग. ङ.

तद् मन्दारवति! यथोक्तमनुतिष्ठ। अस्माभिस्तु —

शरासनारोपणमात्रलभ्यया
वृतो रणक्षोणिभुवा जयश्रिया।
य ईक्षितोऽसूयितयेव सीतया
स रामभद्रः प्रतिपालयिष्यते ॥ ४९ ॥

(इति निष्क्रान्ताः सर्वाः।)

इति षष्ठोऽङ्कः

---

## अथ सप्तमोऽङ्कः।

(ततः प्रविशति पिशाचः।)

**पिशाचः** — (सपरितोषं नृत्यन्)

(क) लक्खोलिक्खशलीलशोणिअणंई[1]णिब्बुळळणुब्बुळळण-
क्कीळालोळविशाअभीशणळवाघोशेहि भूशाविए।
घोळे तालिशि लामलावणळणे लुंडेहि पुण्णोअळा
शंचं शच्चमिदो खु वच्छळशअं भच्छा जुउच्छामहे ॥ १ ॥

---

(क) रक्षऋक्षशरीरशोणितनदीनिमज्जनोन्मज्जन-
क्रीडालोलपिशाचभीषणरवाघोषैः भूषिते।
घोरे तादृशि रामरावणरणे रुण्डैः पूर्णोदराः
सत्यं सत्यमितः खलु वत्सरशतं भक्ष्यान् जुगुप्सामहे ॥

---

१. णदी. ग. ङ.

(नैपथ्याभिमुखमवलोक्य) (क) पिए विश्शगन्धिणि! कीश मं अणुगच्छिउं ण पाळेशि ।

(प्रविश्य)

विस्रगन्धिनी—(ख) अळे मंशप्पिअ! कीश पळाअशि ।

हए खु दहअंधळे चिळमिमश्श दोळंतळ-
त्थळादु पळिअड्ढिआ पिअशहीहि मण्डोअळी ।
शुही उण विहीशणे कळिअभाउतोअंजळी
कए शमहिशिंचिए ळहुवळेण ळंकावई ॥ २ ॥

अदो खु इदो वळं मंशशोणिअवशामत्थिक्खाणं कहावि ण शंभविश्शदि ।

मांसप्रियः—(ग) अळे[1] अविश्शंततह्णे अज्ज वि मंशशोणिआशणपाणाहिळाशे तुज्झ ण णिवट्टेइ ।

---

(क) प्रिये विस्रगन्धिनि! कस्मान्मामनुगन्तुं न पारयसि ।

(ख) अरे मांसप्रिय! कस्मात् पलायसे ।

हतः खलु दशकन्धरश्चिरममुष्यदोरन्तर-
स्थलात् परिकृष्टा प्रियसखीभिर्मण्डोदरी ।
सुधीः पुनर्विभीषणः कृतभ्रातृतोयाञ्जलिः
कृतः समभिषिक्तो रघुवरेण लङ्कापतिः ॥

अतः खल्वितः परं मांसशोणितवसामस्तिष्कानां कथापि न सम्भविष्यति ।

(ग) अरे अविश्रान्ततृष्णे! अद्यापि मांसशोणिताशनपानाभिलाषस्तव न निवर्तते ।

---

१. वळे. ख. ग.

विस्रगन्धिनी — (क) अले![1] कहं[2] णिवट्टेइ। जदो अदिमहंते वि कविळक्खशशमळशंभाले शवशोणिआहाळेण मह तह्णापडिहाओ ण आशी।

मांसप्रियः — (ख) किं एत्थ काळणम्।

विस्रगन्धिनी — (ग) अले![3] किं तुए ण जाणिअं जं अप्पावमाणं पच्छादेउकामश्श ळावणश्श आणाए शमळे णिहआणं णिहआणं ळक्खशाणं शवशळीलाइं शाअळशलिळब्भंतळं पाविआइं। वाणळाणं शवशळीलाइं पुण माळुइणा शमाहळिदश्श मुअशंजीवणोशहश्श पहावेण शंजीविआइं। किंच,

तदो वळं जे णिहआ वळीमुहा महिन्ददिण्णेण वळेण दे वि खु।
शजीवशंळूढशळीळशंधिणो शमुट्ठिआ शुत्तपबुद्धशण्णिहा ॥ ३ ॥

---

(क) अरे! कथं निवर्तते। यतोऽतिमहत्यपि कपिराक्षससमरसम्भारे शवशोणिताहारेण मम तृष्णाप्रतीघातो नासीत्।

(ख) किमत्र कारणम्।

(ग) अरे! किं त्वया न ज्ञातं यदात्मावमानं प्रच्छादयितुकामस्य रावणस्याज्ञया समरे निहतानां निहतानां राक्षसानां शवशरीराणि सागरसलिलाभ्यन्तरं प्रापितानि। वानराणां शवशरीराणि पुनः मारुतिना समाहृतस्य मृतसंज्ञीवनौषधस्य प्रभावेण संजीवितानि। किञ्च,

ततः परं ये निहता वलीमुखा महेन्द्रदत्तेन वरेण तेऽपि खलु।
सजीवसंरूढशरीरसन्धयः समुत्थिताः सुप्तप्रबुद्धसन्निभाः ॥

---

१. वले. ख. ग. २. हं ण णिव. ख. ३. बले. ग.

तदो कदि उण अवशिट्ठाइ मंशशोणिआइ । शव्वं एदं अह्माणं उअळ्भन्तळश्श अभाअहेअपळिवाओ ।

मांसप्रियः—(विहस्य) (क) मुद्धे! मूळबळश्श शवशळीळाइ अशंखाइ । ताइं जळहिं ण पाविआइ । अवि अ—

लुग्गाइ लुग्गाइ वि लावणश्श शिळाइ भूओ वि शमुट्ठीआइ ।
ळत्तावशित्तेहि खु जेहि पुण्णो किण्णाम णो जण्णवशुंधळा शा ॥४॥

विस्रगन्धिनी—(ख) अळे! किं एदेहिं । णं पेच्छ—

णाशोट्ठच्छीशवणविवळाहिट्ठिअट्ठिमएशुं
गाह्निज्जं णो लुहिअविशिअं केत्तिअं मत्थएशुं ।
ही ही ताइं बहुशदशहश्शाइ अश्शादिआइं
जीहाआशं णवळ ण उणो कुच्छिपोशं कुणंति ॥ ५ ॥

---

ततः कति पुनरवशिष्टानि मांसशोणितानि । सर्वमेतदस्माकमुदराभ्यन्तरस्याभागधेयपरिपाकः ।

(क) मुग्धे! मूलबलस्य शवशरीराण्यसङ्ख्यानि । तानि जलधिं न प्रापितानि । अपि च—

रुग्णानि रुग्णान्यपि रावणस्य शीर्षाणि भूयोऽपि समुत्थितानि ।
रक्तावसिक्तैः खलु यैः पूर्णा किन्नाम नो जन्यवसुन्धरा सा ॥

(ख) अरे! किमेतैः । ननु पश्य—

नासोष्ठाक्षिश्रवणविवराधिष्ठितास्थिमयेषु
ग्राह्यं नो रुधिरपिशितं कियन्मस्तकेषु ।
ही ही तानि बहुशतसहस्राण्यास्वादितानि
जिह्वायासं केवलं न पुनः कुक्षिपोषं कुर्वन्ति ॥

---

१. इ खु ण जल. क. २. व. ख.

मांसप्रियः—(ऊर्ध्वमवलोक्य) (क) अळे! जह एदे विळिंचशंकळ-पुळन्दळप्पमुहा शुळशमूहा पुळत्थपुळहप्पहाणा ळिशिशमूहा अ इदो णिवट्टंति तह मण्णे ळाहवे णिअळाअहाणिं अओज्झं पट्ठिउं उवक्कन्देत्ति।

विस्रगन्धिनी— (ख) अळे एव्वं एदं, जं मये खु पुळोइए ळाम-भद्दे अग्गिप्पवेशपळिशुद्धाए शीआदेवीए शह शुहशळ्ळावकळ्ळाण-महूशवं अणुभवन्ते ळंकाउळादो पट्ठिउं पवुत्ते।

(नैपथ्ये)

भो विमानराज! इतस्तावत्।

आधेयानि बहूनि यद्यपि मिथः सम्बाधकृच्छ्रं विना
स्वैरं धारयितुं तवोदरदरी धृष्णोति विष्णोरिव।
तत्तादृक्प्रथिमन्! समं कपिबलैः सौमित्रिसीतासखं
व्योम्ना प्रापय रामदेवममराराध्यामयोध्यां पुरीम्॥ ६॥

ततश्च—

अलकाश्रयणं विनात्मनो विफलां सम्प्रति पुष्पकाभिधाम्।
सफलीकुरु संश्रितः सखे! सविधं तस्य मनुष्यधर्मणः॥ ७॥

---

(क) अरे! यथैते विरिञ्चशङ्करपुरन्दरप्रमुखाः सुरसमूहाः पुलस्त्य-पुलहप्रधाना ऋषिसमूहाश्चेतो निवर्तन्ते तथा मन्ये राघवोऽपि निजराज-धानीमयोध्यां प्रस्थातुमुपक्रान्त इति।

(ख) अरे! एवमेतत् यन्मया खलु प्रलोकितो रामभद्रोऽग्निप्रवेशपरि-शुद्धया सीतादेव्या सह सुखसल्लापकल्याणमहोत्सवमनुभवन् लङ्कापुरात् प्रस्थातुं प्रवृत्तः।

---

1. बळे. Mss.

**मांसप्रियः—(श्रुत्वा) (क) अळे[1] विश्शगन्धिणि! अह्मे वि अओज्झं गच्छन्तं ळामभद्दं अणुगमिश्शामो ।**

विस्रगन्धिनी — (ख) अळे![2] मंशप्पिअ! अवि तत्थ वि मंशवशा-शोणिअशंपादइत्तअं शमलं भविश्शदि ।

मांसप्रियः — (सरोषमिव) (ग) अवेहि अप्पंभळि! अवेहि कुच्छिभळि! तुज्झ उअळपूळणादो अण्णं किंपि पओअणं णात्थि । शिळिपव्वअं गच्छन्ताणं अह्माणं एशे एव्व उत्तळाशाहुत्ते मग्गेत्ति मए एव्वं भणिअं । (ऊर्ध्वमवलोक्य)[3] अळे[4] विश्शगन्धिणि! पेच्छ पेच्छ –

शुग्गीवं च विहीशणं च पुळदो शेणाजुअं पिट्ठदो
शोमित्तिं हळिअं च वाशजुअळे शंभावअंते शुहं ।
आळूढे गअणंबुहिप्पवहणं जाळा खु जं ळाहवे
ताळ्चेअ अदिक्कमेइ तमिणं चक्खुप्पहं पुप्फअं ॥ ८ ॥

---

(क) अरे विस्रगन्धिनि! आवामप्ययोध्यां गच्छन्तं रामभद्रमनुगमिष्यावः ।

(ख) अरे मांसप्रिय! अपि तत्रापि मांसवसाशोणितसम्पादयितृकं समरं भविष्यति ।

(ग) अपेहि आत्मम्भरे! अपेहि कुक्षिम्भरे! तवोदरपूरणादन्यत् किमपि प्रयोजनं नास्ति । श्रीपर्वतं गच्छतोरावयोरेष एव उत्तराशाभिमुखो मार्ग इति मयैवं भणितम् । अरे विस्रगन्धिनि! पश्य पश्य —

सुग्रीवञ्च विभीषणञ्च पुरतः सेनायुगं पृष्ठतः
सौमित्रिं भार्याञ्च पार्श्वयुगळे सम्भावयन् सुखम् ।
आरूढो गगनाम्बुधिप्रवहणं यदा खलु यद्राघवः
तदैवातिक्रामति तदिदं चक्षुष्पथं पुष्पकम् ॥

---

1. अळे अह्मे. क. ग. ङ. 2. ळे अवि. क. ग. ङ 3. (ऊर्ध्वमवलोक्य) विश्श. ख. 4. वळे. Ms.

ता[1]तुरिअं, गच्छह्म।

विस्रगन्धिनी — (क) तह।

(इति निष्क्रान्तौ।)

(विष्कम्भकः।)

[ततः प्रविशतः पुष्पकेण रामलक्ष्मणौ सुग्रीवविभीषणौ सीता च विभवतश्च परिवारः]

लक्ष्मणः — आर्य! अति हि नाम विस्मयनीयोऽयं विमानवेगः।

तथाहि —

आधावन्तीव दूरादभिमुखमवनौ सर्वतः पर्वतौघा
निष्क्रामन्तीव पार्श्वद् द्रुतमुडुततयः पार्श्वयोरेकरूपाः।
भावा द्यावपृथिव्योरपि[2] युगपदहो दृष्टनष्टा इवामी
जाने केनापि सर्वं क्षणिकमिति यतः कथ्यते तथ्यमेतत् ॥९॥

रामः — अयि विमानराज! तारापथादितोऽवतीर्य वसुन्धराम् उपर्युपरि किञ्चिद् मन्दसञ्चारो भव, येनावबुध्येत कतमोऽयमुद्देश इति।

विभीषणः — देव पश्य पश्य!

---

तत्त्वरितं गच्छावः।
(क) तथा।

---

१. ता गच्छह्म निष्क्रान्तौ. ख. २. पि विश्वं. ख.

यावद्यावद् द्रुततरमधो लम्बमानं विमानं
तावत्तावत् प्रथयति वपुः सर्वमुर्वीविभागः ।
किञ्चामुष्मिन् गिरिसरिदरण्यादयो ये पदार्था
व्यक्तिं यान्ति व्यपगतमिथःसक्तयस्तेऽपि सर्वे ॥ १० ॥

सुग्रीवः—सखे! एवमेतत् । अमी पृथक् पृथगवलोक्यन्ते वसुन्धराभृतः ।

उद्यत्प्रद्योतनांशुप्रतिहतिरभसादह्नि वह्निं वमत्सु
प्रस्थेषु प्रज्वलन्तोऽपि हि मिहिरदृषन्मण्डलीमण्डितेषु ।
व्यक्तं नक्तं च दीप्तौषधितरुषु परं व्योममार्गोपसर्पद्-
धूमस्तोमानुमेयां दधति खलु दशामेषु दावाग्नयोऽमी ॥ ११ ॥

सीता—(अग्रतोऽवलोक्य) (क) अय्यउत्त! अणेअधाउरसघुसिणचंदणालेवमणहरो णिरंतरणिपडिअणिज्झरसलिळधवळुत्तरिज्जदरतिरोहिओ वीसंभरादेवीए एक्को थणअळसो विअ किंणामहेओ एस महासेळो ।

रामः—देवि! अयमयं,

पर्यन्तभ्रान्तभृङ्गीपरभृतपटलीपक्षविक्षेपवात-
व्याधूतव्याधिघातद्रुमकुसुमरजःस्वर्णचूर्णावकीर्णाम् ।
बिभ्राणो मूर्तिमुच्चावचरुचिविलसद्धातुरत्नामयत्ना-
दारूढो मेरुसाम्यं पथि भवति दृशोरत्र नश्चित्रकूटः ॥ १२ ॥

सुग्रीवः—अस्य हि—

---

(क) आर्यपुत्र! अनेकधातुरसघुसृणचन्दनालेपमनोहरो निरन्तरनिपतितनिर्झरसलिलधवळोत्तरीयदरतिरोहितो विश्वम्भरादेव्या एकः स्तनकलश इव किन्नामधेय एष महाशैलः ।

सूर्याचन्द्रमसोरविश्रमसदासञ्चारघण्टापथं
व्योमस्कन्धमतीतवन्ति शिखराण्यध्यास्य सिद्धाङ्गनाः ।
निर्निद्राम्बुजकैरवोत्पलसरस्तीरेषु रात्रिन्दिवं
विश्राम्यन्त्यपघर्मशीतजनितप्रम्लानकम्राननाः ॥ १३ ॥

लक्ष्मणः — अयि सुग्रीवविभीषणौ !

अस्मिंस्तातविपत्तिमार्यभरतादाकर्णयद्भिः पुरा
नास्माभिः परमेभिरप्यतितरामाक्रन्दितं शाखिभिः ।
ये मुञ्चन्त्यधुनापि पुष्पनयनैर्बाष्पान् मधुच्छद्मना
भृङ्गारावमिषाद् विलापवचनान्युच्चैर्वितन्वन्ति च ॥ १४ ॥

सीता — (सास्रम्) (क) हा ससुर! ससुरासुरमणुअभुअङ्गमो वि एस जीवळोओ तुए विणा सुण्णो विअ मे पडिभादि ।

विभीषणः — (स्वगतम्) इदानीमेव कथमपि करुणरसवरुणालयादुत्तरिता देवी पुनरपि तस्मिन्नेव पतितुमुपक्रमते । तदन्यतस्तावदाक्षिपामि । (प्रकाशम्) (अग्रतो निर्दिश्य) । देव! अयमयम् —

रोमन्थस्फुरदोष्ठगोष्ठशयनप्रेष्ठाङ्गकण्डूयन-
क्रीडासक्तगवीनवीनशिशुकव्यावल्गितोपान्तभूः ।
हव्यद्रव्यसुगन्धिगन्धवहनव्याधूतधूमावलि-
श्यामीभूतवियत्पथो नियमिनः कस्याश्रमो दृश्यते ॥ १५ ॥

---

(क) हा श्वशुर! ससुरासुरमनुजभुजङ्गमोऽप्येष जीवलोकः त्वया विना शून्य इव मे प्रतिभाति ।

---

१. दतस्ता. ख.

रामः — (विलोक्य सहर्षं) लङ्कापते! अयं हि तत्रभवतो भरद्वाज-महर्षेराश्रमवाटः । अत्र हि —

शारीशुकायतनकोटरसम्प्ररूढ-
श्यामाकशालिफलशालिवटद्रुमाणि ।
गोगर्भिणीचरितदर्भकुशाङ्कुराणि
विश्रान्तिमाश्रमपदानि दृशोर्दिशन्ति ॥ १६ ॥

(नैपथ्ये)

अयि विमानराज! त्वर्यतां त्वर्यताम् ।

सीता — (आकर्ण्य सहर्षम्) (क) अम्मो भत्तुविरहमहाणळडज्जमाणरहुउळवहूसवणसीअळसन्देसक्खरपीऊसवरिसिणो केसरिकळत्तसम्भवस्स मारुइणो[1] विअ एस सरो सुव्वइ[2] ।

रामः — देवि! स्यादेवम् । पुरन्दरादिभिः सह लङ्काद्वीपमागतस्य तातदशरथस्याशया अभिषेकसम्भारसम्भरणार्थमयोध्यां प्रति पूर्वमेवानुप्रेषितौ हि जाम्बवद्धनुमन्तौ ।

(पुनर्नैपथ्ये)

विश्वामित्रवसिष्ठकाश्यपभृगुप्राचेतसाद्याः पुनः
सस्त्रीकः सपुरोहितो नरपतिः सीरध्वजः सानुजः ।
अन्ये केकयमागधप्रभृतयो भूपाश्च सम्बन्धिनः
सम्प्राप्तास्त्वरयन्ति देव! भवतो राज्याभिषेकोत्सवम् ॥ १७ ॥

---

(क) अम्मो भर्तृविरहमहानलदह्यमानरघुकुलवधूश्रवणशीतलसन्देशाक्षरपीयूषवर्षिणः केसरिकळत्रसम्भवस्य मारुतेरिवैष स्वरः श्रूयते ।

---

१. णो खु एस. ख. २. सुवइ. ख.

सुग्रीवविभीषणौ—(सहर्षम्) विमानराज! किं विलम्बसे ।
अयं हि—

ताम्रैर्दूरावनम्रक्षितिपतिमकुटश्रेणिमाणिक्यरोचि-
मालाबालप्रवालैरविरलमिलितैरास्तृतोपान्तभागम् ।
तुङ्गं पूर्वाद्रिशृङ्गं रविरिव विमतव्रातमातङ्गसिंहः
सिंहाङ्कं पीठमुच्चैरधिवसतु चिरान्मानवं मानवेन्द्रः ॥ १८ ॥

वयञ्च—

लक्ष्म्या मुकुन्दमिव चन्द्रिकयेव चन्द्रं
चन्द्रार्धशेखरमिवाचलराजपुत्र्या ।
एकासनस्थमनया सममेव देव्या
देवं कियच्चिरमुदीक्षितुमुत्सुकाः स्मः ॥ १९ ॥

(ततः प्रविशतो भरतशत्रुघ्नौ जाम्बवद्धनुमन्तौ च ।)

जाम्बवान्—इत इतः कुमारौ ।

रक्षोराजभुजाभुजङ्गमविषज्वालायितास्त्रच्छटा-
दुर्लङ्घं जितशक्रविक्रमचमूचक्रोरुनक्रोत्कटम् ।
तीर्त्वा सङ्गरसागरं धृतधनुर्बाणप्लवो राघवः
सुग्रीवादिसमग्रसैन्यसहितो देवोऽयमावर्तते ॥ २० ॥

भरतः—(ऊर्ध्वमवलोक्य सहर्षम्) वत्स शत्रुघ्न! पश्य पश्य—

शरीरिण्या साक्षादिव विजयलक्ष्म्या परिवृतः
प्रजावत्या कीर्त्या सहित इव मूर्त्या घटितया ।
तनूमत्या स्थित्येव च सुचरितानामयमयं
चिरादार्यः सिञ्चत्यमृतपरिवाहैरिव दृशौ ॥ २१ ॥

शत्रुघ्नः — आर्य !

मायामन्थरया प्रतारितधिया तातो वरं प्रार्थितो
मात्रा मध्यमया यदेतदुचितं यच्चापि तेनार्पितम्[1] ।
नेदं चेदभविष्यदाशरपतिप्रक्षोभितानां कुतो
लोकानामजनिष्यदद्य सहसा सर्वात्मना निर्वृतिः ॥ २२ ॥

हनूमान् — सत्यमाह कुमारः[2] । अद्य हि —

धर्मे तिष्ठति विष्टपत्रयमिदं रक्षोभिरक्षोभिते
वैतानेष्वनलेषु जुह्वति हविर्निर्दोषमग्न्याहिताः ।
गायन्ति स्फुटरागयोगमधुरं गन्धर्वसिद्धाङ्गना
युष्मत्कीर्तिमितस्ततः किमधुना भद्रेतरं विद्यते ॥ २३ ॥

रामः — (विमानवेगनाटितकेनाधोवलोक्य, [3]सहर्षोल्लासम् ।) अये! इयमियमयोध्या ।

बिभीषणः — (सबहुमानाश्चर्यप्रमोदम्) अये,

इक्ष्वाकूणां त्रिभुवनमहाशाखिशाखोपशाखा-
संसक्तायाः प्रभववसुधा कीर्तिमन्दारवल्याः ।
यूपश्रेणीपुलकिततटप्रस्खलत्सारवाम्भः-
कल्लोलालीकलकलमुखी[4] दृश्यतेऽसावयोध्या ॥ २४ ॥

लक्ष्मणः — (अधोऽवलोक्य) आर्य! अयमसावार्यभरतो वत्स-शत्रुघ्नश्च जाम्बवदाञ्जनेयाभ्यां सार्धमित एवाभिवर्तते[5] । तदवतरामः ।

---

१. यच्चैष तेनार्पितः; २. रः । धर्मे क. ३. सहर्षम् ख. सप्रहर्षं ग. ४. खा श्रूयतेऽसा. ग. ५. वर्तेते. घ.

(सर्वे विमानादवतरन्ति ।)

भरतशत्रुघ्नौ — (उपसृत्य) आर्य! अभिवादयावहे । (इति साष्टाङ्ग-[1] पातं प्रणमतः ।)

रामः -- (सहर्षबाष्पगद्गदम् ।) वत्सावायुष्मन्तौ भूयास्तम् । (इत्युत्थाप्यालिङ्गति ।)

उभौ — (सीतामुपेत्य) आर्ये अभिवादयावहे ।

सीता — (सस्नेहासम्) (क) वच्छा दीहाउणा होह ।

लक्ष्मणः — (भरतमुपेत्य) आर्य! अयं लक्ष्मणः प्रणमति ।

भरतः — (सस्नेहं परिष्वज्य) वत्स! विजयी भव ।

शत्रुघ्नः — (लक्ष्मणमुपेत्य) आर्य! अयं शत्रुघ्नः प्रणमति ।

लक्ष्मणः --- वत्स! चिरं जीव । (इति परिष्वजते ।)

(नैपथ्ये)

(ख) ओसरह ओसरह ।

रामः -- कुमार! किमिदम् ।

भरतः — आर्य!

---

(क) वत्सौ दीर्घायुषौ भवतम् ।

(ख) अपसरत अपसरत ।

---

१. ति प्रणमतः, ख. ग. घ.

प्रस्नुतस्तनपयोनयनाम्भो-
निर्झरस्नपितशुष्कशरीराः ।
सम्भ्रमस्खलितपादसरोजा
मातरः स्वयममूरभियान्ति ॥ २५ ॥

रामः -- (ससम्भ्रमम् ।) वत्स लक्ष्मण! देवि वैदेहि! वयम त्वरितमुपेत्य प्रणमामो मातृजनम् ।

(इति ताभ्यां सह निष्क्रान्तः ।)

जाम्बवान् -- (अङ्गुल्या निर्दिश्य) कुमारौ अयं स पूर्वप्रस्तुतः सुग्रीवः, अयश्च स विभीषणः ।

भरतशत्रुघ्नौ -- (सप्रमोदबहुमानमुपेत्य[1] ।) अपि सुखमखण्डित-सौहार्दयोरत्र भवतोः । (इत्यालिङ्गतः ।)

सुग्रीवविभीषणौ — इदानीं[2] सम्पूर्णसुखौ भवावः ।

सुग्रीवः — (जनान्तिकम् ।) सखे! विभीषण! इमावपि तावेव कुतः --

स एव हि गभीरिमा मधुरिमा स एवानयो-
स्तदेव सरसं वचो वपुरिदं तदेवोज्ज्वलम् ।

विभीषणः— सखे किमिदमद्भुतं भुवनरक्षणैकव्रतं
विसंवदति किं मिथो भुजचतुष्टयं शार्ङ्गिणः ॥ २६ ॥

(नैपथ्ये)

जटाचीरे पारेसरयु परिहाय प्रतिनवं
वसानः कौशेयं मणिमकुट[3]हाराङ्गदधरः ।

---

१. नमुपसृत्य. ख. नपुरस्सरमुपसृत्य. ग. २. नीं पूर्णसुखौ. ख. ३. टघाराङ्गद. ग.

घनापाये पूर्णः शशधर इवात्यन्तमधुरः
समारूढः सिंहासनमलघु सीतासहचरः ॥ २७ ॥

(सर्वे हर्षं रूपयन्ति ।)

भरतः — वयस्यौ[1] सुग्रीवविभीषणौ! तदहमप्येतावन्तं कालमार्यनिर्विशेषगौरवभाराढ्ममार्यपादुकायुगलमिदमार्यपादाम्बुजयुगलेनयोजयामि ।

उभौ — प्राप्तकालमिदम् ।

(भरतो निष्क्रान्तः ।)

(नैपथ्ये)

अम्भोजासनपाणिकुम्भकुहरात् सम्भूतमम्भो यथा
शम्भोर्मूर्धनि चन्द्रखण्डमकुटे तद्वद्घृणां प्रभोः ।
बालार्कारुणमौलिभारमहिते मन्त्राभिभूतं मह-
त्तीर्थोपात्तमिदं वसिष्ठकलशादस्मिन्नभिष्यन्दते ॥ २८ ॥

(आकाशे दुन्दुभिध्वनिः ।)

हनूमान् — (ऊर्ध्वमवलोक्य) अये,

दिग्दन्तावलगण्डभित्तिगलितानुन्मुच्य दानद्रवा-
नागच्छद्भिरलिव्रजैरविरलैराच्छादयन्ती दिशः ।
वाताधूतपरागपूरकपिशीभूतान्नभोमण्डलात्
पौष्पी वृष्टिरसौ पतत्यनिमिषश्रेणीविनिष्पातिता ॥ २९ ॥

जाम्बवान् — तदहमपि,

---

१. स्यौ तदह. क.

क्षुब्धाचलक्षुभितदुग्धपयोनिधान-
ध्वानावधीरणचणेन सुमङ्गलेन ।
कोणाभिताडनभुवा भुवनान्यमूनि
भेरीरवेण परितः परिपूरयामि ॥ ३० ॥

(निष्क्रान्तः ।)

(नैपथ्ये)

विश्वंभरामात्मशिरःप्रवृत्तैः
कृत्वा कृतार्थामभिषेकतोयैः ।
गङ्गाम्बुपूरैरिव शैलराजो
विराजते दाशरथिर्नरेन्द्रः ॥ ३१ ॥

शत्रुघ्नः — (नैपथ्याभिमुखमवलोक्य, सहर्षम् ) वयस्यौ पश्यतं पश्यतम् ।

पूर्णाभिषेकमङ्गल्यः पूर्णचन्द्रसमद्युतिः ।
विश्वामित्रं पुरस्कुर्वन्नार्योऽयमभिवर्तते ॥ ३२ ॥

(ततः प्रविशति विश्वामित्रेण सह रामः ।)

रामः — भगवन्नुपाध्याय! अयमेष रामभद्रः प्रणमति ।

विश्वामित्रः — वत्स! रामभद्र!

तुहिनहारहराचलसन्निभैस्तव यशोभिरशोभि जगत्रयी ।
दशमुखं विनिहत्य दिशां गणं दशमुखन्तु धिनोषि तदद्भुतम् ॥३३॥

रामः — (सप्रश्रयमञ्जलिं बद्ध्वा) भगवन्नुपाध्याय!

युष्मत्पादसरोजरेणुरणुरप्युच्चैर्भवत्सन्निभः
किं वा वस्तु सरीसृजीति न सतामन्तःस्थितस्सन्ततम् ।

पुष्णाति द्विषदाहवेषु विजयं मुष्णाति पापोच्चयं
तृष्णादैन्यभयानि हन्ति कुरुते सत्कीर्तिपूर्तिश्रियः ॥ ३४ ॥

(नैपथ्ये)

वैतालिकः — जयतु जयतु महाराजो रावणान्तकः ।

छायासूर्यमिव क्षपाचरतमस्तोमच्छिदाकारणं
ताराचन्द्रमिवाञ्जनं जनदृशां मुख्यैरभिख्यामृतैः ।
स्वाहाग्नीव च देवराजसदसः सन्तर्पणे सम्मुखं
सीताराघवमेतदद्भुततरं द्वन्द्वं चिरं जीवतु ॥ ३५ ॥

(ततः प्रविशति सीता चेट्यौ च)

सीता — (क) हळा मंजरिए! हञ्जे मञ्जूसिए!
रज्जाहिसेअसविसेसमणोज्जसोहं
चंदं व संदवरिसादिअहावसाणे ।
पुंवाअळुच्चकणआसणसण्णिसण्णं
णिव्वण्णिउं तुवरए मणमज्जउत्तं ॥ ३६ ॥

मञ्जरिका — (क) सहि! को सन्देहो ।

---

(क) हला मञ्जरिके! हञ्जे मञ्जूषिके!

राज्याभिषेकसविशेषमनोज्ञशोभं
चन्द्रमिव सान्द्रवर्षादिवसावसाने ।
पूर्वाचलोच्चकनकासनसन्निषण्णं
निर्वर्णयितुं त्वरते मन आर्यपुत्रम् ॥

(क) सखि कः सन्देहः ।

इअराणवि रामअंदळच्छीसइसंपेच्छणमुछवो जणाण ।
तुह किं पुण दीहविप्पवासजळणज्जाळपळित्तचित्तआए ।। ३७ ।।

मञ्जूषिका — (क) दिट्ठिआ,

रअणिअरपुरीचिराहिवासा सहि तुह किंपि मळीमसत्तणं जम् ।
जळणणिवडणेण तं पसंतं जह किर जच्चसुवण्णळट्ठिआए ।। ३८ ।।

सीता — (उपसृत्य) (ख) जेदु अय्यउत्तो ।

उभे -- (ग) जेदु भट्टा ।

सीता — (विश्वामित्रं प्रति) (घ) भअवं पणमामि ।

विश्वामित्रः — भद्रे भर्तुरभिमता भाग्यानां भाजनं भूयाः ।

सीता — (ङ) अणुग्गहिदह्मि ।

(प्रविश्य ।)

भरतलक्ष्मणौ — जयत्वार्यः । उपाध्याय प्रणमावः ।

(सुग्रीवादय उपेत्य प्रणमन्ति ।)

विश्वामित्रः — वत्स रामभद्र,

---

इतरेषामपि रामचन्द्रलक्ष्मीसदासम्प्रेक्षणमुत्सवो जनानाम् ।
तव किं पुनर्दीर्घविप्रवासज्वलनज्वालाप्रदीप्तचित्तायाः ।।

(क) दिष्ट्या,

रजनिचरपुरीचिराधिवासात् सखि तव किमपि मलीमसत्वं यत् ।
ज्वलननिपतनेन तत् प्रशान्तं यथा किल जात्यसुवर्णयष्टेः ।।

(ख) जयत्वार्यपुत्रः ।

(ग) जयतु भर्ता ।

(घ) भगवन् प्रणमामि ।

(ङ) अनुगृहीतास्मि ।

विष्वद्र्यक्चक्रवाळाचलवलयचतुष्कूलसप्तार्णवार्ण-
स्वर्णाम्भोजं सुवर्णक्षितिधरमभितो भाति या भूतधात्री ।
तस्यामस्यामसामन्यो बहुमहिमवशादूर्ध्वमस्मादधश्च
व्याप्ता भूयासुराशु क्रशितशशिरुचिस्फूर्तयः कीर्तयस्ते ॥ ३८ ॥

रामः — अनुगृहीतोऽस्मि ।

विश्वामित्रः — वत्स रामभद्र ! किं ते भूयः प्रियमुपहरामि ।

रामः — भगवन्, किमतः परमपि प्रियमस्ति । पश्य —

विकीर्णैर्दिव्यास्त्रैर्विगतभवतापेन भवता
कृतं वैरिव्रातप्रशमनकृतार्थं त्रिभुवनम् ।
इयं प्रत्यानीता हुतवहविशुद्धा जनकजा
प्रतिष्ठां च प्राप्ता मम किमपरं प्रार्थ्यमधुना ॥ ३९ ॥

तथापीदमस्तु —

(भरतवाक्यम्)

इष्टापूर्तैकतानो भवतु नियमिताभासुरो भूसुरौघो
वृष्ट्या पुष्णातु पृथ्वीमुचितहुतहविःसम्भृतौजा बिडौजाः ।
रक्षेदक्षीणधर्मा चतुरुदधितटीमेखलां भूतधात्रीं
पुण्यात्मा पद्मनाभप्रणिहितहृदयो वञ्चिमार्ताण्डवर्मा ॥ ४० ॥

(इति परिक्रम्य निष्क्रान्ताः सर्वे ।)

सप्तमोऽङ्कः ।

सीताराघवं नाम नाटकं सम्पूर्णम्* ।



* सीताराघवसंज्ञं रचितमिदं रामपाणिवादेन ।
तेनैव च लिखितमपि प्रेक्षणकं वो मुदे भूयात् ॥
पद्यमिदमधिकतया दृश्यते क. मातृकायाम् ।

१. ष्ठापि. ख. २. ण्ड भूपः ।

प्रलयजलदनिनदनेभिरथनिकरैः पादातैरपि सलीलसमुत्तीर्णमहार्णोधयः, प्रलयसमयसमुज्जृम्भमाणजम्भरिपुसम्प्रचोदितसकलभुवनविलयकरघन-निनदडम्भस्तम्भनाकुण्ठवैभवगभीरतरपटहमुखवादित्रनिनादबृंहितविष्फा-राम्बुजनाभकम्बूदितघुमुघुमुघोषबधिरीकृतनिखिलजगत्कटाहाः, विपुलतर-बलसम्बाधकुम्भिनीतलसमुज्जृम्भिततिरोहितारुणकिरणजालरेणुजालैः शरत्कालमपि सजलजलदागमकालं कलयन्तः, अभ्रंलिहाग्रकेतुदण्ड-मण्डितविलोलधवलपताकाजालैरम्बरतरङ्गिणीभङ्गशङ्कामपि कारयन्तः, अतिप्रवृद्धकोपारुणितेक्षणच्छलेन शोणितपुरदाहदहनमपि वहन्तः,आस्फो-टनक्ष्वेलनादिघनतरनिनदस्तनितविस्फारितचापपाकशासनकोदण्डषण्डाः, बाणधराधरे बाणधारां वर्षितुं प्रस्थिता बलाहकनिवहा इवाहमहमिकया समुत्पतन्तः,विपक्षकक्षाशुशुक्षणिसदृक्षजगत्क्षोभकरणचतुरकरधृतधनुरुदि-त्वरबाणमण्डलैः खण्डपरशुपरिपालितबाणपुरप्रासादसालाट्टालगोपुरादीन् बाणपूर्णानेव सामर्षमकार्षुः ॥

एवं वृष्णिप्रवीरप्रतिभयशरधाराभिभूतस्वगेह-
प्रेक्षा[1]कालप्रवृद्धप्रबलतररुषा धर्षितात्मा स बाणः ।
युद्धश्रद्धानिबद्धो रिपुबलतुलितद्वादशाक्षौहिणीभि-
र्दम्भाहङ्कारमूढस्त्रिभुवनमखि[2]लं कम्पयन् सम्प्रतस्थे ॥ ६३ ॥

तदनु, सुत्रामसहजशस्त्राबलिसपत्राकृतनिजभक्तसत्राशनरिपुवरपुर-बलावलोकनसमु[3]दितकुतूहलामरः,स्थविष्ठकनिष्ठकुलिशद्राघिष्ठबलिष्ठाराळकराळ-दंष्ट्रायुगलस्फुरितविस्फुलिङ्गदहननयनवक्रतुण्डभयङ्करानना।तितुङ्गजटा-मण्डलमण्डिताशीविषभस्मधूळीभूषितकुब्जादिविकृताकारखट्वाङ्गखेटपरश्वध-त्रिशूलादिघोरतरायुधपूरितपीवरभुजामण्डलभूतमातृकूरमाण्डाष्टभैरवसङ्घ-संवृतः, स्वकीयकायालङ्कृतविषधरनिकायवक्त्रज्वलदतिघोरकाकोळानल-ज्वालावलीभिः त्रिपुरनन्दनदहननिटिलतटनयनोदित्वरदहनज्वालाभिश्च

१. प्रेक्षाविक्षिप्तरूक्षप्र., २. अखिलं., ३. स्फुटित. घ.

लेलिह्यमानचतुर्दशभुवनान्तरालः, कालकूटाधिवासकण्ठमण्डलाहिण्ड्यमान-कुण्ठेतरकण्ठीरवनाद पिनाकज्यारवहेरम्बगळगालितबृंहितनन्दिकेश्वरसन्ताडितभेरीनिनादभूतप्रेतवीरभद्रभद्रकालीमुखाट्टहासविषधरफूत्कारनिजवाहसौरभेयहुङ्कारकण्ठालङ्कृतघण्टानिनादमुखानिर्वचनीयमहारवत्रुटितकर्णपुटदिगन्तदन्तिवरनिनादशतगुणितशब्दकोलाहलनिर्भेदितब्रह्माण्डमण्डलः, गजाननषडाननाभ्यां सह भक्तवत्सलो भगवान् मृत्युञ्जयोऽपि भक्ततमदैत्यत्राणाय बद्धोद्यमो दैत्यारिपालितां यादववाहिनीमाढौकत ॥

मुरारिदितिजाधिप[1]त्रिपुरवैरिसेनागण-
प्रवृत्तघनसङ्गरक्षणविवृद्धकोलाहलैः ।
रजस्ततितिरोहितो दिनमणिर्द्रुताश्चामराः
चचाल च जगत्त्रयी मुखपरो बभौ नारदः ॥ ६४ ॥

एवं समुज्जृम्भमाणे शक्त्याशस्त्रिमुष्टीमुष्टिकेशाकेशिमुसलामुसलिदण्डादण्डिदनुजमनुजप्रमथमिथःप्रथने निरन्तरनिपतत्तीक्ष्णतरशरपरिघखड्गकुन्तादिवरायुधखण्डितगळगलितबहळशोणितजलपुरुषशिरोनिवहच्छिन्नभिन्नहेतिततिजलचरनिकरनिहतपतितमत्तमतङ्गजतीरग्रावंवीरभीरुगणसमुत्साहविषादप्रदकीनाशनिवेशनाम्बुधिप्रवाहवाहिनीनिवहेऽप्यूह्यमाने आहवमहीतलनिपतितमस्तिष्कमांसशोणितपूरितपृथुलपिचण्डान्त्रमालामुण्डमालाषण्डमण्डितमत्ततरनराशनमत्तकाशिनीकबन्धसङ्घसंप्रवृत्तनृत्तशिरःकपालताळाट्टहासरवभयङ्करशङ्करानुचरभूतप्रेतपिशाचकुलकिलिकिलारावभेरीपटहदुन्दुभिसञ्जिहानमहाघोषपाञ्चजन्यनिध्वानमुखशब्दसम्पूर्णे ब्रह्माण्डमण्डले, निजनिजध्वजिनीविध्वंसविलोकनविवृद्धकोपा यादवदानवेशा वीरोचितद्वैरथसङ्गरसङ्गतास्सुभृशमशोभन्त ॥

दैत्यारिं मन्मथारिर्दनुजपतिममुं सात्यकिः कूपकर्णः
कुम्भाण्डश्चापि रामं बलितनयसुतं साम्ब एवाभियातः ।

1. दनुजाधिप. घ.

प्रद्युम्नं कार्तिकेयः किमिह हि बहुना सर्व एवातिशूरा
गर्वाक्रान्तास्सुहृद्यास्सदृशभुजबलैस्सङ्गतास्सङ्गराय ॥ ६५ ॥

एवं प्रवृत्ते परब्रह्मणीव सुरमुनिजनपरीक्ष्यमाणे गिरिपार्श्वदेश इव शरततिसम्पूर्णे गुहातल इव सिंहनादविनोदिते अम्बुधिमध्य इव कम्बुनादसम्बाधे आकाश इव गुणशब्दपूरिते हव्यवाहनादिदिव्यास्त्रस्तोमभयानके महारथद्वैरथसमरे सर्वज्ञेऽपि जृम्भणास्त्रसम्मूढे शरजन्मन्यपि प्रद्युम्नशरजन्मतापसन्नतषण्मुखे सम्मुखात्पराङ्मुखे कुम्भाण्डकूपकर्णयोरपि हलधरमुसलहलदलितयोः प्रमथनिवहेऽपि मुररिपुशितशरनिकरैः सह भुवनपृथिवीतलात् सुदूरविद्रुते असुरपृतनास्वपि असुरक्षणैकव्यापृतासु बाणोऽपि यादवबाणप्रतापालोकविवृद्धामर्षधर्षितचेताः निजबाणप्रतापप्रकटनाय स्वदोर्दण्डषण्डधृतासङ्ख्यबाणकोदण्डमण्डलः कुण्डलिवरशायिनं वृष्णिकुलावतीर्णं विष्णुमेव युद्धबद्धतृष्णस्सद्रुतमेवाभ्यद्रवत् ॥

तावद्दैत्यारिशार्ङ्गच्युतनिशितशरव्रातनिर्भिण्णचाप-
स्तोमाश्वस्यन्दनाङ्गो बहळरुधिरसम्प्लाविताशेषगात्रः ।
कल्पान्तादित्यचक्रप्रतिभटमहसां केशवास्त्राशुगानां
स्मारं स्मारं स दीनो विधुतकरबलो भूमिमात्राश्रयोऽभूत् ॥ ६६ ॥

अनन्तरं च, स्वसुतजीवपरित्राणसमागतां भवमूर्तिमिव दिगम्बरां तन्मुहुर्तारब्धसुररिपुवरासुहरणविनाशसमुत्पतितमहोत्पातमहोल्कापातवदापतितां निजात्मजरक्षणबद्धकक्ष्यां विमुक्तकेशां निजबाणपातबाणमध्यवर्तिनीं कोट्टवीसंज्ञामसुरवरवर्णिनीं निर्वर्ण्य लज्जानतानने मारितपूतने भगवति नन्दनन्दने बाणेऽपि तदन्तरलाभसन्तुष्टमानसे रिपुकरगतमपि निजजीवं संगृह्य गृहान्तरं गते त्रिलोकीबाधकोऽति-

१. सिंहनादविनोदिते. ख. २. हव्यवाहन ग. ३. केशवास्त्राशुगानाम्. ख. ४. महोल्कापातमहोत्पातवत्. घ. ५. रिपुकरगतनिजजीवमपि. घ., रिपुकरगमपि निजजीवम्. ङ.

भयङ्करविकृताकारो माहेश्वरज्वरः सकललोकेश्वरं महेश्वरपराभवदायकं दामोदरं हन्तुमिव साटोपमटीकत ॥

हुताशनसमेक्षणं त्रिपदपञ्चशाखाञ्चितं[1]
　त्रिशीर्षमतिभीषणं त्रिपुरवैरिदासं ज्वरम् ।
विलोक्य भगवानमुं स्वजनबाधकं माधवः
　समादिशदतिक्रुधा ज्वरमपि स्वमाविस्मितः ॥ ६७ ॥

युद्धे तयोः सकलविस्मयदानदक्षे
　विष्णुज्वरेण विजितः प्ररुदन् स भीतः ।
तुष्टाव विष्णुमितराश्रयलाभशून्यो
　रौद्रात्मनामपि हरिर्भगवान् शरण्यः ॥ ६८ ॥

यो ब्रह्मादीश्वरो यं शिवमिह जगदुर्येन दृश्यं हि सर्वं
　सद्भावं याति यस्मै प्रभवति न मनश्चापि वाचंयमानाम् ।
यस्मादुद्याति विश्वं स्थितिमपि लभते यस्य शक्त्या निलीनं
　यस्मिंस्तं ब्रह्मलिङ्गं परमसुखमयं त्वां भजे निर्विकारम् ॥ ६९ ॥

सत्यात्मकस्त्वमसतीं परिगृह्य मायां
　तस्यां जलेऽर्क इव भास्यनृतप्रपञ्चः ।
वाताग्नितोयधरणीसकलेन्द्रियात्मा
　तां सन्निरोद्धुमवशः प्रणतोऽस्मि विष्णो! ॥ ७० ॥

विश्वंभरातिशुभदैरवतारभेदै-
　र्विश्वंभरामरजलाञ्जलिमादधानः ।
विश्वं बिभर्षि भगवन्नरविन्दनाभ!
　भक्तोत्तमाननुगृहीतुमघापहारिन्! ॥ ७१ ॥

---

१. पञ्चशाखायुतम्. ख.

त्वत्तेजसा रणशिरस्यतिदुस्सहेन
तप्तोऽस्मि माधव! परं ज्वररूपिणाहम् ।
तत्तापमाशु भगवन्! जहि मे प्रसन्नः
त्वत्पादमाश्रितवतः करुणाम्बुराशे! ॥ ७२ ॥

अनाथमेवं करुणं रुदन्तं
स पालकः सर्वजगत्स्थितानाम् ।
ज्वरं बभाषे मधुकैटभारिः
समस्तलोकज्वरनाशनोत्कः ॥ ७३ ॥

जहीहि तापं ज्वरतोऽस्मदीयात्
त्रिशीर्ष! तुष्टोऽस्मि तव स्तवेन ।
अनेन मां संस्तुवतां जनानां
सकाशतः स्वीकुरु भीतिमुग्राम् ॥ ७४ ॥

इत्थमर्थिजनकृतार्थीकरणपरपुराणपुरुषभारतीदूरीकृतदुरिततापभरे समुत्तरळभक्तिभारनतकन्धरे समूढपरमानन्दबाष्पपूरे वासुदेवं प्रणम्य वासभूमिगत्वरे माहेश्वरज्वरे, बाणोऽपि पूर्ववदेव सम्भृतप्रथनसम्भारः सङ्गरधरणिसङ्गतः शार्ङ्गपाणिना सममतिघोरसमरं विधाय नारायणनाराचधारानलनिर्दग्धरथकूबरध्वजशरासनादिवरायुधो निरायुधो धरामण्डलाहिण्डितः चक्रधरचक्रनिकृत्तबाहुचक्रसहविध्वस्तानिरस्तसमस्तमहाजनमहावलेपो महाबलिसुतश्लाघा महादेवसेवाबलाढ्या महापुरुषस्त्रिविक्रमश्चक्रपाणिरेव महेश्वरवचनसमर्थनाय अस्मदीयभुजबलावलेपलवनं करोतीति समुदितपरमार्थज्ञानः अतुच्छभक्तिसम्पूरितमानसः प्रपन्नदुरिततापहरौ मुरहरस्मरहरौ तरसा मनसा शरणमयासीत् ॥

तावत्सुदर्शनविनष्टमहावलेप-
बाहासहस्रमसुरेश्वरमात्मभक्तम् ।

---

१. परज्वर. ख. ग. २. नाथ ङ., च. ३. अतिघोरतरम्. ख.

दृष्ट्वा दयापरवशो भगवान् महेशः
तुष्टाव विष्णुमपहाय विमूढभावम् ॥ ७५ ॥

देव! त्वद्दर्शनोत्का विशमलमतयः केवलाकाशरूपं
पश्यन्ति त्वां शुकाद्या निगमपरिचयाद्वाङ्मयब्रह्मनिष्ठम् ।
ब्रह्मज्योतिः परं तत्त्रिभुवनकलितस्वस्वरूपं विराजं
तं त्वामानन्दमूर्तिं विधृतगुणगणं निर्गुणाकारमीडे ॥ ७६ ॥

कृष्णावतारस्तव धर्मगुप्त्यै
भद्राय चासौ जगतां परात्मन् ।
दत्तानुभावा भवता त्रिलोकी-
सर्गादिकार्ये विभवो भवामः ॥ ७७ ॥

एकस्त्वमीशः पुरुषः पुराणो
हेतुः स्ववेत्ता स्वयमप्यहेतुः ।
प्रकाशनाय प्रथितो[1] गुणानां
स्वमाययैवासि यथानुभावम् ॥ ७८ ॥

विष्णो! गुणेनापिहितोऽपि तान-
प्यात्मप्रदीपो गुणिनोऽपि सर्वान् ।
प्रकाशयन् भासि रविर्यथा स्वं-[2]
च्छायातिरोभूततनुर्महात्मन्! ॥ ७९ ॥

यन्मायया बत विनष्टधियोऽतिघोर-
संसारदुःखमजितानुभवान्ति लोकाः ।
दत्तं त्वयैव परिगृह्य नृजन्म मूढा
ये नो भजन्ति चरणं तव तेऽनुशोच्याः ॥ ८० ॥

---

१. प्रथते. ग. २. स. घ. ग.

यस्त्वामीशमतिप्रियं त्रिजगदात्मानं त्यजन् मूढधीः
सक्तो दुर्विषयेषु भक्षयति स त्यक्त्वामृतं दुर्विषम् ।
गीर्वाणाः कमलासनोऽहमृषयः सर्वेऽपि सर्वात्मना
त्वामेकं जगतामधीश! शरणं प्राप्ता दयाम्भोनिधे! ॥ ८१ ॥

तं त्वामनन्यं जगदीशमेक-
मनन्यनाथं जगदादिहेतुम् ।
समं शिवं क्षोभविहीनमाद्यं
भजामहे संसृतिमोचनाय ॥ ८२ ॥

भक्तो ममैष दनुजाधिपतिर्मयैव
दत्ताभयश्च परिचारकतां प्रपन्नः ।
तस्माद्भवत्वयमधोक्षज! डम्भहीनः
प्रह्लादवत् तव दयामृतवारिराशिः ॥ ८३ ॥

इत्यर्थिते सरोजाक्षे सर्वज्ञेनेन्दुमौलिना ।
ससार कृष्णवक्त्रेन्दोः[१] सुधीभूता सरस्वती ॥ ८४ ॥

ब्रवीषि यत्तद्रुचितं च मह्यं
न साध्वसोऽस्त्वेष सुरारिनाथः ।
चतुर्भुजः त्वद्भृतकाग्रयायी
सदावयोस्तुल्यदृगिन्दुमौले! ॥ ८५ ॥

दर्पशान्त्यै कराश्छिन्ना दर्पकारेऽसुरेशितुः ।
प्रह्लादाय मया दत्तो वर एव रुणद्धि माम् ॥ ८६ ॥

एवं खलु देवकीनन्दनसुन्दरवदनेन्दुबिम्बस्यन्दिमधुरभारती-पीयूषसन्दोहसमास्वादनानुभावापहृतहृदयज्वरे हालाहलालङ्कृतकण्ठे नीलकण्ठे, बाणोऽपि निजभुजमण्डलखण्डनसमयपरित्यक्तपरतराहङ्कार-

१. कृष्णाननेन्दोः. ब.

तया हृदयनिहितहृषीकेशभक्तिभारतया च निर्मलीभूतान्तःकरणः डम्भसम्भारसम्भरणधुरीणक्रूरमण्डलमलविगमेन मानसनिरूढमाधवभक्तिभारपरमानन्दनिरर्गलविगळदतिशीताश्रुसन्दोहसुधापूरपरिषेकविगलशरीरमिलितबहळरुधिरसंप्लवतया च विशुद्धदेहः अर्णोजनाभपदारविन्दवन्दनपूर्वकं जीवन्मुक्तो बभूव ॥

ततश्च, सत्वरमेव सात्वतपुङ्गवनिदेशान्निजपुरान्तरगतः घोरतरनागपाशविरहशृङ्खलानिबद्धदेहौ मिथस्समर्पितजीवितौ अत्यूष्मळकज्जलमलिननयनसलिलराहुरसनापरिग्रस्तशोभवदनेन्दुबिम्बौ दुस्सहतरविरहशोकप्रमथाभिभूतोद्भ्रान्तस्वान्तौ दयिताध्यानपरायणौ अनाश्रयावप्यनन्ताश्रयौ उषानिरु , सस्नेहशोकहर्षमादाय अतिसुगन्धिमृगमदघनसारादिवासनावासिततैलहिमसलिलादिभिः स्नापयित्वा, अनर्घतरातिमृदुवासोभिरितरजनसुदुर्लभमञ्जुळपरिमळपरिमिळिताङ्गरागैः महाहमहारजतविरचितनूत्नतररत्नखचिताङ्गदकङ्कणकुण्डलाङ्गुलीयकाञ्चीमञ्जीराद्यलङ्कारनिकरैरतिमनोहरमधुसमास्वादनलोलुपलोलम्बनिकुरुम्बनिरन्तरितस्ववासनाधिवासितनिखिलदिगन्तराळानल्पकल्पतरुकुसुमकलितमालाभिश्च भूषितशरीरौ, प्राज्यतराज्यादिमहितभोजनादितृप्तौ, सकुतुकसमर्पितकर्पूरवीटिकाचर्वणादिनिखिलसुखोपभोगोपलम्भसुनिर्वृतौ, जामातृदुहितृवात्सल्यविरचितोत्सङ्गारोपणपरिष्वङ्गोत्तमाङ्गोपघ्राणादिसम्मानसम्मानितौ, चिराभिलषितमिथोदर्शनलाभसन्तोषप्रेमलज्जादिलळितकटाक्षपातकृतालिङ्गनौ तपनीयमयतपनशततेजोनिराकरणसमर्थरथारोपितौ, अतिविमलखड्गकुन्तादिवरायुधपाणिपादातरथव्रजमात्तहास्तिकाश्वीयसम्पूर्णाक्षौहिणीनिस्सरणकोलाहलसञ्चलितसकलभूमण्डलौ, उभयतो राजवीथीमलङ्कृतातितुङ्गसुधाधवळितमणिमयहर्म्यसौधतलवातायननिकरविसृमरपुरसुन्दरीवृन्दसुन्दरापाङ्गकन्दळीसन्दोहायतेन्दीवरमालालङ्कृतमनोहर

---

१. पादारविन्द. ख. २. निकरनिरन्तरित. घ. ३. भोजनामृततृप्तौ. घ. ङ.

शरीरौ, पौरजानपदेदवादिसहरचितदिव्यकुसुमवर्षहृदयङ्गमदेहौ ऊर्जिततर-स्वार्जितदितिजराज्येन्दिरानुगुणविभवेन्दिरानायकप्रवृद्धभक्तिभारशतगु-णितोपायनसाधनद्रविणसमूहवहदनुजगणपरिवृतौ, भाग्यसङ्घटितमिथस्स-मागमजायारमणौ तौ भक्तजनवशंवदस्य करुणासागरस्य विशेषतः परि-पालितनिजपितृपितामहस्य भूभारसंहरणाय यदुकुलावतीर्णस्य भगवतः श्रीनारायणस्य सनकसनन्दसनातनसनत्कुमारनारदशुकादिमहाभागमहा-योगिहृदयनिहितचरणारविन्दे निजबलजनधनराष्ट्रपुरजायानन्दनात्मादि-सकलसमर्पणपूर्वकमुपदीकृत्य सप्रदक्षिणं साष्टाङ्गपातं प्रणम्य साञ्जलिपुटः तत्करुणाभिलाषी सविनयमुपतस्थौ ॥ अनन्तरं च,

दत्त्वाभयं बलिसुताय तदीयकन्यां
दत्तां मुदा परिगृहय्य सहानिरुद्धाम् ।
कृष्णो गिरीशमभिमन्त्र्य युतो बलेन
सार्धं च बाणनयनैः स्वपुरीं प्रतस्थे ॥ ८७ ॥

भक्तोत्तमं तमकुतोभयमेव कुर्वन्
हृष्टाशयः सकलभूतगणैरुपेतः ।
गन्तुं स्वकीयरजताचलमिन्दुचूडो
बद्धाञ्जलिं तमनुगृह्य तिरोहितोऽभूत् ॥ ८८ ॥

निवर्त्य नेत्रं तनयानिरुद्ध-
त्रिविक्रमेशानुगमध्वखेदात् ।
समुद्गतखेदमिवाश्रुपूर्णं
मुदा स बाणः स्वपुरीं विवेश ॥ ८९ ॥

अनुकलमथ देवौ चन्द्रचूडाम्बुजाक्षा-
वनुपमगुरुभक्त्या पूजयन् शुद्धचित्तः ।
दितिसुतकुलचूडारत्नतां प्राप्य बाणः
ससुखमयमवात्सीदात्मविद्धन्यजन्मा ॥ ९० ॥

पुत्रात्मजोषासहितो मुरारि-
वृत्रारिमुख्यामरवन्द्यमानः ।
सत्रा गभीराखिलवाहिनीभी
रत्नाकरस्थां स्वपुरीं विवेश ॥ ९१ ॥

प्रविश्य च, प्रियासहितप्रद्युम्नसुतप्रत्यागमनश्रवणप्रवृद्धप्रहर्षप्रकर्ष-ससंभ्रमविरचितविविधमण्डनसमागतपौरजनोत्फुल्लवदनारविन्दनिष्यन्दि-जयजयघोषमधुरमकरन्दसन्दोहसहसमापतितविकचविलोचनचञ्चरीक-सञ्चयसम्पूर्णमार्गवर्तीं द्वारवतीं चिरादर्शनशोककर्शितमातृमुखनिखिल-गुरुजनपादवन्दनादिनिखिलकृत्य[1]मुदितहृदये स्वविरहशोकातुरमानसानां मानसानन्ददे चानिरुद्धे सुन्दरीकुलमन्दाक्षदानदक्षवृन्दारकारिनन्दिनी-विलोकनमुदितासु परमपुरुषमहिषीषु नारायणोऽपि नारदपाराशर्यादि-महर्षिभिस्सह सकललोकसाक्ष्यपि आशुशुक्षणिसाक्षीकरणपूर्वमेकव भूदेव-समुपदिष्टमार्गेण निर्वृत्तसमस्तपवित्रकर्मणा मन्मथात्मजेन मुकुलित-कोमळारुणसरोजशोभं अतिमनोहररत्नखचिताङ्गुलीयतल्लजोल्लसितं दितिजराजनन्दिनीकरारविन्दं ग्राहयामास ॥

इतः परं मन्मथसङ्गराय
शराः कराङ्गुल्य इमा उषायाः ।
इतीव मत्वाम्बुजकोमळं तत्-
करं सुहृष्टो जगृहेऽनिरुद्धः ॥ ९२ ॥

क्षितिभरममुमेवं संहरन् शिष्टदुःखं
सकलमपि दयालुर्द्वारवत्यां मुकुन्दः ।
नृगनरपतिमोक्षव्याजतो वृष्णिवर्या-
नुदितविमलबोधान् सञ्चिकीर्षुर्न्यवात्सीत् ॥ ९३ ॥

॥ इति उषापरिणयप्रबन्धः समाप्तः ॥



---

१. कृत्यकरणमुदित. ख. ग. ङ.

वंशे वाद्ये"

इति **केशवः** । वैरिणां शत्रूणां पूरं समूहं **तरतः** लङ्घयतः । निगृह्णानस्येति यावत् । मे मम, **पशवः** पशुवद् विशसनीया वध्या **भवत** । यथा असुराणां वध्यत्वं भवति तथा युष्माकमपि वध्यत्वं भवत्वित्यर्थः । अत्र पूरशब्दस्य शब्दशक्त्या प्रतीयमानं मुख्यार्थभूतं जलप्रवाहमाश्रित्य तरत इत्युक्तम् । अयं भगवतोऽभिप्रायः--यतः स्वयं सकललोकानां साधारण्येन मङ्गलावहत्वात् शिवो भवति, देवप्रियार्थम् असुराणां वध्यत्वे स्वस्यासाधारण्येन माङ्गलिकत्वभङ्गो जायेत ततो देवानामपि पशुत्वमुद्भाव्यैवासुरा हन्तव्याः । ततश्चोभयेषां पशुत्वनिवर्तनार्थ्य मे प्रवृत्तिः न पक्षपातदोषमावहति । तत्राधर्मे प्रवर्तमानानामसुराणां पशुत्वं वधेन निवर्तनीयम् । धर्मे प्रवर्तमानानां देवानां पशुत्वं तु पाशुपतव्रतचरणेन इति इयानेव भेदः । तस्माद्देवा अपि पशवो भवन्त्विति । तदुक्तं कर्णपर्वणि—

"समा भवन्ति मे सर्वे दानवाश्चामराश्च ते
शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे सुराः ॥

किन्त्वधर्मेण वर्तन्ते यस्मात्ते सुरशत्रवः ।
तस्माद्वध्या मया ह्यद्य युष्माकं च हितेच्छया ॥

शरणं वः प्रपन्नानां धर्मेण च जिगीषताम् ।
साह्यं रणे करिष्यामि"

इति । पुनरपि तत्रैवोक्तम् —

"पशुत्वं चैव मे सर्वे लोकाः कल्पन्तु पीडिताः ।
पशूनामाधिपत्यं मे भवत्वद्य दिवौकसः ॥

एवं न पापं प्राप्स्यामि पशून् हत्वा सुरद्विषः ।"

इति । **श्रीलैः** संहितायामप्युक्तम्—

"अथाह भगवान् रुद्रो देवानालोक्य शङ्करः ।
पशूनामाधिपत्यं मे देवा हन्तु दितेस्सुतान् ॥

पृथक् पशुत्वं लोकानां तथा ह्येषां सुरोत्तमाः ।
कल्प्यैव दैत्या वध्यास्ते नान्यथा देवसत्तमाः ॥

इति श्रुत्वा वचस्सर्वे देवदेवस्य धीमतः ।
विषादमगमन् देवाः पशुत्वं प्रति शङ्किताः ॥

तेषां भावं ततो ज्ञात्वा देवान् तानिदमब्रवीत् ।
मा वोऽस्तु पशुभावेऽस्मिन् भयं विबुधसत्तमाः ॥

श्रूयतां पशुभावस्य विमोक्षः क्रियतां च सः ।
यो वै पाशुपतं दिव्यं चरिष्यति स मोक्ष्यते ॥

पशुत्वाद्

इति ॥ २३ ॥

अथ शिवः पशुत्वाद् भीतान् सुरानवलोक्य तन्निवृत्त्युपायमुपदिशति—

**अपि देवाः! गच्छत मा भियं मम श्रूयताञ्च वागच्छतमा ।**
**न तु भविता पशुभावस्तेषां य मद्व्रतप्रतापशुभा वः ॥ २४ ॥**

**अपीति** । हे **देवाः! भियं** पशुत्वनिबन्धनां भीतिं, **मा गच्छत** न प्राप्नुतापि । अपिस्समुच्चये । कथं पशुत्वाद् भीतिर्न भवेदित्यत्राह— **ममेति** । **मम वाग्** वचनं, **श्रूयताम्** । कीदृशी वाक् । **अच्छतमा** निर्दोषा । प्रामाणिकीत्यर्थः । वाचमेवाह — **न त्विति** । **तेषां वो** युष्माकं, **पशुभावो न भविता** नैव भविष्यति । अवश्यं नो भविष्यतीत्यर्थः । केषा-मित्यत्राह —**य** इति । **ये यूयं मद्व्रतप्रतापशुभाः** मम पशुपतेः यद् व्रतं पाशुपताख्यं तस्य प्रतापेन सामर्थ्येन शुभाः शुद्धान्तःकरणाः । पाशुपतव्रतचर्यया युष्माकं पशुत्वनिवृत्तिर्भविष्यतीत्यर्थः ॥ २४ ॥

ततो देवैः किं प्रतिपन्नमित्यत्राह —

**इत्थं वादे वचसस्तदन्वमोदत जनो जवादेव च सः ।**
**काष्ठा पाशव्यापत् त्रिदशांश्च जगच्च दत्तपाशव्यापत् ॥ २५ ॥**

इत्थमिति । (इत्थम्) अनेन प्रकारेण. वचसो भगवद्वाक्यस्य वादे उक्तौ सति, यः पशुत्वाद् भीत आसीत्, स जनो देवजनः, जवाद् जवमाश्रित्य वेगेनैव. तत् पशुत्वम् अन्वमोदत तर्हि पशवो भविष्यामः पात्यतामस्मासु पशुत्वमित्यनुमतिं चक्रे । ततः किमासीदित्यत्राह काष्ठेति । पाशव्या पशुसंबन्धिनी, काष्ठा परमावस्था, त्रिदशांश्चापत् प्राप्तवती । चशब्दो वक्ष्यमाणजगत्समुच्चयार्थः । ततो देवाः पशवोऽभवन्नित्यर्थः ।

"काष्ठा स्त्री कालभेदे स्यादष्टादशनिमेषके ।
स्थित्याख्यमर्यादायां च दिशि चाप्युपदिश्यपि ॥
दक्षिणोत्तरयोरन्यतरस्मिन्नयने रवेः ।
आदित्ये परमावस्थोत्कर्षयोराजिसंज्ञिनः ॥
समभूमिप्रदेशस्याप्यन्ते मूर्ध्नि तु वारिणि ।
क्लीं तु दारुणि"

इति केशवः । किञ्च न केवलं देवानाम्, अपि तु निखिलस्य जगतोऽपि पशुत्वमासीदित्याह जगदिति । जगच्च समुद्रार्णा निखिलो जनोऽपि. दत्तपाशव्यापत् पाश्यते बध्यतेऽनेनोपाधिभूतेनात्मा इति पाशः । पाशो माया । उक्तं च श्रीराघवानन्दाचार्यपादैः –

"पतिः पाशः पशुश्चेति त्रीणि तत्त्वानि तत्त्वतः ।
पतिः शिवः पशुर्जीवः पाशो मायैव केवलम् ॥"

इति । दत्ता भगवता वितीर्णा पाशेन हेतुना व्यापत् अस्वातन्त्र्यलक्षणा आपत्तिर्यस्य तत्तथा । भगवत्सङ्कल्पात् सर्वं जगदपि पशुतामगमदित्यर्थः ॥ २५ ॥

भगवतस्तदा तन्निमित्तकं नामान्तरमासीदित्याह —

**तस्य पुरवधाय यतः त्रिदशाः पशुभावमापुरवधाय यतः ।**
**प्रभुरजनि जनाम्नातः पशुपतिरिति विश्रुतेन निजनाम्नातः ॥ २६ ॥**

**तस्ये**ति । त्रिदशा देवाः, **अवधाया**स्माभिः पशुत्वेऽङ्गीकृत एव असुरा वध्या भवेयुरिति निश्चित्य, **पुरवधाय** पुरवासिनां निग्रहाय, **यतो** गच्छतः, **तस्य** शिवस्य, **पशुभावं** पशुत्वम**मापुः** प्राप्तवन्तः । **यतो** यस्माद्धेतोः, **अत** एतस्माद्धेतोः, **प्रभुः**शिवः, **पशुपतिरिति विश्रुतेन** प्रसिद्धेन, **निजनाम्ना** निजेन नित्येन वा आत्मीयेन वा नाम्ना संज्ञया, **जनाम्नातो** जनैराम्नातः उक्तः **अजनि** अभूत् । पशूनां पतित्वादस्य पशुपतिरिति यौगिकं नामाभूदित्यर्थः ।

"निजं तु त्रिः सनातने ।
आत्मीये च स्वभावे तु क्ली पुंसि त्वात्मनि स्मृतम् ।"

इति **केशवः** ॥ २६ ॥

अथोपात्तपशुत्वानां देवानां दशामाह —

**समजनि तापश्चात्ते पशुत्व उक्ते च भगवता पश्चात्ते ।**
**योऽतिमहानायामी तं नियमं विदधुरस्य हानायामी ॥ २७ ॥**

**समजनी**ति । **भगवता** शिवेन, **पशुत्व उक्ते च** यूयं पशवो भवत इत्याज्ञापिते च, **आत्ते च** देवैः स्वीकृते च सति । चशब्दौ वचनादानयोर्यौगपद्यं द्योतयतः । भगवदाज्ञासमकालमेव तेषां पशुत्वे जाते इत्यर्थः । **तापो** मनस्तापः, **समजनि** समभूत् । देवानामित्यर्थात् । अथ ते पशुत्वनिवर्तकं कर्माकुर्वन्नित्याह — **पश्चात्** पशुभावेन तापोत्पत्त्यनन्तरं, **ते** च पशुत्वं प्राप्ताः, **अमी** इमे देवाः, **अस्य** पशुत्वस्य, **हानाय** निवृत्तये, **तन्नियमं** व्रतं, **विदधुः** कृतवन्तः। नियमं विशिनष्टि—**य** इति । **यो** नियमः, **अतिमहान्** भक्तिश्रद्धाविहीनस्यापि अनुष्ठानमात्रेण परपुरुषार्थप्रदत्वाद् अत्युत्कृष्टः । तथा **य आयामी** आयामो दैर्घ्यं स चात्र कालगतो विवक्षितः, तद्वान् अतिदीर्घकालेन समापनीय इत्यर्थः । अतिमहत्त्वमायामित्वं च पाशुपतव्रतस्यैवास्ति । अतः पाशुपतं व्रतम् अनुष्ठितवन्त इत्युक्तं भवति । यद्यप्यस्य यमकपदेषु प्रक्रान्तस्य विभक्तिभेदस्य भङ्गो भवति तथापि वचनस्य भिन्नत्वादसौ नात्यन्तं दोषाय भवति । केचित् प्रक्रमभङ्गपरिजिहीर्षया आयामीतमिति पदच्छेदं कुर्वन्ति ।

आयामः प्राणायामः तद्वन्तो योगिनः तैरितं प्राप्तम् इति नियमविशेषणतया व्याचक्षते च । अत्रापि यच्छब्दस्य पूर्ववाक्यगतत्वात् तच्छब्दं प्रति यत् साकाङ्क्षत्वं तन्महान् दोष एव । तस्यापि सोढव्यत्वे अर्थस्याङ्गत्वं न भवति । अत्र विभक्तिभेदः प्रक्रमभङ्गो वा साकाङ्क्षत्वदोषो वा सोढव्य इति न जानीमः । तत्र सहृदया एव प्रमाणम् ॥ २७ ॥

अथ शिवः त्रिपुरवधायोद्युक्तवानित्याह --

**उद्यति नादे वाद्यश्रेणीनामथ महामना देवाद्यः ।**
**त्रिपुरहरो हतदैत्यप्रमदो रथमुख्यमारुरोह तदैत्य ॥ २८ ॥**

**उद्यतीति** । **अथ** रथादिसामग्रीसम्पादनानन्तरं, यस्मिन् काले देवाः व्रतं समाहितवन्तः **तदा** तस्मिन् काले, **देवाद्यः** शिवः, **त्रिपुरहरः** पुरत्रय-संहर्ता भविष्यन् । त्रिपुरं संहर्तुमित्यर्थः । **एत्य** स्वावासादागत्य, **रथमुख्यं** रथानां मध्ये मुख्यम् अवन्याद्यात्मकत्वात् प्रधान**मारुरोह** आरूढवान् । किं तत्रोपलक्षकमित्यत्राह -- **उद्यतीति** । **वाद्यश्रेणीनां** वाद्यानां भेरीपणवादीनां श्रेणीनां वर्गाणां मङ्गलार्थं दैवैर्वाद्यमानानां, **नादे** ध्वनौ, **उद्यति** उद्गच्छति सति । देवाद्यं विशिनष्टि -- **महामना** इति । महदुत्कृष्टं मनो यस्य स तथा । सङ्कल्पमात्रेणापि सकलार्थसाधनक्षम इत्यर्थः । **हतदैत्यप्रमदः** हतः विलयं नीतो दैत्यानां प्रमदो हर्षो येन स तथा । भगवतो रथारोहणसमय एव दैत्यानां हर्षो नष्ट इत्यर्थः ॥ २८ ॥

अथ भगवत उत्कर्षातिशयं प्रकटयन्नाह --

**अथ परमे धामनि ते रथस्थिते नभसोऽपि मेधामनिते ।**
**प्रविषेदुः सहसारं पेतुश्च हया विहाय दुःसहमारम् ॥ २९ ॥**

**अथेति** । **अथ** रथारोहणानन्तरमेव **परमे** सर्वावभासकत्वादुत्कृष्टे, (**धामनि**) तेजसि च परमेश्वरे, **रथस्थिते** स्यन्दनस्थिते सति, **ते** चतुर्वेदाः, **हयाः** अश्वाः, **सहसा** झटित्येव, **अरम्** अत्यर्थं **प्रविषेदुः** भगवतो गौरवं सोढुमशक्नुवाना विषादं

प्रापुः । **दुस्सहसारं** दुस्सहं परैः सोढुमशक्यं सारं बलं **विहाय** त्यक्त्वा, **पेतुश्च** पतितवन्तः । धाम विशिनष्टि **वेधस** इति । **वेधसोऽपि** जगत् स्रष्टुः ब्रह्मणोऽपि, **मेधां** बुद्धिम् **अनितेऽप्राप्ते** । ब्रह्मणोऽप्यपरिच्छेद्यस्वरूप इत्यर्थः ॥ २९ ॥

अथ सारथेर्व्यापारमाह —

**स्वकरेऽभीशून् न्यस्य प्रोत्थाप्य हयान् हरस्य भीशून्यस्य ।**
**विद्वान् वेधा रयतः समचोदयदुद्धूतिं जवे धारयतः ॥ ३० ॥**

**स्वकर** इति । **वेधा** ब्रह्मा, **रयते** वेगेन, **स्वकरे** निजहस्ते, **अभीशून्** प्रग्रहान्, **न्यस्य** स्थापयित्वा **हरस्य हयान**श्वान्, **प्रोत्थाप्य** तोत्रप्रहारेणोत्थितान् कृत्वा, **समचोदयत्** प्रेरितवान् । वेधसं विशिनष्टि — **विद्वानि**ति । अश्वहृदयादिविद्याविदित्यर्थः । हरं विशिनष्टि — **भीशून्यस्ये**ति । भिया भीत्या शून्यस्याश्वेषु पतितेषु साधनवैकल्याद् या भीतिरुत्पद्येत तया वियुक्तस्येत्यर्थः । अनेन सामग्रीविरहेऽपि भगवदुद्योगस्याप्रतिहतप्रसरता प्रत्याय्यते । हयान् विशिनष्टि -- **उद्धूतिमि**ति । तात्कालिकं विशेषणमेतत् । जवे वेगे, **उद्धूतिम्** ऊष्मळतां **धारयतः** बिभ्राणान् ॥ ३० ॥

अथ द्वाभ्यां श्लोकाभ्यां कर्तव्याकरणात् प्रयाणस्यान्तरा विघात अभूदित्याह --

**मुक्त्वा शम्भावयति स्वपूजनं यो जगत्सु शं भावयति ।**
**विघ्नः कोपमतनुत श्रान्ता देवास्ततोऽन्तकोपमतनुतः ॥ ३१ ॥**

**मुक्त्वे**ति । **विघ्नो** गणपतिः, **स्वपूजनं** स्वस्यात्मनः पूजनम् अर्चां **मुक्त्वा** विहाय, **शम्भौ** शिवेऽ**यति** गच्छति सति, **कोपमतनुत** अकरोत् । विघ्नं विशिनष्टि — **य** इति । **यो** विघ्नः **जगत्सु शं** प्रारब्धतात्पर्यपरिसमाप्त्या सुखं **भावयति** उत्पादयति । पूजित इति शेषः । अनेनापूजितो दुःखमपि भाव-

यति इति सेत्स्यति । तन इति रूढ्लोपे पञ्चम्यन्तात्तासिल् । **अन्तकोपमतनुतः** क्रोधाग्निना जाज्वल्यमानत्वादन्तकोपमा कालतुल्या तनुः शरीरं यस्य स तथा । अतिक्रुद्धादित्यर्थः । तथाविधाद्धेतोः विघ्नात् विघ्नं वीक्ष्य, **देवाः श्रान्ताः** खिन्नाः । अभूवन्निति शेषः । अतिक्रुद्धाविघ्ननिरीक्षणादेव विमनसो बभूवुरित्यर्थः ॥ ३१ ॥

**पदमपि मदनादरतः शक्यं गन्तुन्न चेति मदनादरतः ।**
**सोऽभिमसारामीषां पुरो रथस्य च रुरोध सारामीषाम् ॥ ३२ ॥**

**पदमिति । मदनादरतः** ममानादरः पूजाया अकरणं तस्माद्धेतोः, **पदमपि** एकं पदविन्यासमपि. **गन्तुं** यानं कर्तुमिति यावत् । **नच नैव शक्यमित्युक्त्वा स** विघ्नोऽ**मीषां** देवानां, पुरतोऽभिससाराभिमुखं गतवान् **रथस्य** मार्गं स्थिराम, **ईषां** लाङ्गलदण्डं, **रुरोध च** गतिनिवारणार्थम् । **ईषां** कराभ्यां गृहीतवानित्यर्थः । विघ्नं विशिनष्टि—**मदेति । मदो** हसता **नादः** शब्दायमानता तयो **रतः** सक्तः । गर्वित इत्यर्थः ॥ ३२ ॥

अथ देवा विघ्नप्रसादनाय प्रवृत्तवन्त इत्याह—

**आज्ञामीशाननतः प्राप्य तदर्थं जनोऽयमीशाननतः ।**
**सम्भृतिमकरोदिक्षुप्रभृतिद्रव्यस्य सम्भ्रमकरो दिक्षु ॥ ३३ ॥**

**आज्ञामिति । अयं** खेदं प्राप्तो, **जनो** देवजनः, **तदर्थं** विघ्नपूजार्थम्, **ईशाननतः** ईश्वरस्याननात् मुखाद्, **आज्ञाम्** इक्ष्वादिद्रव्यैः गणेशं प्रसादयध्वम् इति नियोगं, **प्राप्य इक्षुप्रभृतिद्रव्यस्य** इक्षुकदळीकेरफलापूपादिद्रव्यस्य, **संभृतिं** सम्भरणमिति यावत् । आनयनम**करोत्** कृतवान् । जनं विशिनष्टि—**संभ्रमेति । दिक्षु** सर्वास्वाशासु, **सम्भ्रमकरः** इक्ष्वादिद्रव्याहरणाय नानादिक्षु पर्यटनशीलः, तथा **ईशाननतः** ईशाने शिवे नतः प्रह्वः । **तदाज्ञानुष्ठाने** विहितादर इत्यर्थः ॥ ३३ ॥

अथ द्वाभ्यां श्लोकाभ्यां गणपतिं प्रसादयामासुरित्याह —

**जय जय भो गजवदन! श्रेयः कुरु भक्तवर्गभोगजवद नः ।**
**उन्नतदन्तेशानप्रिय! भक्ष्यं दयिततममिदन्तेऽशान ॥ ३४ ॥**

**जयेति । भो गजवदन!** हे करिमुख! हे **भक्तवर्गभोगजवद!** भक्तवर्गस्य भोगे फलानुभवे यो जवः शीघ्रता तं ददातीति तस्य सम्बोधनं तथा। भक्तानां झटित्येव फलदेत्यर्थः । **जय जय** सर्वोत्कृष्टतया वर्तस्व । भक्त्यतिशयाद् द्विरुक्तिः । **नः** अस्माकं **श्रेयः** कुशलं, **कुरु** सम्पादयस्व । हे **उन्नतदन्त!** । दन्तुरत्वं हि गजानां प्रशस्तिहेतुः । हे **ईशानप्रिय!** ईशानस्य शिवस्य प्रिय! स्वपुत्रत्वात् प्रेमास्पन्द! **ते** तव, **दयिततमम्** अत्यन्तमिष्टं **भक्ष्यम्** अस्मदाहृतमिक्ष्वादि द्रव्य**मिदं** कर्तृ। पुरस्तिष्ठतीति शेषः। **अशान** यथेष्टं भक्षय इति पृथग्वाक्यम् ॥ ३४ ॥

**जगतां मोदकर! सदा तुभ्यन्नम इत्यपूपमोदकरसद! ।**
**जनता विननामेयं विघ्नेशं निपतिता भुवि ननामेयम् ॥ ३५ ॥**

**जगतामिति । सदा** सर्वस्मिन् काले, **जगतां** जगद्वासिनां, **मोदकर** हर्षोत्पादनशील! **तुभ्यं नमः** नमस्क्रिया अस्तु **इत्येवमुक्त्वा इयं जनता** देवजनसमूहः, **विघ्नेशं** गणपतिं, **नन विननाम** प्रणतवती । द्वयोर्नञोः प्रकृतार्थावधारकत्वाद् ननामैवेत्यर्थः । कीदृशः— **अपूपमोदकरसद!** अपूपो मोदकश्च पिष्टकृतो भक्ष्यविशेषः तयोर्यो रसः पञ्चभूतानां सूक्ष्मांशः तं ददातीति तथा । देवोपहारे हि निवेद्येषु रसांशमेव देवो गृह्णाति । **यथाहुः** —

"मलधातुरसाभिधानमेतत् पृथिवीवह्निजलात्मकं जलाघम् ।
उपहारविधानमत्र देवे रस एवाञ्चति पञ्चभूतसूक्ष्मः ॥"

इति । यद्वा अपूपमोदकयोः रसो माधुर्यं तद्ददातीति तथा । **भुवि निपतिता भूमौ दण्डवत्** पतिता । साष्टाङ्गपातं नमश्चक्र इत्यर्थः । एतच्च भक्त्यतिशयं

गमयति । विघ्नेशं विशिनष्टि — **अमेयमिति**। अमेयमपरिच्छेद्यम् ॥ ३५ ॥

विघ्नेशः देवैरर्पितं भक्ष्यजातं पर्यग्रहीदित्याह —

**सोऽपि बली लाजालीरपूपपृथुकैः सहैव लीलाजाली ।**
**अकुरुत कुक्षौ द्राक्ता या न कुपाकान्विता न कुक्षौद्राक्ताः ॥ ३६ ॥**

**सोऽपीति** । **सोऽपि** विघ्नेशोऽपि, **अपूपपृथुकैः सहैव** अपूपः पिष्टकृतो भक्ष्यविशेषः पृथुकश्चिपिटाख्यो भक्ष्यविशेषः । 'पृथुकौ चिपिटार्भकौ' इति **यादवः** । अपूपैः पृथुकैश्च सार्धमेव, **ता लाजालीः** भ्रष्टाः व्रीहयो लाजाः तेषामालीः समूहान्, **द्राग्** झटिति, **कुक्षौ** उदरे, **अकुरुत** । अपूपादिकमभ्यवहृतवानित्यर्थः । विघ्नेशं विशिनष्टि— **बलीति** । **बली** बलवान् । समर्पितपदार्थसार्थाभ्यवहारे शक्त इत्यर्थः । तथा **लीलाजाली** लीलानां बुभुक्षासूचकानां चेष्टानां जालं समूहः तस्यास्तीति तथा । लाजालीर्विशिनष्टि— **या इति** । **या** लाजालयः, **कुपाकान्विताः** कुत्सितेन पाकेनान्विताः युक्ताः **न** भवन्ति । पाकस्य कुत्सितत्वमपक्वत्वादतिपक्वत्वाच्च भवति । याः **कुक्षौद्राक्ताः** कुत्सितेन क्षौद्रेण माक्षिकेणाक्ताः सिक्ताश्च न भवन्ति । सुपाकान्विताः सुक्षौद्राक्ताश्चेत्यर्थः ॥ ३६ ॥

विघ्नेशो देवकार्यं प्रत्यानुकूल्य(त्व ?)मगादित्याह —

**निघ्नन् सोऽमरविघ्नं विघ्नो यद्धाम दीप्तसोमरविघ्नम् ।**
**स्वपितरमरिपुं जनयन्नचलत् पुरतो निहन्तुमरिपुञ्जनयम् ॥ ९७ ॥**

**निघ्नन्निति** । **सः** अतितेजस्वी, **विघ्नः**, **पुरतः** भगवद्रथस्य पुरोभागे, **अचलत्** अगच्छत् । किमर्थमचलदित्यत्राह — **निहन्तुमिति** । **अरिपुञ्जनयम्** अरिपुञ्जस्य शत्रुवर्गस्य यो नयः स्वपरपक्षानुग्रहनिग्रहाधायिव्यापारलक्षणा नीतिः तं, **निहन्तुम्** । असुरान् निग्राहयितुमित्यर्थः । विघ्नं विशिनष्टि— **निघ्नन्निति** । **अमरविघ्नम्** अमराणां देवानां यो विघ्नः असुरवधं प्रति तं, **निघ्नन्** विनाशयन्, अत एव **स्वपितरं** शिवम्, **अरिपुं** अविद्यमानशत्रुं, **जनयन्** कुर्वन्, **यद्धाम** यस्य

विघ्नस्य धाम चक्षुरशक्तिहरत्वलक्षणं तेजः, **दीप्तसोमरविघ्नं** दीप्तौ मेघाद्या-वरणाभावात् प्रकाशमानौ सोमरवी चन्द्रादित्यौ हन्ति स्वस्याधिक्याद् निष्प्र(भू? भौ) करोतीति तथा। अनेनास्य प्रसादातिशयो द्योत्यये ॥ ३७ ॥

अथ तैः प्रस्तुतकार्यनिर्वाहायोपक्रान्तमित्याह --

**चलति ससत्त्वरवेऽधःकृतजलधौ विबुधसदसि सत्वरवेधः।**
**यानं बद्धरवाहिप्रकरप्रग्रहमथाद्रवद्धरवाहि ॥ ३८ ॥**

**चलतीति।** **अथ** गणेशपूजानन्तरं, **विबुधसदसि** देवसमूहे, **चलति** पुरो गच्छति, **हरवाहि** शिववाहकं, **यानं** रथम्, **आद्रवत्** वेगेनागच्छत्। विबुध-सदो विशिनष्टि—**ससत्त्वरव** इति। सत्त्वं बलं पराक्रमो वा व्यवसायो वा।

"**सत्त्वं** स्वभावे सत्तायां द्रव्येऽन्तःकरणे बले।
पराक्रमे साङ्ख्यगुणे व्यवसायात्मभावयोः।
माहात्म्ये पौरुषे त्वस्त्री पिशाचादौ च जन्तुषु ॥
प्राणे च"

इति **केशवः**। रवः सिंहनादः ताभ्यां सह वर्तमाने, **अधःकृतजलधौ** अमेयत्वाद्धिक्कृतसमुद्रे। समुद्रतुल्य इत्यर्थः। अत्र ससत्त्वरवत्वादपि समुद्रतुल्यत्वं विवक्षितम्। समुद्रोऽपि ससत्त्वरवो भवति। तत्र सत्त्वानि जन्तवः। यानं विशिनष्टि—**सत्वरेति**। सत्वरोऽश्वनियमने त्वरासहितो वेधा ब्रह्मा यस्मिन् तत्तथा। **बद्धरवाहिप्रकरप्रग्रहं** बद्धरवाणाम् अश्ववल्गनवशात् खणखणायमानानाम् अहीनां कार्कोटकादिमहानागानां प्रकरः समूह एव प्रग्रहा रश्मयो यस्मिन् तत्तथा। अनेन तद्धयानां महानागाः प्रग्रहतां प्राप्ता इत्यावेदितं भवति ॥ ३८ ॥

कां प्राप्यभूमिमुद्दिश्य यानमाद्रवद् इत्याह --

**योगो भावी तरसा यत्र पुरां यत्र सुरसभा वीतरसा।**
**निरतिशयानन्देशं तमागमत्तत्क्षणेन यानं देशम् ॥ ३९ ॥**

**योग** इति । **यानं** रथः, (**तत्क्षणेन**) येन क्षणेन गमनमुपक्रान्तं तेन क्षणेन अल्पीयसा कालेन, **तं देशम्**, **आगमद्** आगतवान् । यानं विशिनष्टि–**निरतिशयेति**। अतिशयान्निष्क्रान्तो निरतिशयः । 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' (पा० सू० वा०१-४-७९) इति समासः । आनन्दस्य निरतिशयत्व दुःखासंस्पृष्टत्वाद् नित्यत्वाच्च । निरतिशयश्चासावानन्दश्चेति विशेषणसमासः । **लोकोत्तरसुखस्वरूपः ईशः** परमेश्वरो यस्मिन् तत्तथा । यद्वा निरतिशयः आनन्दः देवेषु प्रीतिर्यस्य इति विग्रहः । तं देशमित्युक्तम्, कोऽसौ देश इत्यत्राह – **योग** इति । **यत्र** यस्मिन् देशे, **पुरां** पुराणां, **तरसा** 'सुरसत्तम! नो निलया गत्या घटनामियुर्जितमनोनिलया' इत्युक्तलक्षणेन वेगेन, **योगः** समागमो, **भावी** भविष्यति । **यत्र** यस्मिन् देशे, **सुरसभा** देवसमूहः, **वीतरसा** वीतो रसो वीर्यं यस्याः सा तथा । यत्रासुरैर्देवाः पराजिता इत्यर्थः । यद्वा यत्र यासु पूर्षु सुरसभा वीतरसा तासां पुरां संयोग इति वा सम्बन्धः ॥ ३९ ॥

अथ विरिञ्चिवरात् पुराणां संयोगसमय एव हन्तव्यत्वात् संयोगस्य क्षणिकत्वाच्च प्रागेव धनुर्ग्रहणमारभ्याकर्षणपर्यन्तमुद्यमं कृत्वा पुरयोगं प्रतिपालयता मया भवितव्यमिति मन्यमानस्य भगवतः प्रवृत्तिं पञ्चभिः श्लोकैराह । तत्र प्रथमेन धनुर्ग्रहणं, द्वितीयेन गुणारोपणं, तृतीयेन शरसन्धानं, चतुर्थेनाकर्षणं, पञ्चमेन पुरयोगं प्रतीक्ष्यावस्थानं चोच्यते --

**अथ विभुरच्छशिखण्डश्रितदिव्यनदीजलस्खलच्छशिखण्डः ।**
**सुरवरहैमवतंसस्फुरितपदो धनुरुदास हैमवत सः ॥ ४० ॥**

अथेति । अथ पुराणां संयोगस्थानागमनानन्तरं, **स** पुरवधोद्युक्तो, **विभुः** शिवः, **हैमवतं** हिमवद्गिरिविकारं, **धनुरुदास** उद्धृतवान् । विभुं विशिनष्टि – **अच्छेति** । अच्छं निर्मलं शिखण्डमुपपत्तिबलाज्जटाभारं श्रितायाः प्राप्तायाः दिव्यनद्याः गुरुतरधनुरादानसमये भगवद्वपुषश्चाञ्चल्याच्चलितजलाया गङ्गायाः जले स्खलन् वीचिपरम्पराभिः इतस्ततो विक्षिप्यमाणः शशिखण्डश्चन्द्रकला यस्य स तथा । शिखण्डशब्दः शिखिपिञ्छशिखयोरेवाभिधायकः । तत्र शिखायां स्त्रीलिङ्ग एव ।

"शिखण्डस्तु पुमानयम् ।
मयूरपिञ्छे स्त्री तु स्यात् शिखायां हि शिखण्ड्यसौ" ।

इति **केशवः** । तस्मात् शिखण्डशब्देनात्र किमभिधीयत इति चिन्त्यम् । **सुरवरेति** । सुरवराणामिन्द्रादीनां हैमेन हेमविकारेण वतंसेन शेखरेण स्फुरितं शोभितं पदं पादो यस्य स तथा । जगदीश्वराणामीश्वरस्य तस्य किं नामाशक्यमिति भावः ॥ ४० ॥

**या हतसुरविप्रभया तया च मौर्व्या विभावसुरविप्रभया ।**
**चापमयोजयदमलं जगतां नाथः सुदुर्जयो जयदमलम् ॥ ४१ ॥**

येति । **जगतां नाथः** शिवः, **तया मौर्व्या** गुणेन, **चापमयोजयच्च** सङ्गमितवान् । मौर्वीं विशिनष्टि – **विभावस्विति** । विभावसुरभिः रविरादित्यः तयोः प्रभेव प्रभा दीप्तिर्यस्याः सा तथा तया । कालात्मकत्वेन दिव्यत्वाद् दुर्निरीक्षयेत्यर्थः । अत एव **या** मौर्वी, **हतसुरविप्रभया** हतं निरस्तं सुराणां विप्राणां च भयं यया सा तथा । साधनगुणे सति साध्यसिद्धिरवश्यंभाविनीति सुरादीनां भीतिर्मौर्व्यैव निरस्तवतीत्यर्थः । चापं विशिनष्टि – **अमलमिति** । लघुज्याक्षतत्वाद्यो ये चापदोषाः तद्रहितम् । अत एव **अलमत्यर्थं**, **जयदम्** अरिपरिभवदम् । शिवं विशिनष्टि – **(सु)दुर्जय** इति । सुतरां जेतुमशक्यः इति । कर्तुः करणस्य च गुणवत्त्वे का विचिकित्सेति भावः ॥ ४१ ॥

**यस्य मरुद्धाजगतः फलेऽनलेन्दू यदार्तिरुद्धा जगतः ।**
**सज्ये चापे तदयं समधित बाणाख्यधाम चापेतदयम् ॥ ४२ ॥**

**यस्येति** । **अयं** शिवः, **सज्ये** आरोपितज्ये, **चापे तद् बाणाख्यधाम** बाणाख्यं बाण इत्याख्या संज्ञा यस्य तत्तथा । बाणरूपेण परिणतमित्यर्थः । बाणाख्यं यद् धाम विष्ण्वादिरूपं तेजः तद् **अपेतदयं** अपगता दया करुणा दैत्येषु यथा भवति तथा, **समधित च** समाहितवानपि । तदिति सामान्येन

निर्दिष्टं विशेषेऽवस्थापयितुमाह — **यस्येति** । **यस्य** बाणाख्यधाम्नः, **मरुद्वायुः**, **बाजगतः** वाजे पत्रे गतः । वाजत्वं गत इत्यर्थः । **फलेऽनलेन्दू** फले मुखे अनलेन्दू अग्नीषोमौ गतौ । अत्र बाजशब्देन समस्तोऽपि गतशब्दोऽर्थसामर्थ्यादनुषज्यते । सोऽर्थवशाद् द्विवचनान्तश्च भवति । पूर्वं विष्णोरेव शररूपत्वमुक्तम् । तत्र यदनुक्तं देवतान्तरस्य शरावयवरूपत्वं तदिदानीमावेदितं भवति । **यद्** बाणाख्यधाम **जगतः आर्तिरुद् वा** आर्तिं पीडां रुणद्धीति तथा, विष्ण्वादिरूपत्वाद् । वाशब्दः समुच्चये ।

ननु(बाल ? वाज) फलवत्तायोग्यत्वं बाणस्यैव न तु धाम्नः । अत्र बाणस्य धाम्न एव धनुषि सन्धानमुक्तं न तु बाणस्य । धनुषि सन्धानमपि बाणस्यैवोपपद्यते न तु धाम्नः । तत् कथमेवमुक्तम् । उच्यते — अत्र न केवलस्य धाम्नो धनुषि संहितत्वम् । (वाजः किमर्थं चोक्तम् ?) । अपि तु बाणाख्यतया विशिष्टस्यैव । विशिष्टस्य तु सर्वमेतदुपपन्नमेव ॥ ४२ ॥

**ज्वलदनलोपमहस्तस्थिरकृष्टरणद्गुणेन रोपमहस्तः ।**
**तेन महारिपुपूरे रुष्यति चापं हरेण हारि पुपूरे ॥ ४३ ॥**

ज्वलदिति । **महारि(पु)पूरे** महति वीर्यशौर्यादिनोत्कृष्टे रि(पु)पूरे शत्रुसमूहे, **रुष्यति** नारदमुखात् स्ववधोद्यमश्रवणात् क्रुध्यति सति, **तेन** शरं संहितवता, **हरेण चापं पुपूरे** पूरितम् । आकर्णमाकृष्टमित्यर्थः । हरं विशिनष्टि — **ज्वलदिति** । ज्वलदनलोपमेन ज्वलता दीप्यमानेनानलेनाग्निना उपमां सादृश्यं यस्य स तथा । शुद्धसत्त्वमयत्वादतितेजस्वितया च प्रकाशमानेनेत्यर्थः । तेन हस्तेन स्थिरं दृढं यथा भवति तथा कृष्ट आकृष्टः अत एव रणन् शब्दायमानो गुणो ज्या येन स तथा । चापं विशिनष्टि — रोपेति । रोपः शरः । *'अस्त्री रोप इषुर्द्वयोः' **इत्यमरः** । तस्य मह(सा ? स्तः) तेजसा, **हारि** मनोहरम् ॥ ४३ ॥

**सुचिरमिहासावस्थान्नाथः कुर्वन् सुरान् सहासावस्थान् ।**
**धृतधनुरा पूर्योगात् ततः स कालो द्विषद्भिरापूर्योऽगात् ॥ ४४ ॥**

---

* 'पत्री रोप' इति मुद्रितपाठः.

**सुचिरमिति** । **असौ** आकृष्टचापो, **नाथः** स्वामी शिवः, **आ पूर्योगात्** पुरत्रयसंयोगावधि, **धृतधनुः** आकृष्टशरासनस्सन्, **सुचिरं** बहुतिथं कालम्, **इह** पुरत्रयसंयोग(स्थापने अतः ? स्थाने अस्थात्) पुरत्रयसंयोगं प्रतीक्षमाणः स्थितवान् । नाथं विशिनष्टि — **कुर्वन्निति** । **सुरान् सहासावस्थान् कुर्वन्** सहासा हास-संयुक्ता अवस्था अवस्थानं येषां ते तथा । हर्षयुक्तान् कुर्वन्नित्यर्थः । प्रतिपाल्य-मानकालविशेषो वर्तमानतामगमदित्याह -- **तत** इति । **ततो** भगवत्स्थानानन्तरं, **द्विषद्भिः** शत्रुभिः, **आपूर्यः** ब्रह्मसकाशाद्वरत्वेन प्रार्थितया स्वैर्नियमितया सङ्ख्यया पूरणीयः **स कालः** अब्ददशशतावध्यन्त इत्युक्तलक्षणः **समयो-ऽगात्** आगतवान् ॥ ४४ ॥

अथ शरं मुमुक्षोर्भगवतः शरव्यं पुरस्थितमभूदित्याह —

**तदनु कृताशावलयस्थितयः सहसा जितामृताशावलयः ।**
**सङ्गतिमापुर्योद्धा यत्रायं तत्र समहिमा पुर्योऽद्धा ॥ ४५ ॥**

**तदन्विति** । **तदनु** संयोगप्राप्त्यनन्तरं, **पुर्यः** पुराणि, **सहसा** झटिति, **अद्धा** प्रत्यक्षतः, **तत्र सङ्गतिं** संयोगं (प्रा ? आ)**पुः** प्राप्तवत्यः । तत्रेत्युक्तं, कुत्रेत्यत्राह -- **योद्धेति** । **यत्र** यस्मिन् देशे, **योद्धा** युद्धोद्युक्तोऽयं शिवः । अतिष्ठ-दिति शेषः । शिवं विशिनष्टि -- **समहिमेति** । समहिमा महिम्ना महत्त्वेन सहितः । भगवन्महत्त्वेनैवामी भस्मीभविष्यन्ति रथाद्युपकरणजातं तु वृथैवो-दितमिति भावः । पुरीर्विशिनष्टि -- **कृतेति** । कृतः आशावलये दिङ्मण्डले स्थितिर्याभिस्तास्तथा । कामगमत्वात् सर्वदिक्षु कृतपर्यटना इत्यर्थः । तथा **जितामृताशावलयः** जिता अभिभूताः अमृताशानां देवानामावलिः समूहो याभिस्ताः तथा । कृतकृत्या इत्यर्थः ॥ ४५ ॥

भगवतः पुरत्रयमथनाय सम्पादितसाधनव्यतिरेकेण साधनान्तरमासीदिति वक्तुं पीठिकां प्रतिष्ठापयति —

**द्युगगनभूतलयानान्निमित्तभूतं समस्तभूतलयानाम् ।**
**स रुषमगच्छत्त्रिपुरस्थायि बलं प्रेक्ष्य नृतुरगच्छत्त्रि पुरः ॥ ४६ ॥**

**द्युगग**नेति । **स** शिवः, **पुरो**ऽग्रे, **त्रिपुरस्थायि** पुरत्रयस्थितिशीलं, **बलं** सैन्यं, **प्रेक्ष्य** प्रेक्षणाद्धेतोः, **रुषं** क्रोधम्, **अगच्छत्** प्राप्तवान् । बलं विशिनष्टि— **द्युगगनभूतलयानादि**ति । द्यौः स्वर्गः, गगनमाकाशं, भूतलं भूलोकः, एषु यानात् पर्यटनाद्धेतोः, **समग्रभूतलयानां** सर्वजन्तुनाशानां, **निमित्तभूतं** हेतुभूतम् । एतद् रोषे हेतुः । तथा **नृतुरगच्छत्रि** नराः पुरुषाः । पदातय इति यावत् । तुरगा अश्वाः, छत्रं श्वेतातपत्रम् । उपलक्षणमेतत् परिच्छदान्तरस्य । किञ्चिदप्यवयववैकल्यमप्राप्तमित्यर्थः ॥ ४६ ॥

अथ साधनान्तरोत्पत्तिमाह —

**अथ संरम्भान्विततस्तृतीयनयनाग्निरम्बरं भान् विततः ।**
**प्रविवेश तदा हरतः पुरमाप च तत्कणोऽरिशतदाहरतः ॥ ४७ ॥**

**अथे**ति । अथ रोषोत्पत्त्यनन्तरम् । यस्मिन् काले रोष उदपद्यत, **तदा** तस्मिन् काले, **संरम्भान्विततः** संरम्भः क्रोधः तेनान्वितात् युक्तात्, **हरतः** हरात्, **तृतीयनयनाग्निः** तृतीयनयने ललाटलोचने योऽग्निः, **सोऽम्बरं** आकाशं, **प्रविवेश** प्रविष्टवान् । कुपितस्य भगवतो नयनाग्निरुदगच्छादित्यर्थः । कीदृशः । **भान्** जाज्वल्यमानः, **विततः** विस्तृतः । चतुर्दशभुवनान्यपीन्धनीकर्तुं पर्याप्त इत्यर्थः । स च त्रिपुरसंहारायोपक्रान्तवानित्याह—**पुरमि**ति । **तत्कणः** तस्याग्नेः कणः लेशः स्फुलिङ्गः । एकत्वं विवक्षितम् । 'एकस्फुलिङ्गके लीयन्त' इति वक्ष्यमाणत्वात् । **पुरमाप** प्राप । पुरत्रयं तेन संस्पृष्टमभूदित्यर्थः । पुराणां त्रित्वेऽपि संयोगसमये एकीभावेन प्रतिभासमानत्वात् पुरमित्येकवचनान्ततया निर्दिष्टम् । कणं विशिनष्टि—**अरी**ति । अरीणां शतस्यानेकस्य दाहे भस्मीकरणे रतस्तत्परः ॥ ४७ ॥

स च भगवन्मनोरथं पूरितवानित्याह —

**तेनैव समस्तारि प्रादीपि च दत्तपरिभवसमस्तारि ।**
**शिखिना साकं पतता त्रयी पुरामस्फुटच्च सा कम्पतता ॥ ४८ ॥**

**तेनेति** । एवकारोऽन्ययोगव्यवच्छेदपरः । **तेन** पुरं प्राप्तेन, **शिखिना** अग्निनैव तु शरेण, **पुरां त्रयी दत्तपरिभवसमस्तारि** दत्तः परिभवो येषां तादृशाः समस्ता निखिला अरयो यथा भवन्ति तथा, **समस्तारि** सञ्छादिता । असुरैरनिवार्यप्रसरोऽग्निस्सर्वतो व्याप्तवानित्यर्थः । **प्रादीपि च** दहनज्वाला-मालाकुलाभूदित्यर्थः । शिखिनं विशिनष्टि – **साकमिति** । **साकं** सह, **पतता**, तिसृष्वपि पूर्षु युगपत् संसृजतेत्यर्थः । **सा** पुरत्रयी **अस्फुटच्च** दह्यमानसन्धि-बन्धा सती स्फुटितवती । कीदृशी । **कम्पतता** कम्पेन व्याप्ता । स्वस्थानच्युत-निखिलावयवेत्यर्थः ॥ ४८ ॥

नयनाग्निनैव पुरत्रये दह्यमाने पूर्वमेव शरे सङ्क्रान्तः कोपाग्निः सार्थक्रियाविषयः भवन् जगद् गोचरीकर्तुं प्राक्रमतेत्याह —

**शत्रुषु दाहं तेषु श्रयत्सु *रोषेण वै तदा हन्तेषुः ।**
**सगिरिवनोदधि कबलीकर्तुं जगदर्चिरातनोदधिकबली ॥ ४९ ॥**

**शत्रुष्विति** । **वै**शब्दोऽवधारणे । अत्र रोषशब्देन कारणे कार्यो-पचारात् रोषकार्यभूतो नयनाग्निः प्रतिपाद्यते । यस्मिन् काले पुरत्रयी दह्य-मानाभूत् **तदा** तस्मिन् काले, **इषुः** सङ्क्रान्तभगवत्कोपो धनुषि संहितश्शरः, **रोषेण वै** रोषकार्यभूतेन तृतीयनयनाग्निनैव **तेषु** प्रकृतेषु **शत्रुषु दाहं** भस्मी-भावं, **श्रयत्सु** प्राप्नुवत्सु, **सगिरिवनोदधि** गिरिभिः पर्वतैः वनैररण्यैरुदधि-भिः समुद्रैः तदुपलक्षितैः पदार्थान्तरैश्च सहितं, **जगत् कबलीकर्तुमर्चिः** ज्वालाम् **आतनोत्** अकरोत् । प्रसारयामासेत्यर्थः । **हन्त** । विषादे हन्तशब्दः । महत् कष्टमापतितमित्यर्थः । कीदृशः **अधिकबली** अत्यन्तं बलवान् केनाप्य-निवार्यप्रसर इत्यर्थः ॥ ४९ ॥

अथ त्रिभिः श्लोकैः तद्दहनसम्भ्रान्ता देवर्ष्यादयः तत्प्रशमनाय प्रावर्तन्ते-त्याह —

**अकृत गिरस्तदनु जनस्त्यज रोषं पाहि हर निरस्तदनुज नः ।**
**जगदतिरेकोपेते भस्मीभवतीव गुरुतरे कोपे ते ॥ ५० ॥**

---

* 'रोषेण स च तदा' इति मूलकोशपाठः.

अकृतेति । तदनु अस्त्रज्वलनानन्तरं, **जनो** देवर्ष्यादिः, **गिरो** वचनानि, **अकृत** कृतवान् । भगवन्तमुक्तवानित्यर्थः । गिर एव दर्शयति— **हे हर निरस्तदनुज!** निगृहीतासुर! । दनुजनिरास एव ते करणीयः, अतिप्रसङ्गो न कार्य इत्यभिप्रायेणैव सम्बोधनं कृतम् । **ते** तवातिरे**कोपेते** अतिरेक आधिक्यं तेनोपेते सहिते, अत एव **गुरुतरे** सोढुमशक्ये, **कोपे** शरसङ्क्रान्ते कोपाग्नौ, **जगद् (भस्मीभवतीव)** भस्मीभवदिव वर्तते । **तन्नः** अस्मान्, **पाहि** त्रायस्व । किं कृत्वा रक्षणीया यूयमित्यत्राह— **त्यजेति** । **रोषमसुरजनितं** क्रोधं, **त्यज** संहर । रोषत्यजनमेवास्मद्रक्षेति भावः ॥ ५० ॥

**शिखिनिकरोपम! मुञ्च श्रीकण्ठ! त्रिपुर एव रोषममुं च ।**
**जगदायास्यत्यन्तं तदन्यथा चेदतश्च यास्यत्यन्तम् ॥ ५१ ॥**

**शिखीति** । हे **शिखिनिकरोपम!** कोपेनोष्मायमाणत्वादग्निप्रकरतुल्य! हे **श्रीकण्ठ!** नीलकण्ठ! **अमुं** जगद्घस्मरार्चिर्मालाशालिनं, **रोषं च** तृतीयनेत्राग्निवत् शरमपि, **त्रिपुर एव मुञ्च**, न जगति । अमोचने दोषमाह— **तदन्यथा चेदिति** । तस्मात् शरमोचनादन्यथा अन्येन प्रकारेण यदि । क्रियते इति शेषः । **अतश्च** एतस्माच्छरादेव(जगत्) **अन्तं यास्यति** प्राप्स्यति । जगद्विशिनष्टि— **आयास्येति** । अत्यन्तमायासि शरानलज्वालालीढप्रायत्वात् क्लेशयुक्तम् ॥ ५१ ॥

प्रीतिमुद्बोध्य क्रोधमपनेतुं भगवतो महत्त्वमाविष्कुर्वन्नाह —

**रणभूमिषु चापादि ग्राह्यं यद्वस्तुजातमिषुचापादि ।**
**सर्वं केळीयं ते पुरो यदेकस्फुलिङ्गके लीयन्ते ॥ ५२ ॥**

**रणभूमिष्विति** । **रणभूमिषु ग्राह्यं** गृहीतुं योग्यम्, **इषुचापादि सर्वं वस्तुजातं** पदार्थसमूहः, **आपादि** उत्पादितं **यद् इयं ते** तव, **केळी** क्रीडैव । **च**शब्दः पादपूरणार्थः । कुत एतदवगतमित्यत्राह— **पुर इति** । **पुरः** पुराणि, **एकस्फुलिङ्गके** एकस्मिन्नेव स्फुलिङ्गे अल्पेऽग्निकणे ।

अल्पार्थे कः । लीयन्ते नश्यन्तीति (यद्) यस्म त् । यद्यप्येवं तथापि अस्मदनुग्रहार्थं शरमोक्षः कार्य इति शेषः । उक्तं च लैङ्गपुराणे—

"सोमश्च भगवान् विष्णुः कालाग्निर्वायुरेव च ।
शरे व्यवस्थिताः सर्वे देवमूचुः प्रणम्य तम् ॥
दग्धमप्यथ देवेश! वीक्षणेन पुरत्रयम् ।
अस्मद्धितार्थं देवेश! शरं मोक्तुमिहार्हसि ॥"

इति ॥ ५२ ॥

अथ द्वाभ्यां श्लोकाभ्यां शिवो देवप्रार्थनां सफलीचकारेत्याह—

**इत्थं सुरवाचारं नतमृषिसङ्घञ्च वीक्ष्य सुरवाचारम् ।**
**उत्थितमधियागारि प्रभुणा रोषार्चिरुत्तमधियागारि ॥ ५३ ॥**

**इत्थमिति** । **प्रभुणा** शिवेन, **इत्थम्** अनेन प्रकारेण, **सुरवाचा** सुराणां वाचा वचनेन हेतुना, **अरम**त्यर्थं, **नतं** प्रह्वीभूत**मृषिसंघं वीक्ष्य** च नतस्य ऋषिसङ्घस्य वीक्षणाच्च हेतो**रधियागारि** । विभक्त्यर्थेऽव्ययीभावः । यागारयोऽसुराः तेषु, **मूर्च्छितं** वृद्धिं प्राप्तं, **रोषार्चिः**, कोपाग्निज्वाला, **अगारि** निगीर्णम् । ननु क्त्वाप्रत्ययस्य वाच्योऽर्थो भाव एव । अव्ययकृतो भावार्थत्वाद् । द्योत्यार्थस्तु पूर्वकाल एव । तत् कुतस्त्येयं हेत्वर्थता । उच्यते—क्त्वाप्रत्ययान्तस्य यत् क्वचिद्धेत्वर्थत्वं दृश्यते तन्न पदार्थः । अपि तु वाक्यार्थसामर्थ्यादायातमेव । ऋषिसङ्घं विशिनष्टि—**सुरवेति** । शोभनो रवः स्तुतिरूपः शब्दश्चाचारोऽञ्जलिबन्धनमस्कारादिरूपो व्यापारश्च यस्य स तथा । प्रभुं विशिनष्टि—**उत्तमधियेति** । उत्तमा शुद्धसत्त्वमयत्वादुत्कृष्टा धीर्बुद्धिर्यस्य स तथा । तादृशोऽसौ कथं न प्रसीदतीति भावः ॥ ५३ ॥

**त्रस्तरिपुं सारचितं शरं वपुर्यस्य परमपुंसा रचितम् ।**
**त पुर्यामासुर्यां स मुमोच सुरा न दारयामासुर्याम् ॥ ५४ ॥**

---

१. मूर्च्छितमिति व्याख्यानुसारी पाठः.

अस्तेति । स शिवः, तं शरं, तस्याम् **आसुर्याम्** असुरसम्बन्धिन्यां, **पुर्यां मुमोच** विसृष्टवान् । पुरीं विशिनष्टि—सुरा इति । **यां** पुरीं, **सुरा** देवाः, न **दारयामासुः** न विदारितवन्तः सामर्थ्याभावात् । तादृश्याः तस्या विदारणे भगवतोऽन्यः कः शक्नुयादिति भावः । शरं विशिनष्टि—वपुरिति । **यस्य** शरस्य, **वपुः** स्वरूपं, **परपुंसा** विष्णुना करणेन **रचितं** निर्मितम्, अत एव **सारचितं** सारेण स्थिरांशेन चितं व्याप्तम्, अत एव **त्रस्तरिपुं** त्रस्ता भीता रिपवः यस्मात् स तथा ॥ ५४ ॥

अथ प्रस्तुतं कार्यं निर्वृत्तमासीदित्याह—

**कृतदानवतापतति क्षुरेऽत्र दहनेन मूर्च्छनवता पतति ।**
**साट्टं सारारि पुर्या पेते पुरतः परीतसाररिपुर्या ॥ ५५ ॥**

**कृतेति** । **अत्र** भगवता मुक्तेऽस्मिन्, **क्षुरे** शरे, **मूर्च्छनवता** वृद्धियुक्तेन, **दहनेन**ाग्निना सह, **कृतदानवतापततिं** कृता दानवेषु तापानां ततिस्समूहो यथा भवति तथा, **पतति** पुरत्रयं प्राप्नुवति सति, तया **पुर्या** पुरत्रयेण, **पुरतो** भगवदग्रे, **साट्टम्** अट्टो गृहविशेषः तेन सह वर्तमानं यथा भवति तथा च, **सारारि** अररीभिः कवाटैः तदुपलक्षितैरनुक्तैरवयवैश्च सह वर्तमानं यथा भवति तथा च, **पेते** भस्मीभूय भूमौ पतितम् । पुरीं विशिनष्टि—परीतेति । या पुरी **परीतसाररिपुः** परीताः परितः प्राप्तः सारो बलं यैस्ते तथा परीतसारा बलवन्तो रिपवो जगद्वैरिणोऽसुरा यस्याः सा तथा । दैवे प्रतिकूले पुरुषकारेण किञ्चिदपि नोपक्रियते इति भावः ।

"अट्टो नातिशये घाते क्षौमसंज्ञगृहान्तरे ।
शुष्कस्फुटितभूमागे त्रिषु पक्वौदने तु नपुं ॥"

इति,

"अथ पुंसि स्यादररः सोमसंज्ञके ।
यज्ञाङ्गेऽग्नौ च युद्धे च लोहलोहशलाकयोः ।
अपि क्लीबे कवाटे तु स्यात् स्त्री शण्डेऽररी इति ॥
आरायामररा स्त्र्येव शीघ्रे स्याद् भेद्यलिङ्गकम् ।"

इति च **केशवः** ॥ ५५ ॥

अथ हृष्टानां देवादीनां व्यापारमाह —

**अथ सुतरामुदराणि प्लुष्टारिगणान्यधः पुरामुदराणि ।**
**दृष्ट्वा वरदेवर्षिव्रातैः पुष्पं प्रभौ च वरदेऽवर्षि ॥ ५६ ॥**

**अथेति** । अथ त्रिपुरदाहानन्तरं, **वरदेवर्षिव्रातैः** वराणां श्रेष्ठानां देवानामृषीणां च व्रातैः समूहैः, **प्लुष्टारिगणानि** प्लुष्टो दग्धो अरिगणो येषु तानि, **पुरां** पुराणाम्, **उदराणि** अन्तर्भागान्, **अधो दृष्ट्वा** भूमौ पतितानि विलोक्य, **सुतरामत्यर्थम्, उदराणि** भक्तिहर्षाभ्यां परवशीभूतैः सद्भिः 'जय जय महादेव! जगत्त्राणैकधुरन्धर पार्वतीवल्लभ! त्वमेव न शरणम्, एवमेवास्मान् त्रायस्व' इत्याद्युच्चै रणितं शब्दितम्, **प्रभौ** जगत्स्वामिनि शिवे, **पुष्पमवर्षि च** । कीदृशे । **वरदे** पुरत्रयदाहात् सर्वेषामभीष्टप्रदे ॥ ५६ ॥

अथ श्लोकद्वयेन पुरदहनमुपसंहरन् भगवतः प्रवृत्तिविशेषमाह —

**प्लुष्ट्वा पूर्वसुरसदः त्रिपुरघ्नः सुरगणाय पूर्वसुरसदः ।**
**मुदमधिकामारौकः स्वञ्च न भक्तोऽत्र भवति कामारौ कः ॥५७॥**

**प्लुष्ट्वेति** । **त्रिपुरघ्नः** शिवः । तदानीं शिवः त्रिपुरघ्नवाच्यताम् अध्यगच्छदिति त्रिपुरघ्नशब्देन निर्दिष्टः । **पूर्वसुरसदः** पूर्वसुरा असुराः तेषां सदः समूहः । **प्लुष्ट्वा** दग्ध्वा, **अधिकां मुदमार** । साध्यस्य कर्मणः साधितत्वात् प्रभूतां प्रीतिमाप **स्वमात्मीयमोकः** स्थानं **चार** । कीदृशः । **सुरगणाय पूर्वसुरसदः** पूः स्वर्गः वसूनि धनानि रत्नानि च रसं तज्जन्यं सुखं च ददाति (इति) तथा । पूर्वमसुराहृतत्वात् पूरादिकं तदा भगवता दत्तमेवेत्यर्थः । इत्थं भगवतो भक्तेष्वनुग्राहकताम् अभक्तेषु निग्राहकतां च निरूप्य सर्वैरपि भगवति भक्तैरेव भवितव्यम् इत्युपदेष्टुं कविराह — **नेति** । अत्रेत्थं भक्तानुग्राहके भक्तिहीननिग्राहके चास्मिन्, **कामारौ** शिवे, **कः** पुरुषो, **भक्तो न भवति** । सर्वोऽपि भक्तो भवत्येव । सर्वैरेव भक्तैरेव भवितव्यमित्यर्थः । स्वप्रातिकूल्यानुकूल्याचरणमेवास्य निग्रहानुग्रहयोरुपाधिः न तु सुर(ासुर)जातिभेद इत्येतत् कामारिपदेन द्योत्यते ॥ ५७ ॥

